# सारस्वती सुषमा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

## तन्त्रशास्त्रविशेषाङ्कः

[ पुनर्मुद्रणम् ]

सम्पादकः

प्रो. नरेन्द्रनाथपाण्डेयः



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

## तन्त्रशास्त्रविशेषाङ्कः

[ पुनर्मुद्रणम् ]

सम्पादकः

**प्रो. नरेन्द्रनाथपाण्डेयः**

निदेशकः

अनुसन्धानसंस्थानस्य

शिक्षण-शोध-प्रकाशन-संस्थानस्य च




**वाराणस्याम्**

**२०६६ तमे वैक्रमाब्दे** **१९३१ तमे शकाब्दे** **२०१० तमे खैस्ताब्दे**

**मूल्यम् : १००.०० रूप्यकाणि**

# सम्पादकीयम्

अथेदं विदितमस्ति जिज्ञासूनां यत् तन्त्रविशेषाङ्को भवतां बहूनामनुरोधेन विश्वविद्यालयेन पुनर्मुद्रणेन प्राकाश्यं नीयमानो भवतां जिज्ञासां तत्त्वबुभुत्साञ्च सम्पाद्यास्माकं मनोमोदाय कल्पिष्यते। अस्यां पत्रिकायां प्रायशो गभीरा निबन्धाः प्रकाश्यन्ते आद्रियन्ते च सबहुमानं जिज्ञासुभिः। तथापि एतस्याङ्कस्य पुनः प्रकाशनार्थं बहुभिर्वाग्व्यापारेण पत्रद्वारा मित्रपरम्परया चानुरुद्धा वयं विशेषाङ्कमिमं भवतां पुरस्सरं पुनरानीयाऽऽशास्महे एतस्याध्ययनेनानुशीलनेन च सन्तुष्टा भवन्तः सर्वेऽप्यस्माकं मोदं सारस्वतप्रेम च वर्धयिष्यन्ति।

विदाङ्कुर्वन्तु भवन्तो यत् १९६५ तमखिस्ताब्दस्य मार्चमासे अस्मिन् विश्वविद्यालये तदानीं वाराणसेयसंस्कृतविश्वविद्यालय इति नाम्ना प्रथितेऽखिल-भारतीयतन्त्रसम्मेलनमायोजितमभूत्। सम्मेलने देशस्य नानादिग्भ्य आहूता विद्वांसो न केवलं तान्त्रिकं वाङ्मयं परिशील्य गभीरान्निबन्धान् प्रस्तुतवन्तः, अपि तु तन्त्रशास्त्रे निहिताः प्रयोगा अप्यत्र तैः प्रदर्शिताः, सिद्धयश्च काश्चन कैश्चिद् विद्वद्भिर्लोकचमत्कृतिहेतवः प्रदर्शिताः। तेन तान्त्रिकस्य वाङ्मय-स्योभयविधस्यापि सम्प्रदायस्य रक्षणं तदानीमासीदित्यनुमातुं शक्यते। अस्य कथनस्य नायमभिप्रायो यदिदानीमयं सम्प्रदायो लुप्तो जातः, अनुदिनं हीयमानं विरलतां गच्छतीति कथनं मन्ये श्रोतॄणामुद्वेगकरं न भवति।

वैदिकीनां तान्त्रिकीणाञ्च सपर्याणां सम्प्रदायानुसारमनुसरणेनास्माभिः पुरुषार्थसिद्धिः कर्तुं शक्यत इति वर्तते शास्त्रसिद्धान्तः, श्रीमद्भागवते वैदिकी तान्त्रिकी मिश्रा च पूजापद्धतिरुल्लिखिता वर्तते। तेन विभागत्रयवत्याः पूजायाः सम्प्रदायः सूचितो भवति। सम्प्रदायस्य च नित्येश्वरप्रवर्तितत्वात् संरक्षितत्वाच्च न भवति सर्वथा विलोपशङ्काऽस्माकमीश्वरसामर्थ्यमनुमिमानानाम्, तथापि वैरल्यशङ्का तु भवति सम्प्रदायह्रासदर्शनेन।

तन्त्रजिज्ञासवो न केवलं शास्त्रजन्यपरोक्षज्ञानेन तादृशं सन्तोषमामोदञ्च लभन्ते, यादृश आनन्दस्तैः स्वस्मिन् तन्त्रप्रयोक्तृत्वं प्राप्य लब्धुं शक्यते। वक्तृत्वप्रयोक्तृत्वैश्वर्ययोगाच्च त्रिधाः पूज्या भवन्तीति जयमङ्गलोक्तदिशा लोके पूज्यतानिमित्तत्वेनावधारितानां त्रयाणां वक्तृत्वयोगो मध्ये उच्चारितो मन्ये

दर्शनपरिषदा, ३९ साधनापरिषदा, २० संस्कृतिपरिषदा च सम्बद्धा आसन्। उपलब्धाः सर्वेऽपि निबन्धाः, कार्यविधिविवरणम्, तन्त्रप्रदर्शनीपरिचयादिकं च स्वतन्त्रग्रन्थरूपेण प्रकाशीक्रियेतेति वर्तते मनीषा तन्त्रसम्मेलनायोजकानाम्। अस्मिंस्तन्त्राङ्के वाराणसेयसंस्कृतविश्वविद्यालयस्य योगतन्त्रविभागाध्यक्षैर्महामहोपाध्याय**श्रीगोपीनाथकविराज**महोदयैः परिदृष्टाः कतिपये विशिष्टा निबन्धाः प्रकाश्यन्ते। परिचर्चागोष्ठ्यध्यक्षाणां **श्रीगोविन्दगोपालमुखोपाध्याय**महोदयानां भाषणं विलम्बेनोपलब्धमस्माभिः। अतोऽध्यक्षीयभाषणानां सरणौ न तत्प्रकाशयितुं पारितमिति सीदामो वयम्। तदत्र **'अजपारहस्यम्'** इति शीर्षकेण निबन्धसरणौ द्रष्टव्यम्।

उत्तरप्रदेशराज्यपालैर्महामहिमश्रीविश्वनाथदासमहोदयैः स्वीये उद्घाटनभाषण उक्तं यत्—'पुराणेषु तन्त्र(विज्ञान)प्रभावेण महद्भिः सैनिकैरनुष्ठिता अद्भुतप्रयोगा अलौकिकचमत्काराश्चोल्लिखिताः सन्ति' (पृ. ५५) इति, 'पुरातन(तन्त्र)-विज्ञानस्य संस्कृतेश्चोपासकैरुपक्रान्तस्य कस्यचिदपि विज्ञानस्य साधनायाश्च प्रोत्साहनाय जना उपासकाश्चोभयेऽपि नूनं सन्नद्धा भविष्यन्ति' (पृ. ५६) इति च। उपकुलपतिभिः **श्रीसुरतिनारायणमणित्रिपाठि**महोदयैश्च स्वागतं व्याहरद्भिरुक्तं यत्—'तन्त्राणां परिशीलनं देशे पुनः सम्यक् प्रकारेण प्रवृत्तं भविष्यति, तान्त्रिका आचार्या जनसम्पर्के आगमिष्यन्ति, तन्त्रिकीणां साधनानां च पुनःप्रतिष्ठा प्रचारश्च भविष्यतः' (पृ. ४) इति। केनोद्देश्येनैतत्सम्मेलनमायोजितमित्येभिः कतिपयैर्वाक्यैरेव स्फुटीभवति।

अस्मिंस्तन्त्राङ्के त्रिंशत्परिमिता निबन्धा भाषणानि च प्रकाशितानि। प्रधानाध्यक्षैः परिषदध्यक्षैश्च गभीरांस्तान्त्रिकविषयानवलम्ब्यैव स्वकीयानि भाषणानि निबद्धानि। अन्येषु निबन्धेषु द्वौ कुण्डलिनीविज्ञानसम्बन्धिनौ, चत्वारस्तन्त्राणामागमानाञ्च संस्कृतीतिहासस्वरूपभेदोपभेदमहत्त्वपरिचायकाः, चत्वार एव जपस्याजपाविज्ञानस्य च स्वरूपविमर्शकाः सन्ति। 'जैनेषु तन्त्रसाधना तद्गता आचाराश्च' इत्यस्मिन् निबन्धे विविधानां जैनतन्त्रग्रन्थानां तद्गतानामाचारादीनां च शोभनः परिचयो दृश्यते। 'शाक्ताख्यो वैकल्पिकपथक्रमः' इत्यत्र प्रत्यभिज्ञादर्शनीयेषु शैवशाक्ताणवाख्येषूपायत्रयेष्वन्यतमस्य निमीलनोन्मीलनसमाध्याख्यस्य शाक्तोपायस्य सरलया दार्शनिकपद्धत्या प्रतिपादनं भवति। 'शिवाभासवादः' न्यायवैशेषिकसांख्यवेदान्तादिसिद्धान्तापेक्षया काश्मीरशैवसिद्धान्तस्य किमपि वैशिष्ट्यं निर्दिशति। अत्र शक्तिरेव परं तत्त्वमिति भास्कररायस्य सिद्धान्त इत्युक्तम्। तत्र, योगिनीहृदयसेतुबन्धे तेनैव—'पूर्वं कृतः परशिवनिरासस्तु शक्तिनिरासवादिनो

जल्पकथया मुखमुद्रणमात्रार्थो न तु वादकथया' (पृ. २३) इत्युक्तत्वात्। 'पारमेश्वरागमसिद्धान्तसार:' स्वशीर्षकमन्वर्थयन् संक्षेपेण शैवशाक्तकाश्मीर-दर्शनसिद्धान्तान् परिचाययति। 'पारमितायानतन्त्रयानयो: साधर्म्यवैधर्म्ये', 'पुराणेषु षट्चक्रचिन्तनसमीक्षा', 'देहस्थमूलाधारादिचक्राणां विवरणम्', 'समयाचारकौलाचारयोर्भेद:' इति चतुर्षु निबन्धेषु विषय: शीर्षकेणैव स्फुटीभवति। 'सिद्धावधूतानां दार्शनिकसिद्धान्त:' इत्यत्र सिद्धावधूतपदेन नाथयोगिन: परिगृहीता:, 'श्रीदेवीपूजाप्रकार:' इत्यत्र च श्रीदेवी त्रिपुरसुन्दरी। 'सौभाग्यचिन्तामणि:' तदाख्यं तन्त्रं तद्विषयांश्च परिचाययति। 'तान्त्रिकभावाचारसमीक्षा' इत्यत्र दिव्यवीरपशुभावा दक्षिणाद्याचाराश्च प्रतिपाद्यन्ते। 'मन्त्रार्थनिर्देश:' योगिनीहृदये मन्त्रसङ्केते प्रतिपादितान् मन्त्राणां षडर्थान् विशदयति। तदेवं विविधागमतन्त्राणां तद्गतानां विषयाणाञ्च परिचयमुपस्थापयन्नेष तन्त्राङ्क: सुधियां पाठकानां मनांस्यावर्जयेच्चेत् सफलोऽयमुद्यमो मन्येत।

कुलपतिभि: **श्रीविश्वनाथदास**महोदयै: स्वकीये उपसंहारभाषणे तन्त्रसम्मेलनमुद्दिश्य किमपि नैराश्यं व्यक्तीकृतम्। अस्मिन् सम्मेलने चत्वारि दिनानि यावद् राज्यपालमहोदयेन यद्यदुक्तं तेनेदं ज्ञायते यत्तन्त्रशास्त्रस्य सैद्धान्तिकेनाध्ययनेन सह प्रायोगिकं फलमपि तस्याभिलषन्ति ते। पुराणानि भारतीयज्ञानस्य विश्वकोश इति परिगण्यन्ते। तथैव तन्त्रशास्त्राणि भारतीयविज्ञानस्य विश्वकोशभूतानीति सत्यं सत्वरमेव सुधीभिर्भारतीयै: स्वीकर्तव्यम्। सैद्धान्तिकमध्ययनं ज्ञानस्यैव वरम्, विज्ञानस्य तु प्रायोगिकेणाध्ययनेनैव प्राधान्येन भवितव्यम्। मोहनोच्चाटनादीनि षट्कर्माणि तन्त्रशास्त्रस्य मुख्या विषया:। सहैवात्र विषप्रतीकारोपाया:, नानाकार्यसम्पादका गुटिकाञ्जनप्रभृतय:, अभिचारादिप्रयोगाश्च दृश्यन्ते। प्रायोगिका इमे विषया:। राज्यपालमहोदयेन स्वकीये उपसंहारभाषणे प्राचीने भारते निर्मितानां बृहदाकाराणां मन्दिराणां लोहस्तम्भादीनां च निर्मितिश्चर्चिता। केन नाम विज्ञानेनैतत् सम्पन्नम्, यत्राधुनिकवैज्ञानिका अपि चकितचकिता इव दृश्यन्ते। अशोककालिकानां स्तम्भादीनां गुहाभित्तीनां च पाषाणानां मसृणता, लोहस्तम्भादीनां वातातपवर्षास्वपि सहस्रं वर्षाणि यावद्विकृतिमलभमानानां निर्माणम्, अजन्ताभित्तिचित्रेषु समुपयुक्तानां वर्णानां तत्रत्यचित्राधार-प्रस्तरेषूपलिप्तानां लेपानाम्, एवमादिकानां चान्येषामाश्चर्यजनकानां कार्याणां निष्पत्तिर्येन नाम विज्ञानेन निष्पन्ना, तद्विज्ञानं तन्त्रशास्त्रान्तर्गतमेव मन्यन्ते राज्यपालमहोदया:। अस्यैव विज्ञानस्य पुनरुज्जीवनं कामयन्ते ते। अत्र तान्त्रिकाणां विदुषामुपासकानां च साहाय्यं नितान्तमपेक्षितम्।

न हि सर्वं रहस्यमेकत्र स्थापनीयम्, न च सर्वथा गोप्यमित्याचार्याभिनवगुप्तपादोक्तदिशा शास्त्रेष्वनेकानि रहस्यानि साम्प्रतमपि विकीर्णान्युपलभ्येरन्। आध्यात्मिकानां रहस्यानामान्तरयागसम्बन्धिनां मा नाम भवतु सार्वजनिकमुद्घाटनम्, अत्रत्यानां भौतिकानां वैज्ञानिकानां विषयाणां तु प्रायोगिकमध्ययनं नितरामपेक्षितम्। वृक्षेभ्य ओषधीभ्यो मन्त्रेभ्यो यन्त्रेभ्योऽन्येभ्यश्च नानासाधनेभ्यो निश्चितेषु नक्षत्रयोगादिषु समुपलब्धेभ्यो विषोपचारप्रभृतीनि नानाकार्याणि साध्यन्ते। निश्चितेषु नक्षत्रयोगादिषु समुपलब्धानामोषधीनां महिमा आयुर्वेदेऽपि श्रूयते। शीघ्रमेव वाराणसेयसंस्कृतविश्वविद्यालये आयुर्वेदविभागः स्थापयिष्यते। अत्र सर्वेषामेषां विषयाणां प्रायोगिकमध्ययनमपि नितान्तमपेक्षितम्। अगदतन्त्रं तन्त्रशास्त्रेण संयोजितं सत् सर्वाङ्गपूर्णं सञ्जायेत।

तान्त्रिकैः प्रयोगैर्योगाभ्यासेन चाणिमादिसिद्धीनामुपलब्धिः श्रूयते। किमत्र तत्त्वमिति रहस्यावृतमास्ते। रसेश्वरदर्शनादिषु सन्ति रासायनिकाः प्रयोगा नानाकार्यसाधकाः। तान्त्रिकस्यास्य विज्ञानस्य सार्वजनिक उपयोगोऽवश्यं विधातव्यः। तदर्थं निधानवद् गोपितानामद्याप्यप्रकाशितानां वैज्ञानिकानां ग्रन्थानां प्रकाशनं सत्वरमेव क्रियेत, नानाविधकार्यसम्पत्तये तत्र प्रतिपादितानामुपायानां प्रायोगिकमध्ययनं चावश्यमेव कर्तव्यम्। विशालस्य भारतस्य विभिन्नेभ्यः प्रान्तेभ्योऽशीतिपरिमिता विद्वांसोऽत्र समागताः। अत्रागत्य तैः किमुपलब्धं किं वा कृतमिति विचारयिष्यन्ति ते। तन्त्रशास्त्रस्य कोऽपि सामाजिक उपयोगो वर्तते न वेति तेऽन्ये च तत्परिवेशिनश्चिन्तयिष्यन्ति। तन्त्रशास्त्राण्यन्याश्चोपेक्षिता भारतीया विद्याः साम्प्रतं पुनरुज्जीविताः स्युरित्याशायाः सञ्चारश्च तेषु भविष्यति।

भारतीये ज्योतिर्विज्ञाने, चिकित्साविज्ञाने, तन्त्रविज्ञाने, शिल्पविज्ञानादिषु च पाश्चात्त्यविज्ञानापेक्षया कानि तत्त्वानि महत्त्वाधायकानि प्रायोगिकमध्ययनमपेक्षन्त इति गभीरस्यास्य विषयस्य निर्णयो न कस्यापि सम्मेलनस्य विषयः। अत्र किमपि निश्चेतुं प्रतिभाशालिनो विद्वांस एव क्षमाः। तन्त्रशास्त्रयोगशास्त्रयोर्भारतीयाया राजनीतेश्चाध्ययनाय प्रशासनेन वाराणसेय-संस्कृतविश्वविद्यालये कापि योजना प्रवर्तिता। एवमेव ज्योतिर्विज्ञान-चिकित्साविज्ञान-शिल्पविज्ञानादीनां लुप्तप्रायाणां भारतीयानां विज्ञानानां पुनरुद्धाराय प्रयत्येत चेत्, शनैः शनैरेषां भारतीयानां विज्ञानानां सम्भूय समुत्थानं सम्पद्येत।

●

# विषयानुक्रमणी

// सारस्वती सुषमा

वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

| २० वर्षः | ज्येष्ठपूर्णिमा, संवत् २०२२ | १ अङ्कः |
|---|---|---|

# स्वागतभाषणम्

आदरणीयाः कुलपतयः, प्रतिकुलपतयः, तन्त्राणां मर्मविदो विद्वांसः, तान्त्रिके वाङ्मये आस्थाशालिनो महानुभावाः सज्जनाः, देव्यश्च !

अयं हि महतो हर्षस्य विषयो यदद्य वयमस्माकं पूर्वजैः महता प्रयत्नेन सुमहत्या साधनया च उपार्जितायाः चिरसञ्चितायाश्च तन्त्रविद्यायाः सम्बन्धे विमर्शं कर्तुम्, तस्या विशिष्टविद्यायाः पुनः यथापूर्वं प्रतिष्ठापनस्य उपायान् निश्चेतुम्, तद्विषये जनचेतनां सजीवयितुं जागरयितुं च अस्मिन् तन्त्रसम्मेलने विश्वविद्यालयस्य विद्यामये पावने प्राङ्गणे सोत्सवं समवेताः स्मः। तत्र सर्वप्रथममस्य महतो विश्वविद्यालयस्य सर्वविधसदस्यानां पक्षेण आत्मनः पक्षेण च स्वागतं व्याहरन् भवतां समेषामेव सज्जनानां हार्दिकं सभाजनं करोमि। विश्वसिमि च बाह्योपकरणसम्पदाविधुरमपि श्रद्धया समृद्धमस्मदीयं सम्मानभावं प्रमुदितेन मनसा भवन्तः स्वीकरिष्यन्ति।

---

१. वाराणसेयसंस्कृतविश्वविद्यालयेन आयोजितस्याखिलभारतीयतन्त्रसम्मेलनस्यावसरे ( ८-३-६५ दिनाङ्के ) स्वागताध्यक्षपदेन प्रदत्तमिदं भाषणं वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिना श्रीमता सुरतिनारायणमणित्रिपाठिमहोदयेन।

—सम्पादकः।

महानुभावाः !

भवादृशां विद्वज्जनानां नैतन्मनागपि तिरोहितं यत् तन्त्रविद्या भारतवर्षस्य प्रधानतमविद्यानामन्यतमा, तान्त्रिकं वाङ्मयं भारतीयस्य महतो वाङ्मयस्य महत्त्व-

पूर्णमङ्गम्, तान्त्रिकी संस्कृतिश्च भारतस्य परमपवित्रायाः चिरप्राचीनायाः संस्कृति-त्रिपथगाया एका मुख्या धारा। अतस्तन्त्रविद्यायास्तान्त्रिकसाहित्यस्य तान्त्रिक्याः संस्कृतेश्च संरक्षणप्रचारणे स्वतन्त्रभारतस्य आवश्यकं कर्तव्यमाकलय्य अनेन विश्वविद्यालयेन दर्शनशास्त्रस्य, विशेषेण तन्त्रशास्त्रस्य च विशिष्टविदुषां म० म० श्रीगोपीनाथकविराजमहोदयानामाध्यक्ष्ये योगतन्त्रविभागस्य प्रतिष्ठापनम् अधुनैव कृतम्।

तदस्मिन् महनीये तन्त्रशास्त्रस्य शैक्षिके आयोजने भवादृशानां तन्त्रविद्याया मर्मविदां विदुषां तन्त्रसाधकानाम् आचार्याणां च मार्गनिर्देशः सुलभो भवेदिति भावनया इदं तन्त्रसम्मेलनम् आयोजितम्, यत्प्रसङ्गेन अद्य संस्कृतविद्यानां समाराधन-स्थलतया प्रथमत एव पावनी अपि विश्वविद्यालयस्य भूमिर्भवतां पादपाथोजरजसा अधिकतरं पावनी सम्पद्यते।

सज्जनाः !

कुलार्णवतन्त्रस्य इदं वचः सर्वथा सुप्रसिद्धं यत्—

कृते श्रुत्युक्त आचारस्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलौ आगमसम्मतः॥

एतद्वचनानुसारेण भारतीयायाः संस्कृतेः, भारतस्य आचारपरम्परायाश्च चत्वारि मुख्यानि उपजीव्यानि प्रतीयन्ते—श्रुतिः, स्मृतिः, पुराणम्, तन्त्रं च। भारतस्य समग्रं जीवनम्, सम्पूर्णा जीवनदृष्टिः, सम्पूर्णो विकासः, परिपूर्णा संस्कृतिश्च इमान् चतुर आधारस्तम्भान् आश्रित्य अवतिष्ठन्ते। अत एतेषां समेषामेव श्रुति-स्मृति-पुराण-तन्त्राणां समानभावेन संरक्षणे प्रचारणे च कृते एव भारतीयायाः संस्कृतेः सर्वाङ्गीणं समुन्नयनं भविष्यति, नान्यथा। तत्राप्यस्मिन् कलियुगे विशेषेण पाश्चात्य-सभ्यतासम्पर्कोत्तरयुगे यदा वांशिकी मर्यादा प्रतिपदमवधीर्यते, भक्ष्याभक्ष्ययो-र्विवेकोऽसभ्यता विभाव्यते, स्पृश्यास्पृश्ययोर्विचारोऽमानुष्यं मन्यते; वर्णाश्रम-

व्यवस्था च युगभावनायाः प्रतिकूलेति मत्वा प्रतिप्रसङ्गमुपहस्यते, परमेश्वरे पुनर्जन्मनि परलोके च आस्तिक्यबुद्धिरादिमस्य अशिक्षायुगस्य अज्ञानमुद्घोष्यते, तदा यद्यस्ति भारतस्य चिरन्तनभावनाया रक्षणस्य कश्चिन्मार्गः, यद्यस्ति भारतस्य सनातन्याः संस्कृतेः समुद्धारस्य कश्चन पन्थाः, यद्यस्ति कश्चिद् भारतीयायाः सभ्यतायाः, भारतीयस्य धर्मस्य परमपुरुषार्थप्राप्तेश्च प्रकारस्तर्हि स भारतस्य तन्त्र-साहित्य एव सुप्राप्यः। अस्मिन् सन्दर्भे पार्वतीं प्रति महादेवेन उदीरितं महा-निर्वाणतन्त्रे समुपलभ्यमानं वचनमिदं सततं संस्मरणीयं यत्—

विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये।

सोऽयं कलिप्राणिनामद्वितीयपाथेयभूतस्तन्त्रमार्ग आत्मन उपयोगितायाः परमो-पयुक्त एव काले लुप्तप्रायतां गत इति महतो दुःखस्य विषयः। आगममार्गस्य अस्याः दुःस्थितेः अन्तः, तस्य सजीवः पुनरुद्धारश्च परमावश्यकः। मन्ये, सम्मेलनमिदं कश्चिदर्थक्रियासमर्थं सुगमं पन्थानं दर्शयितुं प्रयासं कुर्यात्।

तन्त्रशास्त्रस्य क्षेत्रमतीव विस्तृतं व्यापकं च। तस्य परिधौ दर्शनं विज्ञानं व्यवहारः कला साहित्यम्—एवमादयोऽनेके विषयाः समाविशन्ति। तन्त्रग्रन्थेषु सर्वप्रकाराया भौतिक्याः समृद्धेः, सर्वविधाया अध्यात्मसम्पदः, बह्वीनां विस्मयावहानां सिद्धीनां च अर्जनस्य पन्थानः प्रतिपादिताः सन्ति। तन्त्रेषु दार्शनिकविचाराणां सूक्ष्मातिसूक्ष्माणि स्वरूपाणि निबद्धानि सन्ति। वैष्णवतन्त्रस्य पाञ्चरात्रग्रन्थेषु तदुप-जीविग्रन्थेषु च प्राधान्येन विशिष्टाद्वैतस्य, शैवतन्त्रस्य कस्याञ्चित् शाखायां द्वैतस्य, कस्याञ्चिद् अद्वैतस्य, कस्याञ्चिच्च द्वैताद्वैतस्य; शाक्ततन्त्रे च प्राधान्येन अद्वैतस्य सिद्धान्ताः सुविविक्ताः समुपबृंहिताश्च सन्ति। इत्थञ्च तन्त्रशास्त्रस्य सुमहति क्षेत्र-विस्तारे सत्यपि लोकः सामान्येन मन्त्रयन्त्रादिसाधनम्, पुरश्चरणम्, उच्चाटनमारणा-दिकमेव च तन्त्रस्य विषयं मन्यते। लोकस्य अस्या धारणाया उद्भावने मन्ये, वाराहीतन्त्रस्य इदं वचनमेव मूलं यत्—

सृष्टिश्च प्रलयश्चैव देवतानां तथार्चनम्।
साधनं चैव सर्वेषां पुरश्चरणमेव च॥

षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तमागमं तद् विदुर्बुधाः॥

परन्तु तन्त्रस्य बहूनां ग्रन्थानां विषयपर्यालोचनेन इदं स्पष्टं प्रतीयते यद् वाराहीतन्त्रोक्तमिदमागमलक्षणं तन्त्रस्य अन्यविषयाणामुपलक्षणमात्रम्, तन्त्रस्य लौकिकसिद्धिफलकानामेव विषयाणां वर्णनं तत्र लौकिकफलकामानां सामान्य-जनानामभिरुचेः, श्रद्धायाः, प्रवृत्तेश्च जागरणाय; न तु तदीयक्षेत्रस्य संकोचनाय। प्रायशः सर्वासामेव विद्यानामियं रीतिः, यत् तासु जनसामान्यप्रवृत्तेरुत्पादनाय प्रथमं प्राधान्येन तत्साध्यानां सिद्धीनां तत्साधनविधीनां च वर्णनं प्रस्तूयते। अनेनैव अभिप्रायेण वेदेषु, उपनिषत्सु, पुराणेषु, योगशास्त्रेषु च लौकिकप्रयोजनानाम्, अनेकासां विद्यानाम्, आश्चर्यकरीणां सिद्धीनां च चर्चाः कृताः सन्ति। परमिदं न विस्मर्तव्यं यत् सर्वत्रैव तासां सिद्धीनां जीवनस्य परमपुरुषार्थप्राप्तौ बाधकत्व-मुक्तम्, सिद्धिषु आसक्तिं विहाय अन्तिमलक्ष्यस्य अभिमुखं निरन्तरं जागरूकीभवन-स्यैव निर्देशः सर्वत्र कृतः। अत एव तन्त्रविद्यायामास्थाशालिना लोकेनापि तन्त्रशास्त्रोक्तेषु उच्चादर्शेष्वेव आत्मनो भावना केन्द्रीकरणीया। मानवजीवनस्य पवित्रीकरणाय, सर्वतोमुखसमुन्नयनाय, विकासस्य परस्यां काष्ठायामारोहणाय च ये युगानुरूपाः सुलभा उपायाः प्रतिपादिताः सन्ति, तेषामेव परिशीलनाय सर्वविधः प्रयत्न आदर्तव्यो विद्यते।

तन्त्रसम्मेलनस्य आयोजनं विज्ञाय बहवो जनाः सम्भवतोऽनेन विचारेण अत्र आगता भवेयुर्यत् सम्मेलने भारतस्य विशिष्टास्तान्त्रिकाः समवेता भविष्यन्ति। ते च सिद्धिबलेन बहून्याश्चर्याणि प्रदर्शयिष्यन्ति, आश्चर्यमयसिद्धिजनकानां तान्त्रिकप्रयोगाणां प्रदर्शनं च करिष्यन्ति। एतद्विषये सम्मेलनादयं लाभस्तादृश-जनानां सुनिश्चित एव यत् तेऽस्य सम्मेलनस्य व्याजेन तेषां साधकाचार्याणां परिचयं प्राप्स्यन्ति, येषां कृपया यथावसरं यथास्थानं च ते तान्त्रिकसिद्धीनां प्रत्यक्षं कर्तुं प्रभविष्यन्ति। इदानीं तु सिद्धिप्रत्यक्षकामैस्तन्त्रशास्त्रस्य विदुषां पुण्येन दर्शनेन, शास्त्रीयया चर्चया, तान्त्रिकवाङ्मयस्य उद्धारोपायनिर्देशेन, अधुनावधि गुप्तानां प्रकाशमनागतानां तन्त्रग्रन्थानां परिचयप्राप्त्या, अपूर्वायास्तान्त्रिकप्रदर्शिन्याः अवलोकनेनैव च सन्तोष्टव्यम्।

एतत्तु ध्रुवमेवावधेयं यद् यदा तन्त्राणां परिशीलनं देशे पुनः सम्यक् प्रकारेण प्रवृत्तं भविष्यति, तान्त्रिका आचार्या जनसम्पर्के आगमिष्यन्ति, तान्त्रिकीणां साधनानां च पुनः प्रतिष्ठा प्रचारश्च भविष्यतः, तदा—

भोगो योगायते सम्यक् पातकं सुकृतायते ।
मोक्षायते च संसारः कुलधर्मे कुलेश्वरि ॥

इत्येतत्कुलार्णववचनानुसारेण विश्वस्य रूपमेव परिवर्तिष्यते । जगतः सर्वविधो वैज्ञानिकविकासप्रभवः संघर्षानलः शान्तिं प्राप्स्यते; मानवता च सर्वप्रकाराभ्यः सङ्कीर्णताभ्यो विमुच्य पूर्णरूपेण स्वतन्त्रा सुखिनी सुरक्षिता च भविष्यति ।

एभिरेव कतिपयैः शब्दैस्तन्त्रसम्मेलनस्य सम्बन्धे विश्वविद्यालयस्य आत्मनश्च भावनां प्रकटयन् पुनरहं भवतां स्वागतं व्याहरामि, विश्वासं चेममावहामि यद् भवन्तः स्वीयसत्कारेऽस्माकं बाह्यत्रुटीनां विचारमकृत्वा अस्माकं भवत्सम्माननाया हार्दिकमभिप्रायं बहु मन्यमानाः सम्मेलनप्रसङ्गेन वाराणस्या भागीरथ्या विश्वनाथान्नपूर्णयोः दर्शनावसरस्य, आत्मनो विचारविनिमयं सम्पाद्य तन्त्रशास्त्रीयसमाराधनायां जनरुचेर्जागराजननपुण्यस्य च लाभेनैव सन्तुष्टमानसा भवेयुरिति ।

कृत्स्नां संकीर्णतां भित्त्वा सर्वेषामेव देहिनाम् ।
भुक्तिमुक्तिविधानार्थं तन्त्रविद्या विजृम्भताम् ॥



# प्रधानाध्यक्षभाषणम्[1]

अत्र संयोजिते तन्त्रसम्मेलने मङ्गलाचरणमुपलक्ष्य तन्त्राम्नायस्यानुबन्धिकाधारपटस्य स्थूलरेखामात्रसङ्कलनम्। परिनिष्ठितसिद्धान्ताधारसत्त्वेऽपि तन्त्रागमानां मुख्यत्वेन साधनोपायनिर्देशकशास्त्ररूपेणैव व्यवहारयोग्यता व्यवस्थिता। साधनशास्त्रेष्वपि श्रीगुरुतत्त्वस्य मुख्यत्वेन व्यपदेशः। यतः साधनमार्गेषु श्रीगुरुरेव साधकानां सहायः, शरणम्, सुहृत्। अतः श्रीगुरुपादुकामुद्दिश्य जपसूत्रनामके ग्रन्थे श्लोकोऽयं व्यरचि अस्माभिः—

> भारं कर्मार्पितमतिगुरुं घोरतादिप्रवृद्धं
> मग्नामुर्वीमिव पयसि यो लीलयाऽप्युद्दिधीर्षुः।
> धत्ते बीजं श्रुतिपथचरं वर्चसे चात्ममन्थं
> क्लेशव्यूहच्छिदुरुमखभृच् श्रीगुरुः पञ्चमूर्तिः॥

प्रलयपयोधिजले निमज्जमानाया धराया भारं वोढुं तां रसातलात् समुद्धर्तुं च श्रीभगवान् वाराहरूपं परिजग्राह, तत्परिग्रहणं तु देशकालविशेषणावच्छिन्नम्, न तथा श्रीगुरोः कृपाघनमूर्तिपरिग्रहः सर्वत्र सर्वदैवानस्तमितभास्करकिरणवत्। अथवा सदा वहमानमहासमीरणवत् तस्य संभवात्। जीवेऽनादिकर्मार्पितस्तीव्रगुरुभारः, सोऽपि घोरमूढरूपाभ्यां रजस्तमोगुणाभ्यां सदा भृशं प्रवर्द्धते। तद्भारस्य वोढा च, तस्माल्लीलया समुद्दिधीर्षुः श्रीगुरुं विना नान्यः कोऽपि, अनेन श्रीगुरोर्वराहरूपेण नित्यं क्रियाकारकत्वं प्रदर्श्यते। प्रलये वेदशब्दराशिरूपेण सृष्टिबीजस्य धारणमपि मीनावतारे प्रसिद्धम्। श्रद्दधानानां शिष्याणां श्रुतिपथे बीजमन्त्रप्रदानेन श्रीगुरुस्तेषामभ्युदयनिःश्रेयसावाप्तिरूपस्य क्लेशकर्मविपाकाशयविरहितस्य नित्याव्ययजन्मनो बीजप्रदः पिता एव भवति। पुनरपि यथा समुद्रमन्थनकृतौ भगवता कूर्मरूपेण मन्थनदण्डः स्वपृष्ठेऽधारि, तथा आत्मनिरतानां ब्रह्मवर्चोलिप्सूनां शिष्याणा-

---

१. वाराणसेयसंस्कृतविश्वविद्यालयेन आयोजितस्याखिलभारतीयतन्त्रसम्मेलनस्यावसरे (८-३-६५ दिनाङ्के) प्रधानाध्यक्षपदेन प्रदत्तमिदं भाषणं स्वामिभिः श्रीप्रत्यगात्मानन्दमहाभागैः—सम्पादकः।

मात्ममन्थरूपदण्डधारणाय नित्यमेव प्रभवत्यकृपणाशेषमहिमा श्रीगुरुः। परं भागवतस्य प्रह्लादस्य भयनिरसनार्थं यथा भगवान् नृसिंहरूपेणाविर्भूय वज्राधिक-नखस्पर्शेन हिरण्यकशिपुं व्यदारीत्, तथाऽविद्यादिक्लेशपञ्चकभयार्तानां शिष्याणां निदारुणं भवभयं समूलं सविपाकं छिनत्ति श्रीगुरुः। पुनश्च, यथा उरुक्रमावतारे त्रिपाद्भूमिभिक्षाव्यपदेशेन बलेर्मखं प्रपूरयामास भगवान्, तथा शिष्याणां प्रयास-प्रपत्तिसमापत्तिरूपत्रिपाद्भिक्षाव्यपदेशेन जपादियागान् साफल्यपरिपूर्णतां नयति श्रीगुरुः। नात्र भूतभव्यकालद्वयमात्रव्याप्यत्वम्, अतो नित्यत्वम्। अत एव श्रीगुरो-रेकत्र पञ्चावतारसमवेता नित्योदिता परमानुग्रहविग्रहमूर्तिः। तस्मै श्रीगुरवे नमः।

तन्त्रविधानेषु मन्त्र एव मुख्यमन्त्री। मन्त्राणां चैतन्योद्बोधनाय समर्थविनि-योगाय च यन्त्राणामपि सविशेष उपयोगः। "ओङ्कार एवेदं सर्वं यच्च भूतं यच्च भव्यम्" इति श्रुतिप्रमाणेन ओङ्कारस्यैव सर्ववाच्यवाचकयोनित्वं सिद्धम्। अत ओङ्काररूपस्य परमराहस्यिकतनोर्विनायकस्य स्तुतिकृतावयं श्लोकः प्रागुक्तजपसूत्र-ग्रन्थेऽलेखि—

ऊर्ध्वशुण्डमधःशुण्डं द्विधा व्यावृत्तशुण्डकम्।
सर्गविसर्गसन्धीशं नौम्योङ्कारविनायकम्॥

श्रीविनायकस्य शुण्ड एव परमराहस्यिकः सङ्केतः। ओङ्कारस्य शुण्डाकृतिबले-नैव तदुपलभ्येत। शुण्डस्यापि चतुर्धा विन्यासः शक्यः कल्पयितुम्। ऊर्ध्वविन्यासेन सर्गः, अधोविन्यासेन विसर्गः, ऊर्ध्वाधोद्विधाव्यावृत्तविन्यासाभ्यां यथाक्रमं सर्ग-विसर्गसन्धी सूच्येते। श्रीविनायकस्य वाहनं मूषकोऽपि नासाविवरचारिवायु-रूपेण ओङ्कारे व्याहरणं निर्वाहयतीत्यपि सुधीभिर्विभावनीयम्। यथोपनिषदि तथा तन्त्रेऽपि साधनवीर्यसमापत्त्यै चर्याभावतत्त्वज्ञानरूपाणां तिसृणां प्रत्यग्धाराणां संगतिसम्मेलनमवश्यमेव कर्तव्यम्, "विद्यया श्रद्धया उपनिषदा वा वीर्यवत्तरं भवति" इति छान्दोग्यश्रुतिनिर्देशानुसारतः। अतो भावानुप्राणिता गुरुदैवतमन्त्रयन्त्रो-पासनाद्यङ्गवैकल्यादिविरहिता आगमसाधनेषु विशेषेण समुपदिष्टा। अत एव भावनिष्ठा-सहकृतोपासनागौरवख्यापनार्थं श्लोकोऽयं श्रीविश्वनाथान्नपूर्णायुगलाद्वैतसामरस्य-द्योतनाय तयोरङ्घ्रिसरोजेषु कृतनिवेदनः—

क्षीरोदार्णवमन्थनात् समभवत् पीयूषसन्दोहनं
श्रीरूपेण तु तस्य वण्टनकरी मातान्नपूर्णेश्वरी।

सञ्जातं गरलं स्वकण्ठकुहरे धृत्वाऽपि मृत्युञ्जये
मन्नाथे शशिशेखरे सुसमता नित्यैव विश्वेश्वरे ॥

अलं विस्पष्टार्थस्य स्पष्टीकरणेन, तथाप्यमृतगरलयोरुभयोरपि सुसमता सामरस्यं वा भगवति नीलकण्ठे सोमार्धधारिणि मृत्युञ्जये श्रीशङ्करे इत्यपि प्रत्यग्दृष्ट्या द्रष्टव्यम्। मृत्युरूपं कालकूटं स्वकण्ठे धृत्वाऽसौ स्वयं मृत्युञ्जयो भाले सोमार्धकलां धृत्वा च मृत्युञ्जयमन्त्रजापकान् स एव मृत्योरमृतं नयति, सकललब्धामृतपादांश्च अमृतान्न वियोजयति। "मृत्योर्मुक्षीय माऽमृतात्"। अतः शिवभाले शशिकलैव "स्वधां दुहाना अमृतस्य धाराम्" इति श्रौतमन्त्रस्य लक्ष्यार्थः। याऽपि श्रीचण्डीषु "अर्धमात्रा स्थिता नित्या" इति श्लोकपादेन लक्षिता, सा शङ्करमौलिविभूषणरूपा सोमार्धकला एव। अतः सा सोमार्धकलैव निखिलरहस्यमञ्जूषोद्घाटनपटीयसी कुञ्चिकेति मन्यामहे, तन्त्राम्नायेषु क्रियाज्ञानयोगोपास्तिभुक्तिमुक्तिप्रभृतिसर्वद्वन्द्वानां सुसमसमञ्जससम्मेलनं हि विधीयते। 'विषमप्यमृतायते', 'भोगोऽपि योगायते' इत्यादिभिरनन्यसाधारणवैशिष्ट्यं तन्त्रशास्त्रस्यावगम्यते।

येनैव विषखण्डेन म्रियन्ते सर्वजन्तवः।
तेनैव विषखण्डेन भिषग् वारयते रुजम् ॥

इत्युक्तमपि शास्त्रे। आगमानां प्रवक्तरि भगवति श्रीशङ्करे विषामृतयोः सम्मेलनम्, मूलतस्तयोः सामरस्यमपि विस्पष्टं परिलक्ष्यते। अस्मिन् श्लोके तदेवाभ्युपगन्तव्यम्—

यच्छम्भोरहिभूषणं शिरसि वा कण्ठे भृशं राजते
तत्पाशेन विषं गले च विधृतं गोपायिता स्वर्धुनी।
विज्ञानं नयतामृतेन हि पथा भालेन्दुमूर्ध्वं मृते-
र्गङ्गां विष्णुपदोद्भवां किमितरद् येनाहिराशीविषः ॥

शिरसि कण्ठे वा अहिर्भूषणमपि पाशरूपो भूत्वा विषं शङ्करगले विधारयति। तेनैव पाशेन जटाकलापेषु गोपायिता स्वर्धुनी। सम्यग्योगक्षेमाय तदेव विज्ञानं समाश्रयणीयं लोकैर्यद्वतेन पथा मृतेरूर्ध्वं सुधासन्दोहसारं श्रीशङ्करभालेन्दुमेव नयति जटामात्रेषु गोपायितां गङ्गामपि, या गङ्गा सत्यपि स्वयं विष्णुपादोद्भवा 'तद् विष्णोः परमं पदम्' तस्य ध्रुवैकपथप्रदर्शिनी भवति। शिववक्त्रेभ्यो विनिःसृता या आगम-

वाणी सेयमध्यात्मगङ्गा । सैव पुनः शिवशक्तिसामरस्यविज्ञानप्रसूर्जननी । किमन्येन विज्ञानेन, येन अहिराशीविष एव भवल्लोकानां भयाय क्षयाय च । अनेनागमविज्ञानस्य जडविज्ञानादिभ्यो विलक्षणताऽपि सूचिता । उभयतः प्रयोगविधानसामान्येऽपि प्रयोग-तन्त्रभेदलक्षितव्यस्यार्थस्यापि भेद इति विचारणीयम् । एतद्भेदद्वयवशादेकेन अमृतत्वस्य सनातनः पन्थाः प्रवर्तितः, अपरस्मिन् बाह्येन्द्रियभोगोपकरणबाहुल्यसृष्टि-सामर्थ्यगौरवे सत्यपि लोकानां महाविनष्टेरेव भयं क्रमवर्धमानम् । प्रयोगविज्ञानेषु बाह्यभोग्यसंग्रहसौविध्यं न वा परीक्षालब्धतथ्यतत्त्वादीनां चमत्कारित्वं तेषामुपा-देयत्वप्रतिपादनायालम्, मुख्यपुरुषार्थनिर्वहणत्वेनैव सर्वेषां प्रयोगाणामर्थप्रति-पत्तिव्यवस्थापनात् । तथापि तन्त्रप्रयोगेषु समीक्षापरीक्षाजन्यप्रत्ययस्यापि प्रामाण्यगौरवमस्त्येवेत्यत्र आगमविज्ञानस्य आधुनिकबहिर्विज्ञानादिना सह साजात्यम्, यथासम्भवं पारस्परिकोपकारकत्वमपि सुधीभिर्नोपेक्षितव्यम् । तन्त्रवादाः पदे पदे प्रत्ययमावहन्तीति स्मरणीयम् ।

शेषगन्तव्यस्य ध्रुवत्वैकत्वेऽपि 'रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणाम्' मार्गचर्याचारादिभेदाः सन्त्येव । परन्तु परिनिष्ठितसिद्धान्तविनिर्णयेषु संगति-समन्वयौ एवासाताम्, न त्वनुपपत्तिविप्रतिपत्ती । अत्र ब्रूमः—या विप्रतिपत्तयः सिद्धान्तविषयेषु दृश्यन्ते, ता आभासिक्य एव; न तु मौलिकतत्त्वाधारविषयिण्य इति । अत्रायं श्लोकः—

> तन्त्राम्नायमहाब्धिकुक्षिकलनाद् गम्भीरतत्त्वालया-
> न्नैपुण्यान्निरमायि सूरिभिरियं सिद्धान्तमुक्तावली ।
> साक्षादागमसूत्रिता प्रतिपदं स्वप्रत्ययग्रन्थिता
> मेरुर्यत्र हि सामरस्यमुभयोः सा नः श्रियै शोभताम् ॥

तन्त्राम्नायमहोदधितलदेशाद् गम्भीरतत्त्वालयात् पूर्वैः सूरिभिरियं सिद्धान्त-मुक्तावली नैपुण्येन निरमायि । साक्षादागम एवाखण्डैकहिरण्यसूत्रमस्याः । प्रतिपदं स्वप्रत्ययेनैव ग्रथिता अत्र सिद्धान्तमौक्तिकाः । आगमनिजप्रत्यययोः सामरस्यरूपकौस्तुभ-मणिरेव मालिकामध्यमेरुः । सा वरमालिका चिरमस्माकं श्रियै, न तु विसंवाद-वितण्डाविडम्बनायै, शोभताम् । अनेन शैवशाक्तवैष्णवादिसर्वसम्प्रदायानुद्दिश्याध्मातो

भवत्युदात्तगम्भीरागमशङ्खोऽयम् "संगच्छध्वं संवदध्वम्......समानी व आकूतिः" इति।

आपातविरोधपरिहारपूर्वकमागमसिद्धान्ताचारादीनां सुष्ठु समन्वयसाधनमकारि पूर्वसूरिभिः। महत्तेषामवदानं स्वेन महिम्ना प्रतितिष्ठते, का पुनर्मन्दमतीनामर्वाचीनानां मादृशां प्रवृत्तिः। तत्र श्लोकः—

वेलायामुपलेषु यस्य चयनं तस्मै वरान् मौक्तिकान्
धत्ते किं जलधिर्न मन्दमतये गोपायिता मञ्जुषा।
श्रीरामेण समुद्रबन्धनकृतौ केषां महान् वोद्यमः
केषां वा सिकताविलिप्तवपुषां दीनाल्पसेवारजः॥

अशेषागाधरत्नाकरतुल्येष्वागमशास्त्रेषु पूर्णप्रज्ञाप्रसूतानि यानि रत्नानि विराजन्ते, अर्णवस्य गम्भीराम्भो वगाह्य तेषामुद्धरणाय प्रभवति विशारदी या बुद्धिः सैव, न तु या कुण्ठाकार्पण्यदोषोपहतस्वभावा। तथापि श्रद्धया आकूत्या च सिषेविषूणां मन्दमतीनामपि दीनां स्वल्पां काञ्चिन् सेवां प्रसादेनैव गृह्णीयात्तन्त्रेश्वरी देवी भुवनेश्वरी। श्रीरामचन्द्रेण यदा समुद्रे सेतुरबन्धि, तदा नलनीलादिकपिवर्याणां महानुद्यमः सर्वलोकैरदर्शि, परन्तु क्षुद्रकाष्ठमार्जाराणां सिकतासु विलिप्तवपुषां यत्सामान्यमङ्गरज एव सेवाञ्जलिरभूद् लोकलोचनान्तरालदत्तयाऽपि तया सेवया श्रीरामस्य महान् प्रसादानुग्रहः समजनि। अतः सत्यां भावाकूत्यां सेवा लघीयस्यपि गरीयसी। 'भावग्राही जनार्दनः।'

आगमानां प्राचीनत्वार्वाचीनत्वादिविचारेऽनुत्साहितमतयोऽनवसरधियश्च वयं साम्प्रतम्। पूर्णप्रज्ञायां नित्यमेव प्रतिष्ठमानत्वान्नात्र कालाद्यवच्छिन्नत्वप्रसज्यतेति मन्यामहे। आगमविद्यासु विदेशीयानां केषाञ्चिद् भारतीयानामपि अज्ञतानिबन्धनं यत्कलङ्कविलेपनं तत्कलङ्कमोचनाय विश्वप्रचाराय च महामतेः सर-जान-वुडरफमहोदयस्य यद् महद्विचेष्टितं तेनानुप्राणिताया आगमानुसन्धानसमितेश्च तदस्माभिश्चिरकृतज्ञतया विशेषतः स्मरणीयम्।

अतिगहनरहस्यमङ्गूषेयं तन्त्रविद्या। मन्त्रयन्त्रतन्त्राणां रहस्यानामतिगभीरतलं कोऽद्धा वेत्ति, को वा परं गच्छति दुस्तरविचित्रविशालतन्त्राम्नायार्णवस्य।

अतः शिव एव सर्वं वेत्ति वेदयति, शिवा एव पारं गच्छति गमयति, शिवशिवाभ्यां नमः। अत्रेदं श्लोकद्वयम्—

त्रिवेण्यम्भसि योगेषु स्नपनं चेद्विशुद्धये।
वेदागमपुराणाख्यत्रिवेण्यां तत्प्रबुद्धये॥
मन्त्रेषु यन्त्रतन्त्रेषु निष्णातश्चेद् भवेद्वशी।
दृष्टे परावरे तत्त्वे स एव स्याच्छिवः स्वयम्॥

अतः सर्वसाधनानां शेषगम्यं पयसामर्णव इवैकमेव, तद्धि अशेषविशेषशक्तिविलासविवर्तादीनां नित्यशुद्धबुद्धाधिष्ठानरूपस्वरूपावस्थानम्। यथा कालिकायाम्—

सा काली निरुपाधिशुद्धनिलये शान्ते नरीनृत्यते
कैवल्यं विदधाति निर्गुणतया द्वैतं मरीमृज्यते।
ब्रह्मास्मीत्यवबोधखड्गमहसा मिथ्याजनीन् प्रत्यया-
नास्ते ब्रह्मणि सर्वमेव दधती चेच्छिद्यमाना स्वयम्॥ (जपसूत्रम्)।

उपसंहारे शौर्यमाधुर्ययोः काष्ठारूपिणौ रामकृष्णौ प्रार्थयामहे संयोजितेऽत्र सम्मेलने प्रयोजयिष्यमाणसर्ववागर्थप्रतिपत्तिप्रचोदनायै—

कालिन्दीरोधसीशो ललितसुरगिरां वेणुगीतैर्हरिर्यैः
शैलान् विद्रावयंस्तैः प्रकटयति परां वाचमोङ्कारयोनिम्।
सम्यक् सन्धानशूरो गमयति निधनं राघवो यो दशास्यं
प्रत्यक्चैतन्यमूर्ती वचसि विहरतामत्र तौ रामकृष्णौ॥

॥ इति शमस्तु॥



# तन्त्रदर्शनपरिषदध्यक्षभाषणम्

श्रीमन्तः श्रद्धेयाः कुलपतिमहोदयाः ! उपकुलपतिमहाभागाः ! महान्तः काशी-विद्वांसः ! तन्त्रानुरागिणश्च !

अतीवानुगृहीतमात्मानं मन्ये यदहं वाराणसेय-संस्कृत-विश्वविद्यालय-तन्त्र-दर्शनपरिषदोऽध्यक्षपदं ग्रहीतुमामन्त्रितः सम्मेलनायोजकानां महतां विदुषां सम्मत्या तत्रभवद्भिरुपकुलपतिमहाभागैः । शिष्टपरम्परागतनियमानुसारं चोपस्थितोऽहं किमपि वक्तुं तन्त्रविषयमवलम्ब्य ।

### तन्त्रशब्दार्थः

तन्त्रशब्दो विस्तारार्थकात् तनुधातोः "सर्वधातुभ्यः ष्ट्रन्" इत्युणादिसूत्रानु-सारं ष्ट्रन्प्रत्ययान्तः; तनोति तन्यतेऽनेन वेति व्युत्पत्त्यनुसारम्, यद्वा कुटुम्बधारणार्थात् तन्त्रिधातोः "भावे" (३–३–१८) इत्यष्टाध्यायीसूत्रानुसारं घञ्प्रत्ययान्तः; तन्त्रणं तन्त्र्यते यद् येन यत्र वेति व्युत्पत्त्यनुसारं तन्त्रशब्दः सिध्यति । एवञ्च तद्ग्रन्थजातं यत् तं सर्वं ज्ञानराशिं विस्तृणाति, विस्तरेण प्रकटयति, तदनुसारि कुटुम्बं समूहं बिभर्ति, तत् तन्त्रम् । ज्ञानराशीनां विस्तरेण प्रतिपादयतां ग्रन्थानां च विषयभेदाद् भवति पारस्परिको भेदः । नास्ति किञ्चिद्यत्कस्यचन ज्ञानगोचरं नास्ति । तथा च यः कश्चनापि ग्रन्थो यं कञ्चन ज्ञानविषयं विस्तरतः प्रतिपादयन् तन्त्रशब्देन वक्तुं शक्यते । तथा च सन्ति शैवानां शाक्तानां बौद्धानां प्रसिद्धानि तन्त्राणि तन्मत-प्रतिपादकानि परिगणितानि च तान्युपतन्त्रेषु वाराहीतन्त्रे, यथा—

बौद्धोक्तान्युपतन्त्राणि कपिलोक्तानि यानि च ।
अद्भुतानि च एतानि जैमिन्युक्तानि यानि च ॥
वशिष्ठः कपिलश्चैव नारदो गर्ग एव च ।
पुलस्त्यो भार्गवः सिद्धो याज्ञवल्क्यो भृगुस्तथा ॥

---

१. वाराणसेयसंस्कृतविश्वविद्यालयेन आयोजितस्याखिलभारतीयतन्त्रसम्मेलनस्यावसरे (६–३–६५ दिनाङ्के) तन्त्र-दर्शनपरिषदोऽध्यक्षपदेन प्रदत्तमिदं भाषणं डाक्टर कान्तिचन्द्रपाण्डेयमहोदयैः—सम्पादकः ।

शुक्रो बृहस्पतिश्चैव अन्ये ये मुनिसत्तमाः।
एभिः प्रणीतान्यन्यानि उपतन्त्राणि यानि च ॥ इति।

"पञ्चशिखेन मुनिना बहुधा कृतं तन्त्रम्। षष्टितन्त्राख्यं षष्टिखण्डं कृतमिति। तत्रैव हि षष्टिरर्था व्याख्याताः" इत्यादिभिस्तत्र तत्रोपलब्धैरुद्धरणैः। तथा च—

"तेषु च षष्टितन्त्रादिख्यातेष्विति। विस्तरत्वात् षष्टितन्त्रस्य संक्षिप्तरुचि-सत्त्वानुग्रहार्थं सप्ततिकारम्भः" इत्यादिभिश्चेदं सुस्पष्टं यत् सांख्यतन्त्राण्यप्यासन्। अद्वैतवेदान्तप्रतिपादकशिरोमणिभिः श्रीशङ्कराचार्यैर्लिखितम् 'गायत्रीतन्त्रम्' समुप-लभ्यते मुद्रितम्। राजनीतिकग्रन्था आख्यायिकारूपेण मित्रभेद-मित्रप्राप्ति-सन्धि-विग्रह-लब्धनाश-अपरीक्षितकारित्वादीन् प्रतिपादयन्तः पञ्चतन्त्र-तन्त्राख्यायिकादयो ग्रन्थाः स्पष्टयन्ति यद्राजनीतिसाहित्यमपि तन्त्रशब्दाभिधेयम्। तथ्यं त्विदं यद्राजनीति-रपि तन्त्रप्रतिपाद्यविषयेषु परिगणितोपलभ्यते। यथा वाराहीतन्त्रे—

राजधर्मो दानधर्मो युगधर्मस्तथैव च।
व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम् ॥ इति।

एवं यन्त्रविज्ञानमपि तन्त्रप्रतिपाद्यान्तर्गतमेव। यथा तत्रैव—

संस्थानञ्चैव भूतानां यन्त्राणाञ्चैव निर्णयः।
उत्पत्तिर्विबुधानाञ्च तरूणां कल्पसंज्ञितम् ॥ इति।

उपर्युक्ततन्त्रशब्दविवरणानुसारं भारतविषये—"भारतं प्रजातन्त्रं राष्ट्रम्" इति वाक्ये प्रयुज्यमानस्य 'प्रजातन्त्र'शब्दस्य वैयाकरणदृष्ट्या व्युत्पाद्यमानस्यायमर्थः—

प्रजा तनुते शासननियमान् यत्र, प्रजया तन्यते विस्तार्यते शासनपद्धतिर्यत्र, प्रजया तन्त्र्यते ध्रियते स्वसमूहो यत्र। एवञ्च भारतं तद्राष्ट्रं यस्मिन् प्रजैव राष्ट्रनियमां-स्तथैव तनुते विस्तारयति संशोधनपरिष्करणादिभिर्यथा तन्तुवायस्तन्तून्, यत्र च प्रजैवैभिर्नियमैः स्वात्मानं धारयति पोषयति च, यत्र प्रजैव राष्ट्रचिन्तां करोति। प्रयुक्तस्तन्त्रशब्दोऽन्तिमार्थे महाकविना माघेन स्वीयशिशुपालवधमहाकाव्ये। यथा—

तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता।
सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥ इति।

तन्त्रशब्दो धार्मिकग्रन्थेष्वागमशब्दापरपर्यायः। यद्यपि—

आगतं शिववक्त्रात्तु गतं च गिरिजामुखे।
मतं श्रीवासुदेवेन आगमं संप्रचक्षते॥

इति वाक्यानुसारमागमशब्दं द्वैतद्वैताद्वैताद्वैतशैवमतप्रतिपादनपरशैवागमार्थ एव केचन प्रयुञ्जते, तथाप्यभिनवगुप्ताचार्य आगमतन्त्रशब्दौ एकार्थवाचिनाविति मन्वानो दशाष्टादशवस्वष्टभेदभिन्नशैवागमव्याख्यापराभ्यां स्वीयग्रन्थाभ्यां तन्त्रालोक-तन्त्रसारनामनी प्रददौ। एवञ्च पाञ्चरात्रागमा अपि तन्त्रान्तर्गता एव।

तन्त्राणि न केवलं भारतीयान्यपि तु चीनदेशीयान्यपि सन्ति। परिगणितानि च तानि विश्वसारतन्त्रे। यथा—

महाचीनादितन्त्राणि अविकल्पे महेश्वरि।
सुसिद्धानि वरारोहे रथक्रान्तादिभूमिपु॥ इति।

अवेलान् उड्रूफ्-इत्यादिभिः पाश्चात्त्यैर्विद्वद्भिर्बहवस्तन्त्रविषयका ग्रन्था आंग्लभाषायां लिखिताः। बार्नेटमहोदयेनाभिनवगुप्तकृतः परमार्थसार आंग्लभाषाया-मनूदितः। बाइरमहोदयेन क्षेमराजकृतं प्रत्यभिज्ञाहृदयं जर्मनभाषायामनूदितम्। विभिन्नैर्योरोपदेशीयैः शासनैराहूतेन विभिन्नेषु पाश्चात्त्यदेशेषु व्याख्यानानि ददता तत्रत्यैर्विद्वद्भिर्भारतीयपाश्चात्त्यदर्शनतुलनाविषयकं विचारविनिमयं कुर्वता मया स्वाक्षिभ्यां दृष्टा तन्त्रविषयिणी पाश्चात्त्यविदुषां रुचिः। रोम-विश्वविद्यालयस्थेन सुविख्यातेनाध्यापकेन डाक्टर-ग्नोलीतिनामधेयेन इटली-भाषायां कृतोऽनुवादोऽभिनवगुप्तलिखितस्य तन्त्रसारस्य। फ्रांसदेशीय-पैरिस-विश्वविद्यालयेऽनुसन्धानं कुर्वत्या सिल्वर्ननाम्न्या विदुष्या क्रियतेऽभिनवगुप्तकृतस्य परात्रिंशिकाविवरणस्य स्वीयभाषायामनुवादः। अस्मद्देशेऽपि काश्मीरिकानुसन्धानविभाग-देवशालपुरी-शिवागमसिद्धान्तपरिपालनसंघादिभिः क्रियत एव तन्त्रविषयकं कार्यम्। उत्तर-प्रदेशेऽप्याबाल्याद्यत्वेऽपि तन्त्रागमोद्धारे तान्त्रिकसाधनायाञ्च दत्तचित्ता विद्व-न्मूर्धन्याः श्रीमन्तः सर्वपूज्या महामहोपाध्यायगोपीनाथकविराज-महोदया विराजन्त एव, येषां प्रेरणया साहाय्येन पथप्रदर्शनेन चैतद्विषयकं बहुकार्यं काशीस्थैर्महद्भिः पण्डितैः कृतम्, पण्डितजगन्नाथोपाध्याय-व्रजवल्लभद्विवेदप्रमुखैरन्यैश्चाद्यापि क्रियते करिष्यते च। अत इदमतीव मोदावहं यदस्मिन् वाराणसेय-संस्कृत-विश्वविद्यालयेऽ-

नुपमेयवैदुष्याणां कृतयोगाभ्यासानां श्रीमतां कविराजमहामनसामाध्यक्ष्ये योगतन्त्राख्यस्यैकस्य स्वतन्त्रस्य विभागस्य स्थापना सञ्जाता, वयं चास्मिंस्तन्त्रसम्मेलने सम्मिलिता विचारविनिमयं कर्तुं प्रसारयितुञ्च ज्ञानयोगचर्याक्रियाविषयकं तान्त्रिकं ज्ञानं विज्ञानञ्च।

तान्त्रिकज्ञानविज्ञानोद्धारार्थं किं कर्तव्यं कथं कर्तव्यं क कर्तव्यं कैश्च कर्तव्यमिति त्वस्माकं मान्यैरुपकुलपतिमहाभागैः स्वीयललितभाषणे सम्यङ्निर्दिष्टमेवेति न शिष्यते किमपि वक्तव्यं तद्विषये। अत एतद्विश्वविद्यालयीय-डाक्टरगङ्गानाथझा-व्याख्यानमालायां शैवदर्शनविषयकं व्याख्यानत्रयं ददता उपसंहारे क्रमकुलाख्यं दर्शनद्वयं संक्षेपेण प्रतिपादयितुं या प्रतिज्ञा कृता तामेकांशेन सफलीकर्तुं लब्धावसरेणाद्य मया क्रमदर्शनं प्रतिपाद्यते।

## क्रमदर्शनम्

काश्मीरे त्रीण्यद्वैतदर्शनान्युदभूवन्। सर्वाण्यप्यभिनवगुप्तपादो व्याचख्यौ। क्रमदर्शनं कुलप्रत्यभिज्ञाख्यदर्शनद्वयाद्भिन्नम्। अस्येतिहासो भिन्नः, गुरुपरम्परा भिन्ना, तथैवागमा अपि; यानिदं दर्शनं प्रमाणत्वेनाश्रयति; भिन्नाः। अस्य कुलदर्शनेन महन् साम्यम्, यस्मादिदं कुलदर्शनसोदरत्वेन स्वीक्रियते। इदमभिनवगुप्तपादैः स्वीयतन्त्रालोकचतुर्थाह्निके द्वादशकालीव्याख्यानावसरे स्पष्टमुक्तम्—

"द्वादशकाल्यभ्युपगमः क्रमकुलसाधारणः"

इति वदद्भिः। आसां द्वादशकालीनां वर्णनमभिनवगुप्तकृतक्रमस्तोत्रे समुपलभ्यते।

क्रमदर्शनं कुलदर्शनाद्भिन्नम्। प्रथमं शाक्तोपायमाश्रयति, द्वितीयं तु शाम्भवोपायम्। प्रथमनये विकल्पसंशोधनक्रमेण मुक्तिः, द्वितीयनये तु 'अहम्'प्रत्यवमर्शतादात्म्यीभवनमात्रादक्रमेण मुक्तिः। प्रत्यभिज्ञादर्शनादप्यस्य भेदः कुलदर्शनादस्य भेदेन समकक्षः। यतः प्रत्यभिज्ञोपायः 'अनुत्तर', 'अनुपाय' इत्यादिशब्दैरभिधीयते, न च प्रत्यभिज्ञायां कश्चन क्रमः। यथाह—

ततोऽपि परमं ज्ञानमुपायादिविवर्जितम्।
आनन्दशक्तिविश्रान्तमनुपायमिहोच्यते ॥

इच्छादीनां हि एषणीयादिविषयावच्छेदेन बाह्योन्मुखत्वाद् भेदसम्भावनापि स्यात्। आनन्दशक्तिः पुनः--

"आनन्दो ब्रह्मणो रूपम्"

इत्याद्युक्त्या हि चितस्तत्स्वरूपमेवेति नात्र उपायगन्धोऽस्तीति तात्पर्यम्। इति (तं० आ०, आ० १, श्लो० २४२)।

इदं दर्शनान्तरेभ्यो भिन्नतया मालनीविजयवार्त्तिकादिग्रन्थेषु स्वीकृतम्। यथाह—

"अतिमार्गकुलक्रमत्रिकस्रोतोऽन्तरादिषु" इति (मा० वि० वा० ३०)।

जयरथः स्वीयायां तन्त्रालोकटीकायां "क्रमदर्शन-क्रमनय" इत्यादिशब्दान् प्रयुङ्क्ते। तथाह—

"क्रमदर्शने सर्वत्रैव सृष्ट्यादिदेवीनाम्.........." इति,

"क्रमनयसमानकक्ष्यत्वविवक्षायाम्.........." इति च।

तथा च तन्त्रालोकप्रथमश्लोकं क्रम-कुलाख्यदर्शनद्वयानुसारं व्याख्याति स्म।

## अस्य दर्शनस्य नामानि

इदं दर्शनं 'क्रम'इति नाम्नोच्यते। यत एतदनुसारं विकल्पसंस्कार एव निर्विकल्परूपपरतत्त्वज्ञानरूपाया मुक्तेरुपायः, विकल्पसंस्कारश्च क्रमेणैव भवति, न तु सहसा। यथाह—

चतुर्ष्वेव विकल्पेषु यः संस्कारः क्रमादसौ।
अस्फुटः स्फुटताभावी प्रस्फुटन् स्फुटितात्मकः॥
ततः स्फुटतरो यावदन्ते स्फुटतमो भवेत्। इति।
(तं० आ०, भा० ३, पृ० ४, ५)

अतोऽस्य क्रमदर्शनमिति नाम। अपरमस्य नाम कालीनय इति। यत एतत्सिद्धान्तानुसारं क्षेप-ज्ञान-प्रसंख्यान-गति-नाद-रूपाणि पञ्च कृत्यानि कुर्वन्ती काली एव परं तत्त्वम्। कालीशब्द एव इमानि पञ्च कृत्यानि द्योतयति, यतोऽयं शब्दः (१) कल किल विल विक्षेपे, (२) कल गतौ (गतिर्ज्ञाने प्राप्तौ च), (३) कल शब्दे, (४) कल संख्याने इति धातुचतुष्टयान् "अकर्तरि च कारके संज्ञायाम्" इति

सूत्रानुसारं कर्मणि घञ्प्रत्ययान्ताद् ङीपि कृते सिध्यति। एवं च यया सर्वं कल्यते विक्षिप्यते बहिरुल्लास्यते, सर्वं ज्ञायते—स्वात्माभेदेन परामृश्यते, संख्यायते—प्रमातृ-प्रमेयादिः सकलोऽप्ययं राशिः परस्परतो व्यपोह्यते, इदमिदं नानिदमिति प्रतिनियततया अवस्थाप्यते, गम्यते—भेदितः सकलोऽर्थः संविल्लक्षणं स्वरूपमारोह्यते, दर्पणगतप्रतिबिम्बवत् स्वस्मादव्यतिरिक्तत्वेऽपि व्यतिरिक्ततया अवभास्यते, शब्द्यते, स्वात्मपरामर्शशेषतां नीयते, सर्वमविकल्पज्ञानादि विलोप्यते यया सा काली। एवं या स्वात्माभेदेन स्थितं सर्वं भावजातं स्वस्माद्बहिरुल्लासयति, उल्लासितान् भावान् परस्परतो भेदयति, तांश्च स्वात्मनि प्रतिबिम्बरूपेण धारयति, स्वस्मादभेदेन गृह्णाति, स्वस्मिन्नेव विलापयति क्रमशः सा काली।

उपर्युक्तदिशा पञ्चविधकृत्यकारिणी काली। इमानि कृत्यानि प्रत्यभिज्ञा-सिद्धान्ताभ्युपगतपरशिवपञ्चकृत्येभ्यः सृष्टिस्थितिसंहारपिधानानुग्रहेभ्योंऽशतो भिन्नानि, पिधानानुग्रहयोः केषुचिदपि गणितेषु कालीकृत्येष्वन्तर्भावाभावात्। प्रत्यभिज्ञा-सिद्धान्तेऽनुग्रहस्यातीव महत्त्वं यतस्तदनुसारं शिवानुग्रहेणाक्रममेव भवति मोक्षः। परमस्मिन् सिद्धान्ते मोक्षः क्रमभाव्येव। अतोऽनुग्रहशक्तिः क्रमदर्शने न स्वीक्रियते।

एतत्सिद्धान्तानुयायिनो मन्यन्ते यत्तेषां दर्शनं केवलं दार्शनिकाभ्युपगममात्रं नास्ति, अपि तु कालीशब्द एव निहितम्, अस्य शब्दस्य पञ्चविधकृत्यार्थकत्वात्। अस्य सर्वसिद्धान्तोत्कर्षित्वमुद्घोषयितुमेतदर्थम् "महानयः, अतिनयः" इति शब्दावपि प्रयुज्यते। यथा—

> एवं विधं यदधिगन्तुमिहार्थतत्त्वं
> मिथ्याविकल्पविभवोद्दलनञ्च सम्यक्।
> युक्तिं महानयमयीं न विहाय शक्यं
> सर्वोत्तमोत्तमतमो हि ततो महार्थः॥ इति।
>
> (म० मं० १७९)

यथा च—

> श्रीकेयूरवतीतः प्रभृति श्रीचक्रभानुशिष्यान्तम्।
> सन्ततयोऽतिनयस्य प्रथिता इह षोडशैवेत्थम्॥ इति।
>
> (तं० आ०, भा० ३, पृ० १९५)

शिवस्य देवत्वस्वीकारवत् कालया देवीरूपत्वस्वीकारादिदम् 'देवीनयः' इत्यपि भण्यते। यथा—

"श्रीवीरनाथपादैः पञ्च च देवीनये कृताः शिष्याः" इति।

( तं० आ०, भा० ३, पृ० १९६ )

शिवस्योत्तरमुखनिःसृतागमाश्रितत्वात् काश्मीरोद्भूतत्वाच्चेदम् 'औत्तराम्नाय' इत्यप्युच्यते। तथाहि—( १ ) शिवः पञ्चवक्त्र इति तु सर्वैः स्वीक्रियत एव। शैवानामिदं परम्परागतं मतं यच्छैवागमा विभिन्नेभ्यः शिवमुखेभ्यो निःसृताः, ते चागमाः, यान् क्रमदर्शनमाश्रयति, उत्तरमुखोद्भूताः। उत्तरश्च मुखो नाम इति क्रमदर्शनप्रदर्शितो मार्गो वाममार्गः। ( २ ) पीठेष्वेक उत्तरपीठः, स च काश्मीरम्। काश्मीरोद्भूतं च क्रमदर्शनम्। यथा—

"औत्तराम्नायाद्यशेषशास्त्रार्थावबोधशिक्षाशालित्वात्" इति।

( म० मं०, पृ० ६ )

## क्रमदर्शनेतिहासः साहित्यञ्च

महार्थमञ्जरीकर्ता महेश्वरानन्दो धार्मिकदृष्ट्या, भैरवः क्रमदर्शनं भैरवीमवेदयदित्याद्यायातिवर्णनं लिखित्वा शिवानन्दं भूलोकेऽस्य प्रथमप्रवर्तयितारं स्वीकरोति, महाप्रकाशं स्वगुरुं ततो दूरकालभाविनं मनुते च। जयरथस्तु स्वीयायामभिनवगुप्तकृततन्त्रालोकस्य टीकायां धार्मिकं कथानकमुपेक्ष्य ऐतिहासिकदृष्ट्या शिवानन्द एव क्रमदर्शनप्रवर्तयितेत्युल्लिखति। तच्छिष्यपरम्परां चेत्थं वर्णयति—

शिवानन्दस्य तिस्रः शिष्याः केयूरवती–मदनिका–कल्याणिकेतिनाम्न्योऽभूवन्। तासां बहवः शिष्या आसन्, येषु गोविन्दराज–भानुक–एरकाख्या महतीं प्रसिद्धिं प्राप्नुवन्। गोविन्दराजः शिवदृष्टिकर्तुः सोमानन्दस्य गुरुरभवत्। भानुकादेका महती शिष्यपरम्परा प्रसृता, यस्याम्—उज्जट–उद्भट–प्रभृतयो महान्तः प्रतिभाशालिनः समभूवन्। जयरथोऽप्यस्या एव सन्ततेः कस्माच्चन व्यक्तिविशेषात् क्रमदर्शनगुरुपरम्पराविषयकं ज्ञानं लब्धवान्। यथाह—

"तस्यैव चैषा श्रीमदुज्जटोद्भटादिनानागुरुपरिपाटी सन्ततिः, यत्प्रसादादासादितमहिमभिरस्माभिरेतत् प्रदर्शितम्" इति। ( तं० आ०, भा० ३०, पृ० १९२ )

जयरथ एकशिष्यपरम्परायां क्रमागतान् ह्रस्वनाथ-भोजराज-सोमराजाभिधां-स्त्रीन् शिष्यानुल्लिखति ।

उल्लिखिताद् गुरुक्रमादिदं सुस्पष्टीभवति यत् क्रमदर्शनस्योद्भव ईशवीयाष्टम-शतकप्रारम्भेऽभूत् । यतः शिष्यपरम्परायामुल्लिखितस्य सोमानन्दस्य समयः सम्यङ्-निश्चितः । सोऽभिनवगुप्तपादानां परमेष्ठिगुरुरासीत् । अभिनवगुप्तश्च स्वीयं क्रमस्तोत्रं नवशताधिकैकनवतितमे ईशवीयवर्षे व्यलिखदिति तत एवावगम्यते । यथाह—

"वसुरसपौषे कृष्णदशम्यामभिनवगुप्तः स्तवमिममकरोत्" इति ।

अतः सोमानन्द ईशवीयनवमशतकमध्यभव ऊरीक्रियते । सोमानन्द-शिवानन्दयोर्मध्ये परम्परागतौ द्वौ गुरू अभूताम् । अतः क्रमदर्शनम् ईशवीयाष्टमशतके समुदभूदिति निश्चप्रचम् ।

क्रमदर्शनसाहित्यं द्विप्रकारम्—आगमाः, आगमाश्रिता ग्रन्थाश्च । क्रमसद्भावः, क्रमसिद्धिः, ब्रह्मयामलम्, तन्त्रराजभट्टारकश्च—इमे आगमाः क्रमदर्शनविचारे प्रदत्तेभ्य उद्धरणेभ्यो ज्ञायन्ते । अन्येऽप्यागमा एतद्दर्शनप्रतिपादकैः प्रमाणत्वेनाभ्युपगताः स्युरिति सम्भाव्यते, परं स्वान्वेषणानुसारं किमपि निश्चितं तद्विषये न शक्यते वक्तुम् । आगमाश्रिता बहवो ग्रन्थाः शिवानन्दादिभिर्लिखिता उपलब्धग्रन्थेषु नामकीर्तन-मात्रेणापि न दृष्टिपथमायाता अद्यावधि । परं तत्कृतयोऽप्यासन्निति तन्मतोल्लेखेभ्यो ज्ञायते । उदाहरणम्—शिवानन्दः पुस्तकद्वयं व्यलिखत् । एकस्मिन्ननाख्यचक्रे पूज्याः द्वादशकाल्यः, अपरस्मिंश्च त्रयोदश इति प्रत्यपादयत् । यथाह जयरथस्तन्त्रालोक-टीकायाम्—

"श्रीमदवतारकनाथस्याप्यत्र त्रयोदशैव विवक्षिताः, यः श्रीगोविन्दराजा-दीनामपि परमगुरुत्वेन स्थितः" इति ।

अथ च—"अस्य द्वादशाप्यभिप्रेताः" (तं० आ०, भा० ३, पृ० १९८) इति ।

अत्रेदं मनसि सम्यङ्निधेयं यत् शिवानन्द एव क्रमदर्शनस्यावतारकत्वादत्र अवतारकनाथ इत्युक्तः ।

अपरे ग्रन्था उद्धरणेभ्य एव ज्ञायन्ते, परं तत्कर्तृनामान्यप्यविदितानि। ते च—(१) क्रमसूत्रम्, क्षेमराजकृतटीकासहितम्, (२) क्रमोद्द्योतः, (३) पञ्चशतिकम्, (४) षडर्धशतिकम्, (५) क्रमस्तोत्रम्, अभिनवगुप्तकृतया क्रमकेलिनाम्न्या टीकया अन्याभिश्च टीकाभिः समलङ्कृतम्। इदमभिनवगुप्तकृतात् क्रमस्तोत्राद्भिन्नम्। (६) महानयपद्धतिः।

अन्ये च क्रमदर्शनविषयिका अमुद्रिता ऋजुविमर्शिन्यादयः, उद्धरणेभ्यो ज्ञाताः क्रमवासनादयः, मुद्रिताश्च महार्थमञ्जर्यादयो वर्तन्ते, यद्विषये मया स्वीये आङ्ग्लभाषायां लिखिते यावज्ज्ञायते तावल्लिखितमिति विशिष्टजिज्ञासुभिस्तत एवावगन्तव्यम्।

## क्रमदर्शनं पञ्चकदर्शनम्

यथा सम्पूर्णं शैवदर्शनं महामाहेश्वरेणाभिनवगुप्तेन 'त्रिकम्' इति संज्ञितं तस्य सिद्धान्तस्य सामान्यतो द्विनवतिशैवागमाश्रितत्वेऽपि प्राधान्येन सिद्धा-नामक-मालिनीतिविख्याततन्त्रत्रयाश्रितत्वात्, पर-परापर-अपररूपत्रिकप्रतिपादकत्वात्, तदन्तर्गतस्य त्रिकत्रयस्य, शिव-शक्ति-तत्सामरस्यरूपस्य, शिव-शक्ति-नररूपस्य, परा-अपरा-परापरादेवीरूपस्य व्याख्यायां प्राधान्येन प्रवृत्तत्वात्, भेद-भेदाभेद-अभेदरूपस्य त्रिप्रकारस्यापि ज्ञानस्य दार्शनिकदिशा स्पष्टीकरणाच्च।

तथैव क्रमदर्शनं पञ्चकदर्शनमिति शक्यते वक्तुम्, पञ्चार्थक्रमपदव्या प्रसृतत्वात्। यथाह महेश्वरानन्दः —

इत्येनां गुरुमुखसम्प्रदायलब्धां वाचालः शुक इव वृन्दचक्रचर्याम्।
पञ्चार्थक्रमपदवीरहस्यसंवित्सर्वस्वव्यतिकरगर्भिणीमवोचम् ॥ इति।

(म० मं० ९८)

क्रमदर्शनाभ्युपगताः परतत्त्वस्य स्फुरणधारा व्योमवामेश्वरी-खेचरी-दिक्चरी-गोचरी-भूचरीनाम्न्यः पञ्च। परशक्तयः सृष्टि-स्थिति-संहार-अनाख्य-भासारूपाः पञ्च। यद्यपि "त्रय्या वाचः परं पदम्" इति वदता भर्तृहरिणा वाक्त्रयमेव स्वीकृतम्, सोमानन्दः स्वीयशिवदृष्टौ भर्तृहरिमतं समालोच्य चतुर्थीं परां वाचं स्थापितवान्, यदनुसारं नागेशभट्टो वाचश्चतुरो भेदान् स्वीकृतवान्, तथापि क्रम-दर्शनस्वीकृता वाग्भेदाः परा-सूक्ष्मा-पश्यन्ती-मध्यमा-वैखरीरूपाः पञ्च।

क्रमेणार्च्यदेवताचक्राणि श्रीपीठ-पञ्चवाह-नेत्रत्रय-वृन्दचक्र-गुरुपङ्क्तिरूपाणि पञ्च। परतत्त्वस्वरूपत्वेन तदभेदेन विद्यमानाः शक्तयः चित्-आनन्द-इच्छा-ज्ञान-क्रियारूपाः पञ्च।

इयं पञ्चकाश्रया विचारधारा प्रबला आसीत्। अस्या एव कारणात् तेऽपि समुदाया येषु समुदितानां पदार्थानां संख्या पञ्चसंख्यातोऽधिका न्यूना वाऽऽसीत्, तेऽपि कथञ्चन पञ्चीकृताः। यथा श्रीपीठे आद्यस्पन्द-प्रसरणानुरूपशक्ति-प्रमाण-स्फुरणरूपेन्द्रियस्पन्द - वस्तुव्यवस्थापनात्मकप्रमाणस्फुरत्ता - पञ्चविधेन्द्रियविषयोल्लास-रूपा नव कलाः सन्ति, तथापि पञ्चेन्द्रियविषयान् भिन्नतया न गणयित्वा तांश्च प्रमेयरूपतया एकीकृत्य पञ्चैव कला इत्युक्तम्। इयं पञ्चकविचारधारा मौलिकस्य काल्याः क्षेप-ज्ञान-प्रसंख्यान-गति-नाद-रूपकृत्यपञ्चकविचारस्य प्रभावात् प्रसृतेति भाति।

### विकल्पसंस्कार एव मोक्षोपायः

विकल्पस्वरूपे बौद्धशैवयोर्मतभेदः। बौद्धाः—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति, "साभिलापं विकल्पाख्यम्" (भा० भा० १, पृ० ८५) इत्यादिं च वदन्तः शब्दसंस्काराद्बोधसहितं ज्ञानं विकल्पं स्वीकुर्वन्ति। तथा च परतत्त्वं प्रकाशविमर्शस्वरूपं निर्विकल्पकं चेति वदतां शैवानां मतमित्थं दूषयन्ति—

"तत्र विमर्शोऽभिलापात्मना शब्देन योजित एव, तद्योजनाकृतं च विकल्परूपत्वं शुद्धेऽपि परमेश्वरे प्राप्तम्। न चैतदिष्टम्, तस्य संसारे मायात्मन्युपपत्तेः" इति। (भा०, भा० १, पृ० २०१-२)

शैवाश्चेत्थं प्रतिवदन्ति—

प्रकाशस्य शुद्धसंविद्रूपस्य सारस्वभावो विच्छेदशून्योऽन्तरभ्युपगमकल्पोऽनन्य-मुखप्रेक्षित्वरूपस्वातन्त्र्यविश्रान्तिरूपः 'अहम्' इति प्रत्यवमर्शः। असौ विकल्पो न भवति। नह्यस्य विकल्पलक्षणमस्ति। विकल्पो हि विविधा कल्पना। विविधत्वेन च शङ्कितस्य कल्पोऽन्यव्यवच्छेदनम्। अतो विकल्पेऽवश्यं निश्चेतव्य-अपोहितव्यरूपं द्वयं भवति, यतो विकल्पो द्वयापेक्षी विनिश्चयः। नहि परावाग्वपुषि अहंप्रत्यवमर्शेऽपोहितव्यं किञ्चनास्ति।

एवं संस्कारोऽपि द्विधा भवति। कस्मिंश्चिद् वस्तुनि कस्यचन गुणस्याधानेन, यथा तिलेषु पुष्पसुगन्ध्याधानेन। अथवा कस्यचनानपेक्षितांशस्य निष्कासनेन, यथा रजको मलनिष्कासनरूपं पटस्य संस्करणं करोति। अतस्तस्माद् विभिन्नांशाद्विकल्पाद् यस्मिन् साधकेन मनः स्थिरीक्रियतेऽसारभूतानामत एवानपेक्षितानामंशानां दूरीकरणमेव क्रमनये विकल्पसंस्कारः।

'क्व चेतः स्थिरीकार्यम् ?' इति प्रश्नस्योत्तरमिदम्। यत्र कुत्रापि साधकस्य मनः स्थैर्यं गच्छतु, यतः सर्वं ब्रह्ममयं सर्वात्मकञ्च। यथाह—

अथवास्मदृदृशि प्राणधीदेहादेरपि स्फुटम्।
सर्वात्मकत्वात् तत्रस्थोऽप्यभ्यासोऽन्यव्यपोहनम्॥ इति।

यथा चाह जयरथः स्वटीकायाम्—

"पराद्वयदर्शने 'प्रदेशोऽपि ब्रह्मणः सार्वरूप्यमनतिक्रान्तश्चाविकल्प्यश्च' इति नीत्या देहादेरपि संविद्रूपत्वेन सर्वात्मकत्वात्" (तं० आ०, भा० ३, पृ० १०५) इति।

अत्र प्रमाणभूतं श्रीपूर्वशास्त्रवाक्यमित्थम्—

किन्त्वेतदत्र देवेशि नियमेन विधीयते।
तत्त्वे चेतः स्थिरं कार्यं तच्च यस्य यथास्त्विति॥

परन्त्वस्मिन् प्रसङ्गे विकल्प-बाह्यवस्तुनोर्भेदः सम्यङ्मनसि निधेयः। बाह्यवस्तुनो हि विकल्पजनकत्वेनैव परिग्रहः, न तु चक्षुर्द्वारा चित्तैकाग्र्यविषयत्वेन। एतच्च शैवानां प्रमाणमीमांसासिद्धान्तस्योपरि दृष्टिपातेन स्पष्टीभवति। स चेत्थम्—शैवा बौद्धवत् "अर्थाऽसंस्पर्शिनो विकल्पाः" इति सिद्धान्तमभ्युपगच्छन्ति बुद्धिञ्च प्रमातुर्बहिर्मुखं रूपम्, यस्यां बाह्यो विषयः प्रतिबिम्बितो भवति, ततश्च या संकोचं गच्छति। यथाह क्षेमराजः—

"चितिरेव चेतनपदादवरूढा चेत्यसंकोचिनी चित्तम्" इति।

मनश्च बुद्धिप्रतिबिम्बितविषयांशेषु कांश्चन उपेक्षते, अपरांश्च संयोजयति वियोजयति वा। यथाह उत्पलाचार्यः—

तद्द्वयालम्बना एता मनोऽनुव्यवसायि सत्।
करोति मातृव्यापारमयीः कर्मादिकल्पनाः॥ इति।

(भा०, भा० २, पृ० ४१)

परन्तु शैवा बौद्धवद् ज्ञानानां क्षणिकत्वमभ्यूरीकुर्वन्ति। अतोऽयं प्रश्नो जागर्ति कास्ति स विषयः, यं मनो विकल्पयति। शैव इत्थमुत्तरं ददाति—स्यादस्य प्रश्नस्यावकाशो यदि विकल्पः स्वतन्त्रो भवेत्। यावता प्रमातुरसौ व्यापारः, प्रमाता च पूर्वानुभवान्तः स्वसंवेदनरूपः। तदस्य चायमेव पूर्वानुभवसंस्कारो यद्विकल्पन-व्यापारकालेऽपि पूर्वानुभवात्मत्वमनुज्झन्नेवास्ते। ततः पूर्वानुभवो यावत् स्वलक्षणात्मा तावत् पूर्वानुभवतादात्म्यापन्नप्रमातृतत्त्वव्यापारोऽपि विकल्पस्तद्विषय एव। अतो विकल्पशोधने बुद्धौ प्रतिबिम्बितस्य मनसा च संयोजनवियोजनरूप-व्यापारेण विकल्पितस्य विषयस्य शोधनं क्रियते। तथैवम्—"तत्त्वपक्षपातो हि धियां स्वभावः" इति नीत्या तत्त्वान्वेषि प्रेक्षकमनो यथा दुःष्यन्तभूमिकावलम्बनवेलायां वस्तुतो नटस्य नटत्वेऽपि दुष्यन्तरूपतयाऽवभासमानान्नटाद् भूमिकावलम्बनार्थं परि-गृहीतान् वस्त्राभूषणवर्णादीन् वियोज्य नटं वेत्ति, तथैव तत्त्वग्रहणपरं साधकचेतो विषयस्फारणवेलायां विषयरूपाच्छन्नात् संवित्तत्त्वात् तदाच्छादकान् विषयांशान् अपास्य संवित्तत्त्वं साक्षात्करोति। अयं क्रमदर्शनाभ्युपगतो विकल्पसंस्कारप्रकारः।

विकल्पसंस्कारस्योपायः सत्तर्कः, नैयायिकानां परपराजयपरात् शुष्कतर्का-द्भिन्नः। अयं च पातञ्जलयोगस्वीकृतेभ्योऽष्टयोगाङ्गेभ्योंऽशतो भिन्नेषु शैवाभ्युपगतेषु षड्योगाङ्गेषु सर्वोत्तमः। यथोक्तम्—

प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते॥ इति।

तथा—

श्रीपूर्वशास्त्रे तत् प्रोक्तं तर्को योगाङ्गमुत्तमम्।
हेयाद्यालोचनात् तस्मात् तत्र यत्नः प्रशस्यते॥ इति।

(तं० आ०, भा० ३ पृ० १४-१५)

अयं हि विकल्पे यद् हेयं तद् आलोचयति। उपादेयाच्च हेयमपास्य तत्त्व-ज्ञानं जनयति।

### अपोहनक्रमः

साहित्यानुशीलननाटकदर्शनाभिव्यक्तरसप्रतिपादयितारः स्वीकुर्वन्तीदं यद् योगाभ्यासेन विनैव, केवलात् काव्यानुशीलनाद् रङ्गमञ्चे नाट्यमाननाटकदर्शनाच्च भवति सहृदये ब्रह्मानुभवो ब्रह्मास्वादसहोदरो वाऽनुभवः। यथाह भट्टनायकः—

वाग्धेनुर्दुग्ध एकं हि रसं यद्बालतृष्णया।
तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि यः॥ इति।
( ध्व० लो० पृ० ९१-९२ )

योग्यनुभूतादानन्दात् सहृदयानुभूतस्यानन्दस्यायं विशेषः। योगी बलात्कारेण आनन्दरूपब्रह्मतन्मयीभावभावनाप्रकर्षं संपाद्य रसावेशेन विना ब्रह्मानन्दमनुभवति। सहृदयस्तु विभावानुभावव्यभिचारिभावावबोधनोत्तरमेव तन्मयीभवनयुक्त्या तद्विभावाद्युचितोद्बुद्धस्थायिभावसंमिश्रणाभिव्यक्तरसानुरञ्जितं संविदानन्दमनुभवति। एवञ्च उभयोराक्रान्त्यनाक्रान्तिकृतः सरसत्वनीरसत्वनिष्ठश्च भेदः। यथाहाभिनवगुप्तपादाचार्यो लोचने—

"तदावेशेन विनाप्याक्रान्त्या हि यो योगिभिर्दुह्यते" इति।
( ध्व० लो०, पृ० ९२ )

एवमेव क्रमदर्शनमपीदं प्रतिपादयति यत् संविदानन्दानुभवरूपो मोक्षः योगाभ्यासं विनैव सत्तर्करूपकुठारेण दुर्भेदद्वैतपादपस्य समूलं कृन्तनात् प्राप्यते। यथाह—

दुर्भेदपादपस्यास्य मूलं कृन्तन्ति कोविदाः।
धारारूढेन सत्तर्ककुठारेणेति निश्चयः॥ इति।
( तं० आ०, भा०, ३, पृ० १२ )

अपरञ्च साहित्यविद्भिः रसानुभवे स्तरत्रयमूरीक्रियते। प्रथमे स्तरे प्रस्तावनागतगीतातोद्यचर्वणाविस्मृतसांसारिकभावतया विमलमुकुरकल्पीभूतनिजहृदयः प्रतिभाशाली सहृदयो दृश्यदर्शनध्वनियुक्तश्रव्यश्रवणानन्तरं स्वप्रतिभया कविमनोगतचित्रसदृशं विभावानुभावव्यभिचारिणां देशकालव्यक्तिविशेषसम्बन्धशून्यं चित्रं स्वान्तःकरणे चित्रयति। वासनारूपेण स्थितस्य विभावादिसमुचितस्य स्थायिभावस्य जागरणात् तेन च सह विभावानुभावव्यभिचारिभावानां पानकरसन्यायेन संमिश्रणादभिव्यक्तं रसमनुभवति च।

द्वितीये स्तरे सहृदयचेतसः चर्व्यमाणरससारग्रहणपरत्वाद् अपासितविभावादिः स्थाय्येव चर्वणापात्रम्। यतोऽप्रधाने वस्तुनि न कस्यचित् संविद् विश्राम्यति,

अप्रधानवस्तुप्रत्ययस्य प्रधानान्तरं प्रत्यनुधावतः स्वात्मनि अविश्रान्तत्वात्। अतो विभावानुभाववर्गो स्थायिना संमिश्रितेऽपि स्थाय्येव चर्व्यते। यथाह अभिनव-गुप्ताचार्यः—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविततमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

इत्यादिवाक्येभ्यो वाक्यार्थप्रतिपत्तेरनन्तरं मानसी साक्षात्कारात्मिकाऽपहसित-तत्तद्वाक्योपात्तकालादिविभागा तावत्प्रतीतिरुपजायते। तस्यां च यो मृगपोतकादिर्भाति तस्य विशेषरूपत्वाभावाद् भीत इति त्रासकस्यापारमार्थिकत्वाद् भयमेव, परं देश-कालाद्यनालिङ्गितम्। तत एव 'भीतोऽहं भीतोऽयं शत्रुर्वयस्यो मध्यस्थो वा' इत्यादिप्रत्य-येभ्यो दुःखसुखादिकृतहानादिबुद्ध्यन्तरोदयनियमवत्तया विघ्नबहुलेभ्यो विलक्षणं निर्विघ्नप्रतीतिग्राह्यं साक्षादिव हृदये निविशमानं चक्षुषोरिव विपरिवर्तमानं भयानको रसः। ( अ० भा०, भा० १ पृ० २८० )।

तृतीये तु स्तरे विषयविषयिरूपं द्वैतं सर्वथा व्यपगच्छति, संविदः पूर्णतयाऽ-न्तर्मुखीभूतत्वाद् विषयतयाऽवभासमानस्य उद्बुद्धस्य स्थायिनोऽपि वासनायां प्रति-मज्जनात्। एवं चाभिनवगुप्तमते तृतीयस्तरे रसानुभवः परमानन्दानुभवो व्यतिरेक-तुरीयातीतसमाधावनुभूयमानादनुभवादभिन्नः, सर्वस्यापि वैषयिकज्ञानस्य वासनायां निमग्नत्वाच्छुद्धस्य संविदात्मन आनन्दरूपे स्वस्वरूपे भानाच्च। यथाह प्रत्यभिज्ञा-विवृतिविमर्शिन्याम् —

"मधुरादिरसास्वादे तु विषयस्पर्शव्यवधानम्, ततोऽपि काव्यनाटकादौ तद्व्यव-धानशून्यता, तद्व्यवधानसंस्कारानुवेधस्तु तत्रापि। परन्तु तथोचितव्यवधानांशतिर-स्क्रियासावधानहृदया लभन्त एव परमानन्दम्" ( ई० प्र० वि० वि०, भा० २, १७८–१७९ ) इति।

तथा च अभिनवभारत्याम्—"अस्मन्मते तु संवेदनमेवानन्दघनमास्वाद्यते। तत्र का दुःखाशङ्का" ( अ० भा०, भा० १, पृ० २९३ ) इति।

रसानुभवे क्रमभाविनः स्तरत्रयस्य दृष्टान्तेन स्पष्टीकर्तुमिष्टस्य क्रमभाविनः क्रमदर्शनाभ्युपगतमोक्षस्य दार्ष्टान्तस्य सम्यगवबोधाय काल्याः प्रागुक्तव्यापारपञ्चकात् ज्ञान-गति-नाद-रूपाणां त्रयाणां व्यापाराणां स्वरूपं सम्यक् स्मर्तव्यम्।

(१) ज्ञाने बहिःस्फारितस्य 'इदमिदं नानिदम्' इति प्रतिनियततयाऽवस्थापनरूपस्य विकल्पस्य पश्चाद् भेदितस्याविकल्पनं स्वात्माऽभेदेन परामर्शः क्रियते। अतो ज्ञाने सर्वं विषयजातं प्रमात्रेकात्मना 'सर्वमिदम् अहमेव' इत्येवं रूपेण भाति, यथा वेदान्तनये "सर्वं खल्विदं ब्रह्म" इति रूपेण। परं नेदं शुद्धं निर्विकल्पकं ज्ञानम्, ज्ञातृज्ञेयरूपस्य द्वैतस्य सर्वशब्दद्योतितस्य विषयगतबहुत्वस्य च भानात्। अत एवाभिनवगुप्तपादैरिदं ज्ञानं शुद्धविद्यात्मकं विकल्पज्ञानमित्युच्यते। यथाह—

तदेव तु समस्तार्थनिर्भरात्मैकगोचरम्।
शुद्धविद्यात्मकं सर्वमेवेदमहमित्यलम्॥
इदं विकल्पनं शुद्धविद्यारूपं स्फुटात्मकम्।
प्रतिहन्तीह मायीयं विकल्पं भेदभावकम्॥ इति।
(तं० आ०, भा० ३, पृ० ११६-११७)

(२) गतौ गत्युपसर्जनायां प्राप्तौ तु सर्वं विषयजातं संविल्लक्षणं स्वरूपमारोहति, न देवदत्तो यथा कटम्, अपि तु प्रतिबिम्बो यथा दर्पणम्। एवञ्च यथा प्रतिबिम्बस्य दर्पणाव्यतिरिक्तत्वेऽपि व्यतिरिक्ततयाऽवभासनम्, तथैव विषयजातस्य संविदि। तच्च विषयजातं न पारस्परिकभेदेन, अपि तु सामान्येदन्तया विशुद्धप्रमातृसंलग्नम् 'अहमिदम्' इत्येवं भासते, यथा वेदान्तनये 'सर्वं खल्विदं ब्रह्म' इत्यस्मात् सर्वांशस्य निराकरणे 'इदं ब्रह्म' इत्यात्मब्रह्मणोरभेदादेकस्यापरपर्यायत्वाच्च 'अहं ब्रह्म' इत्येव भानं भवति।

(३) नादे तु सारार्थाकर्षणरूपेण निष्पीडनेन तेषामविकल्पादिरूपाणां सर्वेषां वैषयिकज्ञानगत्यादीनां विलोपनाद् अपहस्तनात् स्वात्मपरामर्शशेषतैव 'अहम्' इत्येव भाति। यथाह जयरथस्तन्त्रालोकटीकायाम्—

"संविदेव हि आश्यानीभूता नीलादिरूपतामधिशयाना प्रमाणोपारोहद्वारेण। तद्रूपतां विलाप्य प्रमातरि विश्रान्तिमभ्युपगच्छन्ती स्वेन प्रमात्रेकात्मना रूपेण स्फुरति" (तं० आ०, भा० ३, पृ० १४१) इति।

अथ च—

"प्रमाणप्रमेयाभ्यामप्यतिक्रान्तं प्रमातृलक्षणं ज्योतिरवभासत एव" ( तं० आ०, भा० ३, पृ० १४२ ) इति।

एवं यथा नाटकदर्शनाभिव्यक्तरसास्वादे त्रयः स्तरास्तिस्रो वा भूमिका भवन्ति क्रमशः, परमानन्दानुभवश्च तृतीयस्यां भूमिकायामेव जायते, प्रथमभूमिकायां सम्मिलितरूपेण विभावानुभावव्यभिचारिस्थायिनाम्, द्वितीयस्यां च केवलस्य स्थायिनो विषयरूपेण वर्तमानत्वात्। तथैव क्रमदर्शनानुसारं पूर्णा मुक्तिस्तृतीयस्तरप्राप्तावेव भवति, यस्मिन् विषयस्य सर्वथाऽभावः। न त्वादिमे स्तरद्वये। प्रथमे स्तरे सर्व-विशिष्टस्य द्वितीये च निर्विशेषस्य 'इदमः' वर्तमानत्वात्, तयोः स्तरयोः "अहमिदं सर्वम्', 'अहमिदम्' इत्यनुभवयोः क्रमेणानुभूयमानत्वात्।

वैष्णवानां परप्रकृतिसायुज्यरूपो मोक्षः, ब्रह्मवादिनामानन्दरूपतारूपः, विज्ञानवादिनां विशुद्धचित्तमात्ररूपः, वैभाषिकाणां प्रदीपवत् सन्ततिक्षयरूपश्च मोक्षः कथं क्रमदर्शनदृष्ट्या प्रलयाकलतामयः, क्रमदर्शनप्रतिपादितस्य राजयोगस्य हठयोगात् को भेदः, क्रममार्गानुसारिभिः पूज्यानां द्वादशकालीनां किं स्वरूपम्, पूजा का ? इत्या-दीन् व्याख्यातुमिष्टानपि विषयान् समयस्य स्वल्पीयस्त्वात् परित्यजन् सप्रमाणो-पन्यासं संक्षेपेण व्याख्यातेऽस्मिन् दर्शने भवद्विचारविनिमयमस्मिन् महति सम्मेलने-ऽन्यत्र च आशंसमान इदं नीरसं व्याख्यानं सावधानं शृण्वद्भ्यो विद्वद्भ्यः शतशो धन्यवादान् ददद् विरमामि॥

॥ इति शम्॥



# तन्त्रसाधनापरिषदध्यक्षभाषणम्[1]

एकेऽभ्यस्त्वष्टसिद्धीर्मणिमयनगरद्वारि मन्त्राञ्जपन्तो
हेम्नां राशिं परेभ्यो बहलसमयतो दैन्यतापं तपन्तः।
अन्येऽभ्यश्चात्मबोधं श्रुतिशिखरमहावाक्यवृन्दं पठन्तो
यच्छन्वी श्रेयसेऽम्बा भवतु मम सभामण्डपान्तर्विशन्ती ॥
जयं वदन्तः पदमानमन्तः पुष्पं किरन्तो गुणमुद्गिरन्तः।
यस्याः सुराः स्वागतमाचरन्ति साम्बा सभायामवताद्विशन्ती ॥

सम्मान्याः श्रीमन्तो महानुभावास्तान्त्रिकविभागाध्यक्षाः, तन्त्रसम्मेलन-महाध्यक्षाः, अन्येऽपि प्राज्ञास्तन्त्रशास्त्रप्रणयिनो महाभागाः, आगन्तुकाश्च विद्वांसः!

अद्य खलु परमपावन्यां धर्मक्षेत्रप्रधानायां विद्वत्प्रसवपरायणायां महामहेश्वर-श्रीविश्वनाथनिवासभूतायां जगत्प्रशस्यायां वाराणस्यां नगर्यामेतत्प्रख्याततमे पुण्ये विश्वविद्यालयप्राङ्गणे तान्त्रिकसम्मेलनं विलोकयतो मम मानसे पूर्णा प्रसन्नता वरीवर्ति, तदस्य सम्मेलनस्य संस्थापकेभ्यो महामहिमशालिभ्यो विद्वद्वरेण्येभ्यो नैकान् धन्यवादानर्पयामि, यैरीदृशेऽपि घोरे कलिकाले विश्वविद्यालये एकतमस्तान्त्रिको विभाग आस्थापितः।

तदेनं विभागं समर्थयमानानपि वदान्यहृदयान् कुलपतिप्रतिकुलपत्युपकुलपति-प्रभृतिमहाभागान् सप्रश्रयं सम्मानये, ईदृशा हि विशालमनसो महानुभावा महौजसो विद्वांस एव भारतवसुन्धराया मुखमुज्ज्वलयितुं समर्था भवन्ति भविष्यन्ति चेत्यत्र न सन्देहः।

एतस्यात्युन्नतरस्य कार्यस्य तन्त्रसम्मेलनस्य तान्त्रिकसाधनासदस्याः परिषदोऽ-ध्यक्षत्वं मय्यकिञ्चित्करे मातृचरणचञ्चरीकेऽप्रतिपन्नमतिकेऽविशेषव्युत्पत्तिकेऽविशेष-प्रतिभावति च निहितवद्भिश्च श्रीमद्भिः "यस्यानुग्रहमिच्छन्ति तं महान्तं प्रकुर्वते"

१. वाराणसेयसंस्कृतविश्वविद्यालयेन आयोजितस्याखिलभारतीयतन्त्रसम्मेलनस्यावसरे (१०-३-६५ दिनाङ्के) तन्त्रसाधनापरिषदोऽध्यक्षपदेन प्रदत्तमिदं भाषणं पण्डितश्रीहरिशास्त्रि-दाधीचमहोदयैः—सम्पादकः।

इत्यभियुक्तसूक्तिरेव चरितार्थीकृतेत्येतदर्थं परमसमर्थान् विद्वत्पुङ्गवान् तान्त्रिक-विभागाध्यक्षान् श्रीकविराजमहाराजश्रीगोपीनाथमहाभागादीन् परमपुरुषानिव विश्व-विद्यालयीयानन्यान् मेधाविनो विदुषश्च समानतशिराः प्रणमन् तेषां कृपां च धन्यां वदन् श्रीमतामादेशपालनव्याजेनेव तन्त्रसाधनाविषये यथामति यथाविचारं यथा-धीतं यथोपलब्धं यथाश्रुतं किञ्चिदावेदयामि। तदिदं करुणावरुणालयैर्भवद्भिरत्रभवद्भिः सप्रणयमाकर्ण्यताम्।

इह खलु समस्तसुरगणगीयमानप्रकर्षे भारतवर्षे सकलसाधककामपूरणकल्प-द्रुममिव को न जानाति नाम तन्त्रशास्त्रम्। विशेषतः शाक्तास्तन्त्रानुजीविनोऽप्यागम-प्रवेत्तारो बहवः शैवा वैष्णवाः सौरा गाणपत्याश्चापि।

तदिदं तन्त्रशास्त्रं सकलागमविधायकगौरीसहायककैलासनायकेन भगवता श्रीशिवेन संकलितश्रुतिसारं दर्शितप्रत्यक्षचमत्कारं च सदाराधकानां मनोरथान् पूरयद् बहुधाऽऽपद्गणाँश्चूर्णयच्च सिद्धौषधमिव रोगानपनयति, कल्पतरुरिवाभिलषितानि यच्छति, रविरिव सुखकमलविलासकृद् दुःखतमःप्रसारहारि दैन्यविदारि च सर्वतो जृम्भतेतराम्। निश्चयेनेदं देवानां देवीनां मानुषाणां यक्षगन्धर्वाप्सरसां चापि नियन्तृ प्रमोददं वश्यकरं प्रसादनं पोषकृत् तोपकृच्चेति न सन्देहः।

आसीत् स हि कश्चन स्वर्णमयः समयोऽत्र यदाऽऽगमप्रणयिनो ब्रह्मर्षयो ब्राह्मणा मुनयस्तपोधनास्तैस्तैस्तन्त्रैर्मनोऽभिलाषानुकूलं किमपि कर्म कर्तुमकर्तुमन्यथाकर्तुं समर्था भवन्ति स्म, वशयन्ति स्म महामहाराजान्, विकलीकुर्वन्ति स्म च उग्रात्युग्र-सत्त्वाशयान् दानवादीनपि, सहाययन्ति स्म च सुजनान्, उत्साहयन्ति स्म चाल्पबलिनो-ऽपि जनान्, मूकयन्ति स्म वाचालान् प्रतिवादिनोऽपि, पङ्गूनपि लङ्घयन्ति स्म मेरुपर्वतम्, विद्वेषयन्ति स्म च दुर्जनान् परमस्नेहयन्त्रितानपि, आकर्षयन्ति स्म च दूरस्थान् समुद्रान्तगानपि, उच्चाटयन्ति स्म सुदृढनिखातमूलानपि, किं बहुना देवता-विशेषोपासनालब्धबलविशेषा हि साधकाः स्वप्रभावतो वाऽभिलाषेण वा प्रसादेन वा कौतुकेन वा मारणमोहनवशीकरणविद्वेषणोच्चाटनाकर्षणेषु तथान्यान्येष्वपि कर्मसु सर्वतन्त्रस्वतन्त्राः परमसमर्था भवन्ति स्म। तदतिसामर्थ्यं ते तत्तत्तन्त्रसाधनाबलादेव प्राप्नुवन्ति स्मेति न सन्दिहन्तामण्वपि।

तत्किं नाम तन्त्रमित्याकाङ्क्षायाम्—विकासपूर्वं (विस्तारपूर्वं) तत्पदाभिधेयस्य पदार्थस्य तत्त्वस्य वा त्राणं रक्षणं स्वायत्तीकरणं तन्त्रशब्दाभिधेयतां गच्छतीति केचन।

तन्त्रं कुटुम्बकृत्ये च सिद्धान्ते चौषधोत्तमे ।
प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे ॥

श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके ।
इति कर्तव्यतायां च.................. ॥

इति मेदिनीकोषकारः । सोऽयं तन्त्रशब्दः 'तनु विस्तारे' (त०उ० से०) धातोः ष्ट्रन्प्रत्यये सिद्ध्यति, तेन निर्वचनेन च विकासपूर्वं त्राणमुपेयते ।

देवताया उपकरणादिभिः स्वाभिलषितेऽर्थे मनसो नियोजनं तन्त्रमित्यपि केचनाहुः । परमात्मनः परेश्वरस्य यैर्यैरुपकरणैर्विस्तृतं ज्ञानं भवति तत्तदुपकरणं पूजा-प्रकारो वा तन्त्रमित्यपरे । तेन या साधना कर्तव्यताविशेषः, सा तन्त्रसाधना नाम । तयैतया सर्वः क्रियाकलापः सिद्ध्यति ।

वेदस्य भगवतो मूलं रूपं द्वेधाऽऽस्ते--निगमरूपमागमरूपं चेति । तत्रागम-स्वरूपम्—

आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे ।
मतं च वासुदेवस्य तत आगम उच्यते ॥

इति तान्त्रिका वर्णयन्ति । प्रधानमपि तन्त्रमुक्तमनुपदं कोषवाक्ये । तदनुसारं प्रधानं परमात्मा धीः प्रकृतिश्च, 'प्रधानं प्रकृतौ बुद्धौ उत्तमे परमात्मनि' इति हैमकोषाच्च । तत्पदेन प्रधानं प्रकृतिः परमात्मा चापि गृह्यते, तत्त्राणं स्वायत्तीकरणं स्वविषयीकरणं स्वस्य वा तद्विषयीकरणं ताद्रूप्यप्राप्तिरिति यावत् । आस्तां कथनोप-कथनेन, तदत्र तन्त्रशब्देन स्वाभीष्टपदार्थस्य तत्त्वस्य प्रकृतेर्वा प्रधानस्यापि त्राणं रक्षणं स्वायत्तीकरणं ज्ञानविषयीकरणमिति यावत् । तच्च तन्त्रं नैकविधम्, कोषवाक्यैरेव नैकविधं दृष्टम् । तैस्तैरुपयुक्तोपायप्रकारैर्या साधना भवति सा तान्त्रिकी साधना नाम । तदनया हि साधनया सर्वेऽपि साधकाः सर्वसमर्थत्वं प्राप्तुं शक्नुवन्ति । साधनं च करणभूतं कस्यापि कार्यस्य साधकतमत्वात्, साधकतमं हि करणमिति वैयाकरणाः । परमेश्वरोपासनायाः साधनभूतानामुपकरणानां हि तन्त्रसंज्ञा, तद्-द्वारापि च या साधना उपासना ज्ञानमनुभूतिश्च भवति, साऽपि तन्त्रसाधनैवेति न विस्मर्तव्यम् ।

सोऽयमुक्ताऽऽगमप्रकारस्तन्त्रसाधनाप्रकारो ( मार्गः ) द्विधा गदितः--निगमस्य दक्षिणगः, आगमस्य च वाम एव। वामदक्षिणयोरध्वनोर्विषये तान्त्रिकैर्मान्त्रिकैः स्वस्वमतानुकर्षाकर्षि यथा तथा बहुधोल्लिखितमास्ते। दक्षिणः पन्था दक्षिणमार्गेण साधनां कलयते। वामश्च वाममार्गेण साधनां निर्दिशतीति निर्णीयते साम्प्रतिकैः। तत्रापि वामदक्षिणौ शब्दाववधार्यौ, "वामौ वल्गु प्रतीपौ द्वौ" इत्यमरः। अपि च--

वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे।
पयोधरे हरे कामे विद्याद्वामामपि स्त्रियम्॥ इति विश्वः।

तत्र प्रतीपशब्दः सापेक्षिकः ( परस्परापेक्षी )। अनुकूलो हि दक्षिणः, प्रतिकूलश्च वामः। प्रतीप इति वामशब्दः सुन्दरे प्रतिपादितः। तथापि लोका वामं निन्दन्ति। यो हि यस्यानुकूलः स दक्षिणः, प्रतिकूलो हि वामः। सोऽयं शब्द एकस्य वामोऽपरस्य दक्षिणो भवति। दृश्यन्ते केचन जना वामहस्तेन लिखन्तो भुञ्जानाः कर्म कुर्वन्तोऽपि। तत्तेषां वामोऽपि हस्तो दक्षिणः, दक्षिणोऽपि वामः। किं तेषां वामहस्त-भोजनकर्मकरणदेवपूजादिषु पापं न भवति ? परमेवं नास्ति। वामशब्दः सुन्दरता-वाचक एव विशेषेण प्रयुक्तः। वामदेव, वामलोचना, वामोरु--इत्यादिषु सौन्दर्ये एव प्रयुज्यतेऽपि। निरुक्त्या वामः सर्वश्रेष्ठ एव-यथा वम् अमृतम् अमति प्रापयति स वामः, अमृतप्रापको वामः। शास्त्रेष्वपि दक्षिणो वामश्चेति द्वौ मार्गौ। तत्रापि वाम एवामृत-गतिप्रदो न दक्षिणः। भगवद्गीतास्वष्टमेऽध्याये--

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः॥ इति।

तत्र देवयानं शुक्लः, अग्निः, ज्योतिः, उत्तरो मार्गः, सोऽयं वाम एव पन्थाः। द्वितीयश्च धूमो रात्रिः कृष्णो दक्षिणो हि पितृयाणं नाम दक्षमार्गः। पूर्वोक्तेन वामेन गच्छन्तः प्राणिनो लोका नहि पुनरावर्तन्ते। द्वितीयेन गच्छन्तश्च जना पुनरावर्तन्त एवेति तट्टीकाकृद्भिः स्पष्टीकृतमेव।

सोऽयं पन्था इत्थमपि निर्णेतव्यः। उत्तरो हि मार्गो देवभूमौ हिमालयतो मेरु-पर्यन्तमुत्तरस्यां दिशि एव। ता एव देवभूमयः "पितुः प्रदेशास्तव देवभूमयः" इति पार्वतीं प्रति मुनयः। हिमालयतो मेरुमूर्द्धान्तं दैवो देशः, देवानां वसतयश्चात्र सन्ति, ततोऽसौ देवमार्गः कथ्यते। तदेतेनैवोद्गच्छतां गृहिणां सविधि ब्रह्मचर्यादिसम्पन्नानां

विदुषां यतीनां संन्यासिनां च महात्मनां देवलोकप्राप्तिः, निर्वाणप्राप्तिरपि च। तदनेन विचार्यतां वामो हि मार्ग उत्तमो न दक्षिण इति।

इतोऽप्यधिकं किञ्चिदीक्ष्यताम्। ईश्वरः स्वयमपि वाममार्गस्थ एव। यथोक्तं कृष्णेन भगवद्गीतायाम्—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥ इति।

एवं च वदता श्रीकृष्णेन ईश्वरस्यापि वामवर्तित्वं स्फोरितम्। हृदये ईश्वरस्य स्थितिः। हृदयं प्राणिनां मानवानां वामभाग एव। तदीश्वरोऽपि वामभाग एव तिष्ठति सर्वभूतानां न दक्षिणे भागे।

साम्प्रतमुच्यताम्—ईश्वरो वामवर्ती आस्ते न वा, यदि ओम्, तर्हि कथं हि वामस्य श्रेयस्करत्वं केन धीमता न स्वीकार्यम्? अपि तु सर्वैरेव स्वीकार्यम्। ये हि स्वलक्ष्यतः प्रच्युता बुभूषवस्तैस्तैः कामममाश्रयणीयोऽयं पन्था नान्यैरिति। अपि च संसारस्य बहूनि कार्याणि वामेनैव सिद्ध्यन्ति। यथा भूमिर्वामत एव परिक्रमणं विधत्ते, मानवा विवाहेऽग्निं परिक्रामन्ति वामावर्तेनैव, देवानां परिक्रमणं वामावर्तेनैव, लेखनं वामतो दक्षिणं प्रति भवति, धर्मकर्मादौ पत्नीं दक्षिणे कृत्वा पुरुष वाम एव तिष्ठति। विवाहे कन्याया वामाङ्गे यावत्परिवर्तनं न स्यात्तावत्तस्याः कुमारीत्वं नापनोद्यते। लाजाहोमोक्तानां मन्त्राणामपि राष्ट्रभृद्धोममन्त्राणामपि साफल्यं तादृशं नास्ति यादृशं वामाङ्गागमनस्य। तदुक्तम्—

मण्डपो मधुपर्कश्च लाजाहोमस्तथैव च।
यावत्कन्या न वामाङ्गे तावत्कन्या कुमारिका॥

इति पद्धतिक्रमे। विचार्यतां यत्कुमारीत्वं वेदमन्त्रा नापनोदितुं प्रभवन्ति, तदेव वामभागमात्रासादनेन कुमारीत्वमपहाय पत्नीत्वं प्राप्यते तत्क्षणेनैवेति दृष्टो वामस्य महिमा? दृष्टश्चेदद्यप्रभृत्येव वामोऽध्वा समाश्रयणीयो दक्षिणस्त्याज्य इति।

पुनश्चापि लौकिकः पन्था अपि वाम एव श्रेयान्। तन्त्रसाधनामार्ग इव लोकाश्रयोऽपि मार्गो वाम एवाश्रयणीयो भवति। विचार्यताम्—सर्वत्र साम्प्रतं शासकैर्घोषितं सर्वेऽपि स्वस्ववामे चलन्त्विति। यानानि अश्वा गावो वृषभा हस्तिनोऽजा मेषा

५

महिष्यादयः सर्वेऽपि वाममेवाध्वानं स्वीकृत्य चलन्ति, न दक्षिणम्। वामेतरं पन्थानमाश्रितवतां मिथः प्रतिघातो जायते, अभिमुखं संघट्टनं भवति। ततो दक्षिणोऽध्वा सर्वत्र सर्वैर्निषिध्यते। वाम एवाद्रियतेतराम्। एवं वामं निर्णीय गुरुभिः ( गुरुभ्यो ) विज्ञाय तन्त्रसाधनायां प्रवर्तितव्यम्। तदुक्तं—'ज्ञात्वा कर्माणि कुर्वीत' इति। 'न ज्ञात्वा नैव कुर्वीत' इति चापि विचार्यम्।

कस्या अपि देवतायाः साम्प्रतं तान्त्रिकी साधनैव सरला सुफला सुखसाध्या भवति, न वैदिकी, कालयोगविरोधात्। विरोधश्च कालयोगस्यैवं द्रष्टव्यो देवीभागवते शिवपुराणे स्कन्दपुराणे च। तदादौ देवीभागवते—

दक्षशापाद् भृगोः शापाद्गौतमस्य च शापतः।
दग्धा ये ब्राह्मणवरा वेदमार्गबहिष्कृताः॥

इत्यारभ्य द्वादशस्कन्धे नवमेऽध्याये गौतमस्य शापः सविस्तरं निरूपितः। ततो ब्राह्मणा वेदबहिष्कृता जातास्ततः प्रभृति तन्त्रमेवाश्रिताः। आगमाश्रितैर्हि तैर्मुनिवरैर्द्विजश्रेष्ठैः साधकैर्देवानां पूजाप्रतिष्ठायज्ञयागादिकाश्च क्रियास्तन्त्रद्वारैव प्रसारिताः। तेषां च क्रमो वाम एवासीत्, वेदवत्। एवं हि प्राचीनतमे महानिर्वाणतन्त्रे दृश्यताम्—

सत्यं सत्यं पुनः सत्यं सत्यमेव मयोच्यते।
विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये॥
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः।
कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्तते॥
न तस्य गतिरस्तीति सत्यं सत्यं न संशयः।
कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः॥ इति।

एवं च तान्त्रिकी साधना कृते त्रेतायां द्वापरेऽपि प्रचलितासीदेव। यथा हि—आगमोक्तकुलसाधनाप्रधाना मकाराः पञ्चापि सेव्यतां प्राप्ता एवासन्। यथाऽऽह भगवान् शिवो महानिर्वाणतन्त्रे—

सत्यत्रेताद्वापरेषु यथा मद्यादिसेवनम्।
कलावपि तथा कुर्यात् कुलधर्मानुसारतः॥

कुलतत्त्वं कुलद्रव्यं कुलयोगिनमेव च।
नमस्कुर्वन्ति ये नित्यं नहि तान् बाधते कलिः॥

इत्यादिनानाप्रमाणानि वामाध्वनः समर्थकानि स्फुरन्ति समयोपयोगाद् द्वित्राणि पद्यषाणि प्रदर्शितानीति।

अधुना साधनाविधानं समीक्ष्यताम्—'साध्यतेऽनया सा साधना' इति निरुक्ता साधना उपकरणानि, उपयुक्तसामग्रीसमूहः, तदुत्था तत्संयोगजा मन्त्रादिपाठपूर्विका क्रिया वा साधना। एतेन पूजोपचाराः स्तुतयो जपादिकमपि प्राप्यन्ते, सर्वमिदं साधना-शब्देऽन्तर्गतं बोध्यम्। दशानां महाविद्यानां साधना प्रायशः शाक्तसिद्धान्तावलम्बिनां विदुषां कृते निरूपिताऽऽस्ते, सा च वामक्रमेणैव कुलक्रमेणैव च सूपयुक्ता भवति, नापरेणाचारेण। परं बहवो विचारशिथिला भीता अतत्त्वज्ञाः पुरुषा मातरं जगदम्बिकां दक्षिणेनैव (तत्रापि प्रतिकल्पानुकल्पैः) यजन्ति। ते जानन्तोऽप्यजानन्त इव किमपि कुर्वन्तु यजन्तु नाम। जगदम्बा दयावारिधानी भवानी तेषामपि कृत्यानि वीक्षत एव, परं तत्रैव प्रचारितानि श्रीशिवद्वारा निर्मापितानि तन्त्रशास्त्राणि जानद्भिर्विद्वद्भि-स्तत्त्वज्ञैः कथमुपेक्षणीयानीति सत्यमेव विजानीत। यथार्थतस्तु ये तत्त्वविनोदा जायन्ते यावत्, यावच्च तत्त्वानुशीलनं न कुर्युस्तावत्तत्त्वज्ञता कुतः?

तत्त्वानि च सृष्टिकारणभूतानि जगदुत्पादकानि पृथ्वीजलतेजोवाय्वाकाश-रूपाणि पञ्चैव, तान्येतानि विमर्शाध्वनि समानीय विवेचनीयानि। एतेषां पञ्चापि प्रतिरूपाणि प्रतीकानीति यावत् सूक्ष्माणि यान्यागमेषु महामहेश्वरेण भगवता निरू-पितानि मकारादीनि तान्येव जगतस्तत्त्वानि नान्यानीति स्थिरेण चेतसा समाक-लनीयम्। तदेतेषां विवेचना मदीये कौलविलासे द्वितीयभागे कृतास्तीति विशेषतस्तत एवावगन्तव्या। एतानि तत्त्वान्यन्यत्रापि बहुत्र तन्त्रेषु यथावकाशं विवेचितानीति ततोऽपि द्रष्टव्यानि।

तन्त्रोक्ताः पञ्चापि मकाराः साधनत्वेन निरूपिता बहुगुणाः सन्ति। तथा हि—ओजःप्रदा मनःस्थैर्यकराः पोषकास्तोषका आप्यायका रसायना जीवनीयास्ते साधनारूपेणैव मात्रया समर्पणीयाः सेवनीयाश्च, न लोके धान्यजलदुग्धदध्यादिवदुप-योज्याः।

यथा ह्युपनिषत्सु अश्वादिषु चान्नादिषु चापि ब्रह्मदृष्टिः परमात्मदृष्टिः क्रियते—'उषा वा अश्वस्य मेध्यस्य शिरः' इत्यत्र। कर्माङ्गस्य पशोः संस्कर्तव्यत्वात् कालादिदृष्टयः

शिर आदिषु क्षिप्यन्ते । प्राजापत्यत्वं च प्राजापतिदृष्टयारोपणाद् विष्णुत्वादिकरण-मिव प्रतिमादौ' इति बृहदारण्यकभाष्यम् । तद्वदेवैषु तत्त्वेष्वपि पञ्चसु मकारेषु जगतस्तत्त्वदृष्टिः कर्तव्या । ततश्च ते यथाक्रमं यथाशास्त्रं यथामात्रं यथाकालं यथोचितं साधनायामुपयोज्याः । तदत्र न कोऽपि दोषः, न किमपि पापम् , न च काचनाऽऽपत् , न च लोकद्वेषः, न वा लज्जा, न च भयम् , न शोकः, प्रत्युत मनसः प्रसादः स्थैर्यं च देवेषु मनसश्चैकाग्रता चाह्लादः, तेजोबलवर्णमेधावृद्धिश्च प्रभावश्च प्रतापश्चापि सम्यक् परिवर्द्धत एव, नात्र लेशमात्रं सन्दिह्यताम् ।

साधनावसरे देवताया विषये तान्त्रिकैरागमज्ञैराज्ञप्तम्—'देवो भूत्वा देवं यजेत' इति । तदादेशानुसारं देवतायाः स्वभावानुगुण एव वेषो भावना च विधेया । देवताऽपि साधकाग्रे स्वभावानुभावितानेव स्वावरणदेवादिव्यूहान् रक्षति स्थापयति दर्शयति प्रवर्तयति चेति तदानुकूल्येनैव साधको यदि साधनां कलयति तदा सर्वविधं सौकर्यं सौलभ्यं तदग्रे स्फुरति, नान्यथा ।

देवतानुगुणरश्मिभावनाज्ञानपूर्वकं तत्तदङ्गदेवादीनां तत्तदाचारादीनां च बोधनकृते मया चित्रपटादि( चार्ट )साधनं कल्पितम् , तद्दर्शनेन लाभः सम्पत्स्यते । तत्र प्रत्येकदेवतायाः साधनायां ज्ञातव्यपटे देवतानाम, कुलम् , आम्नायः, आचारः, विद्या, शिवः, गणेशः, भैरवः, यक्षिणी, अङ्गविद्याः, कुल्लुका, सेतुः, महासेतुः, निर्वाणम् , दीनम् , जीवनम् , मुखशोधनम् , शापश्च तदुद्धारश्च, उत्कीलनम् , भावः, क्रमश्चेति विंशतिभावा ज्ञातव्या एव भवन्ति, नान्यथा साधनायाः सर्वाङ्गसिद्धिरिति सत्यमेव मन्यताम् ।

प्रत्येकं देवताया महाविद्यायाश्च आम्नायकुलाचारादिविषये आगमरहस्यादिषु बहुषु तन्त्राणामाकरग्रन्थेषु बहु विवेचितमेव, तत्सर्वं ततो वा स्वगुरुचरणेभ्यो वाऽवग-न्तव्यम् । दशापि महाविद्याः कुलद्वये विभक्तास्तान्त्रिकैरागमज्ञैर्महर्षिभिः कालीकुलं श्रीकुलं च । तत्र या देवता यत्कुलस्था तत्कुलानुकूलैव पद्धतिस्तस्या आदरणीया । एवमाचारोऽपि वामो दक्षिणश्चेति द्वेधा निरुक्तः, परमत्र वयं न संवदामः । आचारस्तु वाम एव सर्वेषामुपरिलिखितप्रदर्शितदिशा परमानुकूल्यप्रातिकूल्यापेक्षया स एव मार्गो वामदक्षिणनाम्ना व्यवहृतस्तथैव रूढिमाप्तः । परमत्र मूढाशयाः खाद्यपेयपदार्था-पेक्षया वामदक्षिणयोर्निर्णयं कुर्वन्तीति महदाश्चर्यम् । तेषां बुद्धिविषये किमधिकं

ब्रूमः ? लोके स्वकं महात्मानं शुद्धं सात्त्विकमहिंसकं ख्यापयितुं तत्त्वानि जातुचिदपि न स्पृशन्ति, न देवाय देव्यै वा समर्पयन्ति, न तानि विवेचयन्ति, न चापि कानीमानि, किंस्वरूपाणि, किंगुणानि, किंफलानीति विचारयन्ति, नोपदिशन्ति; प्रत्युत निन्दन्ति चालयन्ति च तत्सेवकान् इति महान् खेदः ।

अयि भोः ! तान्त्रिका महाभागाः ! कदावधि गोपनीयताया भ्रान्तिजाले ग्रथिताः पतिष्यथ ? सम्प्रति तु चेतत, समयं परिचिनुत, भ्रातरः, सज्जनाः, विद्वांसः ! केयं खलु विभीषिका ? कीदृशो भ्रमः ? कोऽयं मोहः ? सर्वथैव त्यजतैनम् ।

शुद्धे सात्त्विके मार्गे कोऽयं भेदः ? केयमीर्ष्या ? यो हि पन्था जगत्कल्याणकरः, यो हि मन्त्रः सर्वश्रेयस्करः, यद्धि तन्त्रं विश्वोपकारकरम्, तस्योपदेशे, तस्य प्रदर्शने, तस्य विज्ञापने कथं संकोचः ? कीदृश्यनुदारता, किं दारिद्र्यं कीदृशी भीतिः, को वा मोहः ? गतः स समयो यत्र द्वेषासूयामर्षवशैर्विद्वद्भिः सा सा सिद्धिः स्वेन स्वेन सहैव नीता स्वर्लोकमिति तानद्य रुदन्ति क्रोशन्ति ते ते पुत्रपौत्रादयस्ताँस्तान् पितृपिता-महादीन् । हा हन्त ! तेऽस्माकं पूर्वजा ईदृशाः सद्यश्चमत्कारकराः त्रिकालज्ञा भविष्य-वक्तारः सकलजनदुःखदूरीकरणदक्षा अदृष्टद्रष्टारः कर्तुमकर्तुमन्यथाकर्तुं प्रभवोऽभूवन् । तेऽस्मान् न किमप्युपदिश्यैव मृताः । किं कुर्मः ? एवमेव ये विद्वांसोऽधुनापि यां काञ्चन विद्यां सिद्धिं चमत्कारं देवदेवीयक्षराक्षसगन्धर्वपिशाचप्रेताधिकारतन्त्रादि जानन्ति, तैरद्यास्मिन् काले न गोपनीया सा, प्रत्युत पात्रं दृष्ट्वा प्रतिपादनीया विज्ञापनीया दानीया उत्सर्जनीया प्रसारणीया चेति निश्चयेन न ते संकोचमायान्तु, नापह्नुवन्तु, नाच्छाद-यन्तु, नापलपन्तु, न विनाशयन्तु चेति । तदेतेन व्यवहारेण भाविनो जगतो महानुपकारो भविष्यति । युष्माकं सन्ततिः सर्वश्रेष्ठा नानाचमत्कारवती उपकारपरायणा यशस्विनी धन्या मान्या भवन्ती देशान् विदेशाँश्चकितान् करिष्यतीत्यत्र न सन्देहः ।

ननु गोपनीयतायाः शपथा अस्माकं तन्त्रेषु नैकत्र नैकधा सन्तीति ते किमुपे-क्ष्याः? ते किं निर्मूलाः ? सन्तीति चेत्, नैवं विचार्यताम्, यदि ते शपथाः सत्यमेव नोपदेष्टुं न वा प्रसारयितुं न वेदयितुमेव कृता लिखितास्तर्हि पुस्तकेषु ग्रन्थेषु किं प्रकाशिताः ? यस्मिन् क्षणे ते लिखिताः प्रयोगादयस्तदैव ते प्रकाशिताः संवृत्ताः । मुद्रणे च तेषां ग्रन्थानां जाते तु ते सुतरामेव प्रकटाः संजाता जायन्ते च । तत्किमर्थमियान् संकोचः कृतोऽभूत् ?

यद्वैवं विमृश्यताम्—गोपनीयशब्दो गुपू रक्षणे इति धातोर्निष्पद्यते। धात्वर्थश्च रक्षणावच्छेदकत्वं पालनपर्यायतां भजति। ततस्तदर्थः सुरक्षणपर एव न संछादकत्वमपह्नवो वा कथंकारमपि तत्र दृश्यते। पात्रे प्रदानाद् यस्य कस्यापि वस्तुनो विद्यायाः कलादिकायाश्च मन्त्रादेरपि सुरक्षणं वृद्धिर्विस्तारो वा भवति न ह्रासः ? आम्, अपात्रप्रदाननिरोधार्थमेव तदिदं गोपनीयत्वं नाम प्रवर्तितम्। तत्र विवेकिभिरुदारैस्तु उपरि निर्दिष्ट एव प्रकारोऽवबुद्धः। संकुचितैः स्वल्पाशयैश्च न कस्मैचिदपि प्रदेयेयं विद्या, नान्यः कश्चन जानीयादिमाम्, अहमेवानया विख्यातिमाप्नुयाम्, अहमेव धनी, अहमेव पण्डितश्च भवेयमित्यादिदुर्वासनाबद्धा न किमपि ददति, नोपदिशन्ति, न वेदयन्ति, न पाठयन्ति, नोत्साहयन्ति, नोपकुर्वते। तदत्रावसरे मदीयाऽन्योक्तिर्मम मुखादाविरायाति, यथा—

इतस्ततोऽपकृष्टार्था दम्भमात्रोपजीविनः।<br>
विवेककृपणाः कस्मै किं प्रदास्यन्ति वञ्चकाः॥

अपि च—

उदारा हरयो ह्रीमे विक्रमार्जितभोजिनः।<br>
भुञ्जाना अपि येऽन्येभ्य उत्सृजन्ति हतद्विपान्॥

तदेतद्विमृश्य मञ्जूरीक्रियतां निवेदनमिदम्।

अतः परं साधनायाः साफल्यं कथं भवेदित्यपि ब्रूमः। साधना तान्त्रिकी वाऽस्तु वैदिकी वाऽस्तु, उभयथापि यथाशास्त्रनिर्देशं सम्यगनुष्ठानेनैव सफलत्वं भजतेतराम्। यथा वैदिके यागादिषु "वेदं कृत्वा वेदिं करोति" इत्यादेशरूपो विधिः। तदन्यथा चेत् पूर्वं वेदमकृत्वा वेदिं कुर्यात्, ततश्च वेदं कुर्यात्, तदा यादृग् यावद् दृष्टं वेदकरणपूर्वकवेदिकरणेन सम्पद्यते, तादृक् तावच्च वेदेः पूर्वकरणेन न सम्पत्स्यत इति निश्चयो वेदविरुद्धत्वाद् विधिप्रतिकूलत्वाच्च। एवं तन्त्रेष्वागमेष्वपि यद्विधानं यथोपदिष्टं तद्विधानान्यथाकरणात् तथा तादृशी भावना साधना सिद्धिर्न भवति यथा विधानानुकूलेनागमोपदिष्टकर्तव्यकरणेन भवति। एतद्विषये भगवता श्रीकृष्णेनापि गीतासूक्तम्—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।<br>
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥ इति।

साधनायां यत्र यस्य पदार्थस्य यादृशो यावान् वा उपयोग उपदिष्टो महर्षिभिस्तान्त्रिकैर्दैशिकैर्वा स तथैव तत्र ग्रहीतव्य उपयोज्यः सेव्यः साधनीयः समादरणीयश्च। पूर्वं त्रेतायां द्वापरेऽपि च युगे अनुकल्पा नासन्, न प्रतिपादिताः, न सेव्यन्ते स्म, नोपदिश्यन्ते स्म, न वाऽऽद्रियन्ते स्म। तेऽमी वैष्णवादिभिर्मतान्तरप्रतिपादकैर्विद्वद्भिरतत्त्वज्ञैस्तत्तदुक्तस्वाभाविकसाधनाऽसमर्थानां पदानां देशकालानुरोधादसुलभतया कृच्छ्रसाध्यतया वाऽरुचिकरतया वाऽसम्भवत्वालोचनया, आलस्यपरतया वा तत्तन्मूलपदार्थानुरूपा एव कल्पिता उपस्थापिताः। परं तैस्तादृशी सिद्धिः साधनायां न लभ्यते यादृशी प्रत्यक्षभूतैः सत्यपदार्थैः।

वयं तु ब्रूमो यदनुकल्पास्तत्तद्देवोपहासायैव भवन्ति, न प्रसादाय प्रमोदाय तोषाय पोषाय वा, तदेतस्यार्थस्य प्रत्यक्षीकरणाय कश्चित् स्वाभीष्टं पुरुषं राजानं स्वस्वामिनं वा स्वगृहे निमन्त्रणं दत्त्वा समानयन्तु भोजयन्तु च। तद्भोजनस्थालिकायां भक्षणीयेषु पदार्थेषु परिवेषणे तदुपयोगितत्प्रियतद्धितपदार्थस्य स्थाने भोज्यस्य पेयस्य वा किमपि वस्तुनः प्रतिकल्पं घृतशर्कराचणकादिमोदकस्थाने मृत्तिकावलयमेकं स्थापयन्तु वदन्तु च भुज्यतामिति। एवं करणेन स भवदभीष्टः पुरुषोऽपि प्रसन्नो भविष्यति ? नहि, कदापि न प्रसन्नो भविष्यति, प्रत्युत रुष्टः सन् वदिष्यति—'किं ममोपहासः क्रियते त्वया ? अयि भो मामवमन्यसे त्वम् ?' इत्यादि वदन्नुत्थाय प्रचलिष्यति। तदेतद्विचारयत भोः! एकः सामान्यः पुरुषोऽपि नैवमनुकल्पेन प्रसीदति, तदस्माकं महामहामाननीयस्य राजाधिराजस्य महेशितुः पुरस्ताद् वयं तत्प्रियपदार्थस्यापलापं कृत्वा तत्प्रतिकूलान् पदार्थान् तदुपभोगाय स्थापयाम इति कियती अवहेलना देवादीनाम् ? कीदृशी केयमवमानना कीदृशस्तिरस्कारस्तेषां वा भवति !! हन्त ! किमधिकं वदामः, प्रतिदिनं पश्यामोऽनुभवामश्च।

पश्यन्तुतरामेकमुदाहरणम्—ब्राह्मणैर्वैष्णवानुसारिभिरतत्त्वज्ञैः समयानुभावं सिद्धान्तं चाविचारयद्भिः केवलं स्वार्थपरैरीदृशानि कर्माणि परिवर्तितानि कृतानि च यानि लोकं लोकं मनसि दुःखमेवोदेति न सुखम्। सप्तशतीस्तवान्ते वैकृतिके रहस्ये २८ तमे पद्ये लिखितम्—

रुधिराक्तेन बलिना मांसेन सुरया नृप।
प्रणामाचमनीयैश्च चन्दनेन सुगन्धिना॥

इति पूजाप्रकारे कुलोचितां सामग्रीं निर्दिशतो महामुनेः पद्यमध्य एव—

बलिमांसादिपूजेयं　विप्रवर्ज्या　मयेरिता ।
तेषां किल सुरामांसैर्नोक्ता पूजा नृप ! क्वचित् ॥

इति पद्यं सम्मेलयता केनापि चटुलेन बटुना विदुषा वा किं फलं विशिष्टमुपलब्धमिति नावबुद्ध्यते । तेन स्थूलमतिना नैतद्विचारितं सप्तशतीस्तोत्रस्य सरहस्यस्यापि मन्त्रा गणितप्रायाः सन्ति । तत्र कथं ममैकं पद्यं विलयमेष्यति । मेलितमपि तत्सममेव टीकाकृद्भिर्विद्वद्भिस्तत्पद्यं विशेषमवलोक्यैव प्रसङ्गरहितत्वात् प्रक्षिप्तमिति लिखितं तद्गणनातो बहिष्कृतं च [ कोष्ठके ] पातितम् । तदिदं वामदक्षिणाध्वनिर्णयान्तःपतितेन केनापि क्षुद्रहृदयेनैव कृतम् । एकोनचत्वारिंशच्छ्लोका वैकृतिके रहस्ये प्रोक्ताः । अयं २८ तमश्लोकार्धमध्ये लिखितः । एवं चत्वारोऽर्धांशाः संभूताः । तदस्य क्षुद्राशयस्य कौशलं प्रस्फुटमेव नान्तर्हितम् । अयि भो धूर्त ! मध्यमचरितध्यानेऽपि 'सुराभाजनम्' इति पदस्थाने किञ्चित् परिवर्तनं कुरु, तद्ध्यानं सुरया सहैव जायते । दक्षिणमार्गावलम्बिभिरपि तथैव ध्यायते वामैरपि तथैव ध्यायते । सा भगवती पराम्बा महामाया तु यान् यान् पदार्थान् सेवते तान् सेविष्यत एव । न कस्यापि कथनेनालोचनेन वा सा ताँस्त्यक्ष्यति । एवं बहुत्र स्थलेऽर्थान्तरकरणेन साधना विकलीकृता 'मधु यावत् पिबाम्यहम्' इत्यत्र मधुशब्दस्याप्रस्तुतो माक्षिकार्थं उत्थापितः । एतेन मूढाः सरला अपठितप्रायाः साधका भ्रान्तिमापद्यन्ते । अर्थकृद्भिः प्रसङ्गोऽपि न वीक्षितः । अहो ! रणान्तःस्थितोऽपि शत्रूनुन्मूलयितुं प्रवृत्तोऽपि संगरस्थले को नाम क्षौद्रं पास्यति ? बुद्धेर्दारिद्र्यं विलोक्यताम् ! तदेतदर्थप्रवर्तकस्य येनायं प्रसङ्ग उत्थापितः ।

अनन्तरं चैतत्पूर्वमेव स्वरूपाविर्भावकाले 'ददावशून्यं सुरया पानपात्रम्' इत्यत्र पाठो न परिवर्तित इति महदाश्चर्यम् ! तत्र सुराशब्दे मध्वादिनानार्थत्वे न चोपलब्धं स्यात् । अथाग्रेऽपि 'उवाच तं मदोद्धूतमुखरागाकुलाक्षरम्' इति तृतीयेऽध्याये तादृशानां संकुचिताशयानां मनसि न किमपि प्रस्फुरितमित्यादि भगवत्याः कृतेऽपि धौर्त्यमाचरतां तेषां तादृशानां वाऽन्येषां का गतिर्भविष्यति कां वा यातनां ते भोक्ष्यन्त इत्येवमादयो दोषा दम्भा यत्र यत्र साधनायां तन्त्रमन्त्रसाधनायां वा विशेषेणाऽऽपतितास्तदा कथं कार्यसिद्धेराशा करणीया स्यात् ?

एको वैद्यः कस्यचिद्रोगिणः कृते योगमेकं लिखित्वा दत्तवान्, तस्मिन् पञ्च सप्त वा भेषजानि समतोलानि कृत्वा पिष्ट्वा निम्बूकरसेन संघोट्य वटिकाः कृत्वा भक्ष-

णीया इति निर्दिष्टमासीत् । तदनु प्रारमेव रोगी भेषजानि गृहीत्वा गृहे गत्वा औषधानि पृष्ट्वा घोटयितुं प्रवृत्तो निम्बूकं स्मृतवान् , नासीत् सविधे तदा निम्बूकम् । समीपस्थेन केनापि प्रोक्तम्—'किं खिद्यसे; निम्बूकमन्तरा योगे त्वत्र अम्लत्वमेवापेक्षितं चेत्तर्हि अपक्वाम्रचूर्णं संमेलय जलेन संघोट्य वटिकां कुरु' तत्संमतं स्वीकृत्य तेन रोगिणा तथैव समाचरितम् । रोगः प्रवृद्धिं प्राप्तः । रोगी वैद्यसमीपं गतवान् प्रोवाच च 'भो वैद्यराज ! मया भवदुक्तः प्रयोगः सेवितः, परं न मे रोगः शान्तः, प्रत्युत वृद्धिमुपेतः, किं जातं पश्य' इति । वैद्य उवाच 'योगो यथाविधि निर्मितो न वा ? निम्बूकजे रसे घोटितानि तान्यौषधानि न वा, इति पृष्टो रोगी प्रोवाच 'सर्वाण्यौषधानि तु तथैवासन् परं निम्बूकस्यासुलभत्वादपक्वाम्रचूर्णसम्मेलनेन जलेन संघोट्य कृता वटिकाः खादिताश्च इति श्रुत्वा वैद्यः प्रावोचत् 'मदुक्तप्रकारेण न निर्मितो योगस्तदहं तदुत्तरदायित्वं नाचरामि, न किमपि सहाययितुं च पारयामि । एतस्यां विकृतौ त्वं स्वयमेव स्वस्योत्तरदायी भवसि, नाहमिति' ।

विचारयन्तु भवन्त उदाहरणमिदम्—महर्षिभिर्ये योगा ये उपाया ये कल्पा यानि साधनानि यान्यौषधानि यान्युपकरणानि यदर्थमुपयुक्तानि मत्वोपदिष्टानि तत्र यूयं वा वयं वा स्वमत्यनुसारं वा स्वार्थवशाद्वा लोभाद्वा लज्जया वा व्यवहारापकर्षाद्वा लोकनिन्दया वा किञ्चिदपि वस्त्वसमीक्ष्यैव सम्मेलयामो वा निःसारयामो वा तदा स योगः सा साधना सा उपासना कथं सफला सिद्धा च भवेदिति विचारणीयं तत्र-भवद्भिः । तद्विकारे वैद्यस्य, योगिनः, देशिकस्य, गुरोर्वा प्रयोगनिर्देशकस्य को दोषः ? दोषस्तु सोऽस्माकमेव ये वयं विनैव विचारं जातिधर्मवयोऽवस्थालोकनिन्दादिका-पेक्षयैव तत्तत्प्रयोगेषु हीनत्वाधिकत्वं कलयामः ।

ईदृशी व्यवस्थैव आगमोक्तसाधनायां पञ्चतत्त्वप्रयोगेषु दरीदृश्यते । तेषां के गुणाः कथममी प्रयुक्ता महर्षिभिर्मुनिवरैः शास्त्रकारैस्तान्त्रिकैर्मान्त्रिकैश्चेति न सम्य-गालोचयन्तो विवेककृपणाः संकुचितमनस्का यथाकथञ्चिदपि यान् काँश्चनादियोगानु-पदिशन्ति, ये केऽपि च मन्दा अकुशला मुग्धाः क्षत्रियवैश्यादयश्चान्येऽपि तेषां प्रभावग्रस्ता भवन्ति तत एव ते तान्त्रिकसाधनायां न सिद्ध्यन्ति नैव सफला भवन्ति नोन्नतिं कुर्वते । परेषां तु ते किमुपकरिष्यन्ति परं स्वकानेवार्थान् साधयितुं ते न प्रभवन्ति न प्रभविष्यन्ति चेति प्रत्यक्षमेव पश्यन्तु भवन्तः ।

महीयान् प्रभावोऽयं कलिकालस्य, तदेतेन व्याप्तेऽस्मिन् सकलेऽपि भूतले उपर्युक्तकारणादेव नावशिष्टास्ते प्रत्यक्षचमत्काराः परमोदाराः कलितलोकोपकाराः सिद्धा उपदेष्टारो गुरवस्तत्त्वावबोधका मन्त्रशास्त्रिणस्तान्त्रिकाः सर्वतन्त्रस्वतन्त्राः स्वाधीनदैवता मरुतामपि स्तम्भकरा मन्त्रत एवाधीतसकलनिगमागमाः सिद्धसारस्वता महाकवयः शतावधानादयः सुधियः। न सन्ति सम्प्रति तादृशाः प्रथमं तु, सन्ति च ये केचनाङ्गुलिमात्रगण्या मन्त्रशास्त्रतत्त्वाभिज्ञास्तान्त्रिकतज्ज्ञाश्च, तेऽपि कलिकाल-कलाक्रान्तहृदया विद्यां स्वकां प्रयोगादिकौशलं यन्त्रसाधनापाटवं च स्वानुभूतिं चापि स्वात्मनैव सह निनीषन्ति कैलासपुरं वैकुण्ठपुरं वा!

ते हि नोपदिशन्ति तत्त्वतः स्वाधीतशिक्षितानुभूतां विद्यां निजापराधमिव दोषिणः, न प्रकटयितुमिच्छन्ति स्वोपार्जितनिधिमिव कृपणाः, अन्विष्यन्ति च स्वसदृशानधिकारिणो विटा इव, समुपस्थिताय जिज्ञासवे विनीतायापि न दर्शयन्ति चौर्यधनमिव वञ्चकाः, नाधिकारिणो यूयमिति परिभावयन्ति सुजनानपि, छलन्ति यत्किञ्चिदपि ओतप्रोतमुपदिश्य सेवापरानपिच्छात्रान्। न च निर्दिशन्ति सम्यक् पद्धतिमेतस्या विद्यायाः, व्याख्यान्ति च दुष्करतामस्या विद्याया जिज्ञासूनां पुरस्तात्। गूहन्ति च तत्सौकर्यम्, विस्तारयन्ति च विभीषिकाम्, किं बहुना, ते हि नोत्सहन्ते परोत्कर्षम्, हन्त! शिष्याणामपि, ततो विद्येयं तन्मुखावलोकनपराङ्मुखीव प्रति-दिनमधोधः प्रविशतीति भिद्यते हृदयम्, स्फुटतीव मनः, तदस्य कृते जगदम्बामेव प्रार्थयामहे! सा ह्यमीषां तान्त्रिकाणां हृदयं विपुलीकरोतु, एतदाशयान् विमलयतु, एषूदारतां जनयतु, गौरवं वर्द्धयतु, तद्बुद्धिं च विशदयतुतरामिति।

तदिह साधनाया वैकल्यं किञ्चित् प्रतिपादयता मया साधनायां तेषु तेषु पदार्थेषु प्रतिकल्पोऽनुकल्पो वा न सम्मतः। स हि तां साधनामधरीकरोति। ततोऽस्याः साधनायाः साफल्यार्थं देशः कालोऽशनं पानं व्यवहारश्चेति पञ्च नियती-कर्तव्या एव।

तन्त्रेष्वपि शाक्तिकतन्त्राणां व्यवहारवैशिष्ट्यं किञ्चिदस्तीति तत्रापि शक्तितन्त्रं स्वतन्त्रमेवास्ति। यथाऽऽहुः शङ्कराचार्यपादाः—

चतुःषष्ट्या तन्त्रैः सकलमपि सन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः।

पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना-
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥

(सौ. ल. ३१)

तदेतेन शक्तितन्त्राणां भिन्न एव (नवीन एव) सातिशयः कश्चन महिमा जृम्भत इति रहस्यमावेदयामः। तत्राप्युपकरणानां साधनीभूतानां नव एव प्रकारो वर्तत इति कौलग्रन्थानां 'गर्भकुलार्णव' इत्यादिकानाममुद्रितानां कुलार्णव-कुलरहस्य-कौलचन्द्रिका-कौलकल्पतरु-कुलप्रदीपप्रभृतीनां च दर्शनाध्ययनमननैर्व्यक्तीभविष्यति। तन्त्रसाधनायां सत्स्वपि नैकतन्त्रेषु शाक्तमेव तन्त्रम्, वाम एव पन्थाः, कौल एव आचारः, समुचितोपयोगाय सद्यःसिद्धये श्रमसाफल्याय तत्त्वप्रबोधाय मनःस्थैर्याय संयमलाभाय अद्वैतामृतप्राप्तये साम्यसम्पादनाय सत्त्वोत्कर्षाय चेतसो विमलीकरणाय बलवर्द्धनाय सम्यक् शक्नोति। तदुक्तं कौलाचार्यैः—

सत्यं ब्रवीम्यानुभवं ब्रवीमि स्पष्टं ब्रवीम्येकहितं ब्रवीमि।
कामं विजेतुं सुखसाधनेभ्यः कौलात् परः क्वापि न कोऽपि मार्गः ॥
शिवोऽहमित्यञ्चति पुंसु बुद्धिः शक्तिः परास्मीति च कामिनीषु।
योगस्तयोरस्ति हि चिद्विलासः कौलः स मार्गोऽस्त्यपुनर्भवाय ॥

मार्गाः शतं सहस्राणि तत्तत्त्वाधिगमाय वै।
अयं हि कौलिकः पन्थाः सर्वेषां मुकुटायते ॥
कुलाम्नायविदः कौलाः पूताः परमपावनाः।
कर्मणां बन्धभेत्तारो जयन्ति जगतीतले ॥

कौलसाधना हि नाम तन्त्रसाधना नार्थान्तरम्। तत्र कुलसाधनायां 'म'-पञ्चकविषये नानानामनिर्बन्धाः कल्पा अनुकल्पा मतान्तरस्थापनाग्रहग्रहिलैर्लोकैर्ग्रथितास्त एतावतीं विषमतामापयन्ति, तद्वशादपि न तन्त्रसाधनायां सफलतां विन्दन्ति लोकाः। वैदिककालत एवायं प्रकारोऽक्षुण्णः समायाति, तमेनं सम्प्रदायनिर्मातारो वैष्णवधर्मानुयायिनो नवीना एव लोकास्तिरःकलयितुमिच्छन्ति, ततोऽपि तत्र स्वमनोमहैः काञ्चिच्चमत्कृतिं नार्जयन्ति मुग्धान् तान्त्रिकसेवापरान् भ्रमयन्ति च नरान्, इति नाविदितप्रायं तत्रभवतां विदुषाम्। तदर्थमिह विमृशामः किं नाम तत्त्वम्—
यस्मिन् वस्तुनि यत्सारभूतं तदेव तदिति लौकिकाः। संसारे यत्सारभूतं तदेव तदिति

केचन। जगद्रचनायां यत्सारभूतं तदेव तदिति वेदान्तिनो दार्शनिकाः। एवं संकलनायां सृष्टौ सारभूतानि पञ्चैव पृथिव्यप्तेजोवाय्वाकाशाख्यानि महाभूतान्येव तत्त्वानि। तैरेतैरेव सर्वमिदं विजृम्भितमित्यत्र न कश्चित् सन्देहलेशोऽपि। तदमीषां तत्त्वानामुपयोगः प्रत्यक्षतया स्थूलानां तु बाह्यकार्येषु सूक्ष्माणां चाभ्यन्तरकार्येष्वाधिदैवाधिभौतिकेषु चापि कथं कर्तुं शक्य इति विमर्शे महर्षिभिस्तत्त्वानां सूक्ष्मरूपेणाविर्भूतानां थूस्लानां सूक्ष्माणि प्रावाहिकानि जगतस्तत्त्वानि प्रतीकानि देवोपयोगाय तद्बोधप्राप्तिद्वारा च मूलसूक्ष्मस्वरूपावबोधलब्धये निर्णीय लोके प्रस्तुतानि। तानि हि पञ्च माः (मकाराः)। तदेतद्विमर्श इत्थमनुभूयताम्—

> यावन्न तत्त्वानि हि पञ्च तानि सम्यक् प्रबोद्धुं प्रभवन्ति लोकाः।
> तावज्जगत्कारणबोध एषां चित्ते समुद्यातु कथं विशेषात्॥

तत्त्वानुसेवी हि जगतस्तत्त्वविद्भवति नान्य इति माहेश्वरं वचनम्।

तथाहि—

> यं सेवते स स्वगुणागुणैश्च स्वसेवकस्यानुभवं प्रयाति।
> तत्त्वानुसेवात उदेति तत्त्वज्ञानं कुलाचाररतस्य नूनम्॥ (कौलविलासे)

कथं 'म'पञ्चके तत्त्वानीति विमर्शे—

> मांसाश्रयो जीव इति प्रसिद्धं रसाश्रया चिच्च कलाम्बिकायाः।
> बलं तथाऽस्थ्याश्रयमस्ति चैतत्त्रयं मिथोऽनुग्रहमेव वित्त॥
> विश्लेषणं जातुचिदप्यमीषां न कोऽपि कर्तुं प्रभुरत्र जातः।
> एकस्य नाशे त्रिकमेव नष्टं भवत्यहो नात्र विचारणास्ते॥
> रसो हि सर्वानुगतस्तथापि क्षतेन सोऽयं प्रवहन्निवाऽऽस्ते।
> एवं त्रिकाऽनुग्रहमस्ति चैतत् त्रिकं विशेषेण विचारणीयम्॥
> परस्पराऽनुग्रहवत्स्वमीषु त्रिकं त्रिकं भाति कणानुयातम्।
> अतो हि विश्लेषणयोग्यताया मञ्चे कदाप्यञ्चति न त्रयीयम्॥
> रसो हि मांसं जनयत्यथापि मांसे रसोऽस्त्यम्बुवदम्बुवाहे।
> एवं हि मांसादुपजन्यतेऽस्थि तथापि तन्मांसपरीतमस्ति॥
> बलं तथैव त्रिकगं विभाति विशेषतो ह्यस्थिषु चैतदुक्तम्।
> प्राणोऽद आश्रित्य भवन् विवर्द्धते प्रकाशते चेति चिरं विमृश्यताम्॥

रसो बलं प्राणमनश्चितश्च पञ्चैव तत्त्वानि वदन्ति कौलाः ।
तान्येव भूतानि महान्ति पञ्च मपञ्चतत्त्वं प्रगता विभान्ति ॥
मांसं हि पृथ्वीं बलमाहुराद्याः मद्यं च तेजश्च रसं वदन्ति ।
मीनं मनो वारि तथैव मुद्रां प्राणानिलं पञ्चममम्बरं च ॥

एषां क उपयोग इति चेत्—

तत्त्वानि चैतानि हि रूपमेतुं स्वाभीष्टदेव्यै विनिवेदयन्ति ।
तान्यन्तरा साऽभिमतापि देवी रूपं तद्देवाप्तुमलं कथं स्यात् ॥

उच्यतां भोः ! क्वापि जगति प्राणिनां रचना मांसास्थिशोणितादि विनाऽपि दृष्टा स्यात् ? न वै दृष्टा चेत्—यद् येन विना न सिद्ध्यति तद्देव तस्य तत्त्वमिति विज्ञायताम् । साधनायां च सर्वत्राऽपि पञ्चानांमेषां जगत्तत्त्वानामुपयोगोऽनादिसिद्ध उपायाति । वीक्ष्यताम्—देवोपासनायां क्वापि सम्प्रदाये मानसपूजायां भावपूजायां सर्वैरपि साधकैः—'ॐ लं पृथिव्यात्मकं गन्धम्; ॐ हं आकाशात्मकं पुष्पम्, ॐ यं वाय्यात्मकं धूपम् , ॐ रं वह्न्यात्मकं दीपम्; ॐ वं अमृतात्मकं नैवेद्यममुकदेवतायै समर्पयामीति; तान्येव पृथिव्यादिपञ्चतत्त्वान्येव तद्गुणकीर्तनैः सह समर्प्यन्ते, सत्यमपि दृश्यते—यद्वस्तु यन्मयं भवति तस्य तत्तत्त्वेनैव पोषणं भवति, नान्यथेति विवेचयन्तो भवन्तः सृष्टिन्यायं स्वीकृत्य तान्त्रिकसाधनां सफलयन्तुतरामिति । आश्चर्यमिदमत्यन्तमेव तन्त्रसाधनायां यानि तत्त्वानि परमप्रधानभूतानि तान्येव वियापयत चेत् तत्कथं तन्त्रसाधनां पूरयिष्यथ भोः ! यदि तेषां साधनानामन्ये प्रतीका अनुकल्पाः प्रतिकल्पा वा ग्रहीष्यन्ते चेत्तेषामपि चान्येऽनुकल्पाः प्रतिकल्पा वा तद्गुणसाम्यात्तद्रूपसाम्याद्वा ग्रहीष्यन्ते, पुनस्तेषामप्यपरे ग्रहीष्यन्ते, तेषां चापर इति महतीयमनवस्थाऽऽपतिष्यति ।

अत एव तन्त्रसाधनायां साधनीभूतानां पदार्थानां यथासम्भवं तद्रूपत एवोपादानं समुचितं भवति, नानुकल्पप्रतिकल्परूपेणेति सर्वथैवासम्भावनायां च तद्गुणसाम्यमपेक्ष्य साधनीयोऽनुकल्पो निगदितनिरूपितपूर्वकाणामेव नान्यथेति विस्तरेणालम् ।

साधना हि सर्वकर्मसु बलीयसी, बहुफला च । एतयैव कौशिको महर्षिर्नवीनां सृष्टिमपि प्राक्रमत । एतस्या बलादेव कुम्भोद्भवो महर्षिः सर्वं सागरमेव

चुलुकयाञ्चक्रे—इत्यादि नानोदाहरणानि सन्ति विस्तरभयान्नोल्लिख्यन्ते। अनयैव सर्वैः सर्वाः सिद्धीरुपेता। तदस्यां यथार्थत एव मन्त्राणां तत्तत्कल्पोक्ताः प्रयोगा यथाविधि समनुष्ठीयन्तामिति निवेद्य भगवत्याः पराम्बाया महिम्नः स्तुतिं कलयन् विरमामि। ममैतस्मिन् क्षुद्रप्राये भाषणे याः काश्चन त्रुटयो मम प्रमादादज्ञानाद्वा स्वल्पबुद्धित्वाद्वा शिष्टास्ताः सर्वा अपि क्षन्तव्याः सन्धेयाश्च क्षमामण्डितैः पण्डितैरिति शम्।

पत्या समं नवयुवत्या समा कलितनत्या प्रसीदतितरां
भृत्यार्तिहा करुणवृत्त्याऽऽनमद्दुरितकृत्यानि लोपयसि च।
सत्यावनाय धृतवत्या व्रतानि भगवत्यास्तवाम्ब महिमा
मत्याः परो हृदयगत्याः परो वचनसृत्याः परो विजयते॥
कत्याऽऽश्रितान् कलितनत्या प्रसह्य कृतकृत्यानलं कलयसे
मत्याः परानपि कुकृत्याऽऽकरान् सुकविकृत्यानुयोजयसि च।
हत्या परानपि च दित्याः सुतान् विजितवत्यास्तवाम्ब! महिमा
मत्याः परो हृदयगत्याः परो वचनसृत्याः परो विजयते॥

॥ शं बोभवीतुतराम्॥



# तन्त्रसंस्कृतिपरिषदध्यक्षभाषणम्

अयि भो मान्यमान्यास्तान्त्रिकसाधकाग्रगण्या विद्वद्वरेण्याश्च, एतादृश्यां परिषदि मादृशानामल्पमतीनामध्यक्षपदस्वीकरणं बालानां चन्द्रग्रहणप्रयास इव सुतरां हास्यजनकम्। परं श्रीविश्वनाथवन्दनसंभावनया भवतां सङ्गलाभलोभेन भवत्सकाशादविज्ञाततत्त्वसंग्रहवासनया चैवं सुदुस्तरे वर्त्मनि पदं कृतवन्तमुत्तारयितुमर्हन्ति भवन्तः कृपया।

सुविपुलं तन्त्रशास्त्रम्, तान्त्रिकाचारभूयिष्ठा चास्मदीया जीवनयात्रा। परं सम्यगालोचनाविरहाद् विकृतिबाहुल्याच्च तन्त्रविषयं सुधियामपि बहूनां विरुद्धा मतिः, श्रद्धायाश्चात्यन्तिकोऽभावः। कैश्चित् स्पष्टतया तन्त्रशास्त्रस्य गर्हणं कृतं गूढरूपं कामशास्त्रमेतदित्यादिभिरुक्तिभिः। तान्त्रिकोपासना भोगभूयिष्ठेति परमादरणीयैवेति केषाञ्चिन्मतम्। किञ्चित् किञ्चित् तन्त्रवचनमपि तत्समर्थकमिव प्रतिभायात्। तथा चोक्तम्—

पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते॥

अथ च—

उमापदाम्भोजयुगार्चने तु
भोगश्च मोक्षश्च करस्थ एव।

अपि च—

पेया सुरा प्रियतमामुखमीक्षितव्यं
ग्राह्यः स्वभावललितो विकृतश्च वेशः।
येनेदमीदृशमदृश्यत मोक्षमार्गो
दीर्घायुरस्तु भगवान् स पिनाकपाणिः॥

---

१. वाराणसेयसंस्कृतविश्वविद्यालयेन आयोजितस्याखिलभारतीयतन्त्रसम्मेलनस्यावसरे (११-३-६५ दिनाङ्के) तन्त्रसंस्कृतिपरिषदोऽध्यक्षपदेन प्रदत्तमिदं भाषणं श्रीचिन्ताहरणचक्रवर्तिमहोदयैः—सम्पादकः।

एवं च—

रण्डा चण्डा दिक्खिया धम्मदारा
मज्जं मन्सं पिज्जए खज्जए अ।
भिक्खा भोज्जं चम्मखण्डं च सेज्जा
कोलो धम्मो कस्स नो भादि रम्मो ॥

यत् सत्यं न तन्त्राभिधस्य ग्रन्थमात्रस्यैव तदाश्रितोक्तिपरम्पराया वा प्रामाण्यमङ्गीकरणीयम्। केचिद् ग्रन्था ग्रन्थांशा वा स्पष्टमप्रमाणाः संशयितप्रामाण्या वा। पाञ्चरात्रप्रामाण्यग्रन्थे वेदोत्तमेन, तन्त्रप्रामाण्ये यामुनाचार्येण च यदुक्तं तदत्रावधेयम्। केनचिदर्वाक्तनेन क्षेत्रज्ञेन महेश्वरसमाननाम्ना त्रयीमार्गबहिष्कृतेयं प्रक्रिया विरचिता। तन्नामसामान्येन केचिद् भ्रान्त्या महेश्वरोपदिष्टमार्गमवलम्बितवन्त इति श्रीवेदोत्तमोक्तिः।

वासुदेवाभिधानेन केनचिद् विप्रलिप्सुना।
प्रणीतं प्रस्तुतं तन्त्रमिति निश्चिनुमो वयम् ॥

इति च श्रीयामुनाचार्यवचनम्।

एवं वस्तुस्थितौ तन्त्रस्य विशुद्धस्वरूपावबोधनाय ग्रन्थविशेषस्य प्रामाण्याप्रामाण्यनिरूपणे प्रथमत एव विशेषेणाधेयो यत्नः। समुपलभ्यमानानां प्राचीनानां हस्तलिखितपुस्तकानां सम्यक् समालोचनपुरःसरमाधुनिकशिष्टपरिगृहीतपद्धतिक्रमेण पाठभेदादिनिर्देशपूर्वकं ग्रन्था यदि प्रकाश्येरन् तदात्र विषये सुमहत् साहाय्यं भवेत्। एकस्य ग्रन्थस्य परिदृश्यमानेष्वनेकेषु रूपेषु यद्रूपं प्राचीनतमेषु बहुषु वा पुस्तकेषूपलभ्येत, यद् वा तान्त्रिकनिबन्धेषु धृतं तस्य प्रामाण्यं प्रतिष्ठितमेव नान्यथा। तथा च सुष्ठुतया तन्त्रग्रन्थानां प्रकाशनव्यवस्थाप्रसङ्गेन प्राचीनहस्तलिखितपुस्तकानां पर्यालोचनविषये निबन्धधृतवचनानामाकरानुसन्धाने च दत्तावधानैर्भाव्यम्। आलोचनसौकर्यविधानाय निबन्धधृतग्रन्थानां सूचिरपि संकलनीया, येन ग्रन्थानामामापेक्षिकगौरवमनुमातुं शक्येत। तन्त्रगतविविधविषयपरिचयसम्पादनार्थं तन्त्रकोषोऽप्यपेक्षितः। नैतत् कार्यमेकेन केनचित् सम्पादयितुं पार्यते। एतदर्थं सुव्यवस्थितसंघस्य प्रयोजनं वर्तते। सङ्घद्वारैव तन्त्रस्य स्वरूपव्याख्यानमुखेन तन्त्रविषयकविरुद्धधारणापसारणं संभवेत्। तन्त्रसंबन्धिज्ञानाभावश्च सर्वथा दूरीकार्यः। प्रचलद्रूपाण्यपि तन्त्रकृत्यान्यपरिचिततत्त्वान्येवानुष्ठीयन्तेऽनुष्ठातृभिः। तान्त्रिकपूजनस्य विशेषेण

तदङ्गभूतानां मन्त्रन्यासभूतशुद्धिप्रभृतीनां रहस्यं जिज्ञासूनामाग्रहो यथानधिकेनायासेन पूर्णतां गच्छेत् तथोपायः करणीय एव। तन्त्रशास्त्रस्य गोप्यत्वेऽपि शिष्यतुल्यानां जिज्ञासूनां कृते ग्रन्थद्वारेण रहस्यव्याख्यानं नासमीचीनतया मन्तव्यम्। प्राचीनानां तन्त्रग्रन्थानां प्रचारोऽप्येवमेव समर्थनीयः।

अनतिप्राचीनेऽपि काले तन्त्रशास्त्रस्य प्रचारः समादरश्च व्यापक एवासीत्।

गौडेषूत्पादिता विद्या मैथिलैः प्रबलीकृता।
क्वचित् क्वचिन्महाराष्ट्रे गुर्जरे प्रलयं गता॥

इति यत् कैश्चिदुच्यते, न तद् यथार्थम्, गौडादिसर्वदेशेषु तन्त्राचारस्य समादरदर्शनात् तत्र तत्र तन्त्रसाधकानां तद्विरचितानेकग्रन्थानां सद्भावाच्च। तथा च गौडेषु कृष्णानन्दागमवागीशकृतस्तन्त्रसारः, ब्रह्मानन्दगिरिकृते शाक्तानन्दतरङ्गिणी-तारारहस्ये, पूर्णानन्दपरमहंसकृताः श्यामारहस्य-शाक्तक्रम-श्रीतत्त्वचिन्तामणिप्रभृतयश्च मैथिलनरसिंहठक्कुरकृतस्ताराभक्तिसुधार्णवः, महाराष्ट्रीयनीलकण्ठशैवकृता देवीभागवतटीका-शक्तितत्त्वविमर्शिनी-कामकलारहस्यादयो ग्रन्थाः, ओड्रराजप्रतापरुद्रगजपतीनां सभापण्डितस्य लक्ष्मीधरस्य कृतिः सौन्दर्यलहरीटीका, वाराणसीकृताधिवासदाक्षिणात्यश्रीनिवासभट्टगोस्वामिकृताः शिवार्चनचन्द्रिका-भैरवार्चापारिजात-सौभाग्यरत्नाकरादिविविधग्रन्थाः, वाघेलराजवंशभूषणस्य जैत्रसिंहस्य भैरवार्चापारिजातः, रेवाधिपतेर्महाराजविश्वनाथसिंहस्य मन्त्रार्थनिर्णयः, कूर्माचलीयप्रेमनिधिपन्थस्य प्रयोगरत्नाकरदीपप्रकाशाद्यनेके ग्रन्थाः, नेपालदेशीयस्य भूपालेन्द्रनृपतेर्मन्त्रिणो नवमीसिंहापरनाम्न आद्यानन्दनस्य तन्त्रचिन्तामणि-कुलमुक्तिकल्लोलिन्यादयो ग्रन्थाः, काश्मीरीयाभिनवगुप्तस्य तन्त्रालोकादयो ग्रन्थसमूहाश्च विशेषेणोल्लेखनीयाः। अन्येऽपि बहवस्तन्त्रग्रन्थास्तान्त्रिकग्रन्थकाराश्च भारतभूमेर्विभिन्नविभागानलङ्कृतवन्तः। तन्त्राचारश्च सर्वत्रैव सुप्रतिष्ठित एवाभवत्। पुण्या वाराणसी च तन्त्रशास्त्रानुशीलनस्य केन्द्रमिव व्यराजत। नानाप्रान्तीया बहवः साधकवरा विश्वेश्वरनगरीमधिवसन्तस्तन्त्रचर्चायां कृतप्रयत्ना अभवन्। तेषु श्रीनिवासभट्टानां नाम पूर्वमेवोल्लिखितम्। सुगृहीतनाम्नां भास्कररायमहोदयानाम्, मन्त्रमहोदधिकाराणां महीधरपादानां नाम च विशेषेणोल्लेखमर्हति। विविधग्रन्थप्रणेतारः काशीनाथभट्टभट्टमहोदया अपि वाराणसेया एवासन्।

७

तन्त्राचारनाम्ना शिष्टजनविगीतव्यवहारोऽपि प्रचलत्येवेत्यत्र न संशयो लेशतोऽपि। परं केषाञ्चिदतत्त्वज्ञानामसन्मार्गावलम्बिनां दृष्टान्तेन शास्त्रस्य दोषो न विभावनीयः। यत् सत्यं शास्त्रोक्तोऽपि कौलाचारो बीभत्स एव। किन्तु नैष सर्वेषां कृते। साधारणेन जनेन नैषोऽनुसरणीयः। एतस्य काठिन्यं दुर्बोधत्वं च मुहुर्मुहुरुद्घोषितं शास्त्रेषु।

यैरेवं पतनं द्रव्यैर्मुक्तिस्तैरेव साधनैः।

इति वचनमसंभवमिव प्रतिभायात्। तथा चोक्तम्—

कौलो धर्मः परमगहनो योगिनामप्यगम्यः।

आपातदृष्ट्याऽतीव सुकरो भोगभूमिः कौलाचारः सुतरां कठिन इति नासौ सहसावलम्बनीयः। कठिनताऽस्य शास्त्रेषु स्पष्टमेव कीर्तिता—

कृपाणधारागमनाद् व्याघ्रकण्ठावलम्बनात्।
भुजङ्गधारणान्नूनमशक्यं कुलवर्तनम्॥ इति।

यतो हि—

अर्थाद् वा कामतो वापि सौख्यादपि च यो नरः।
लिङ्गयोनिरतो मन्त्री रौरवं नरकं व्रजेत्॥
संसाराम्बुनिधेः पारं करोति विधिना च सा।
नरकाम्बुनिधौ शक्तिः क्षिपत्यविधिना च सा॥ इति।

लोकोत्तरं वैशिष्ट्यं वर्तते कौलिकानां येन विकृतिकारणान्यपि मद्यादीनि तेषां चित्तविकारं जनयितुं नालं भवन्ति। यथोक्तम्—

अहो पीतं सुराद्रव्यं मोहयेत् त्रिदशानपि।
तन्मद्यं कौलिकः पीत्वा विकारं नाप्नुयात्तु यः।
मद्ध्यानैकपरो भूयात् स भक्तः स च कौलिकः॥ इति।

न च कौलाचार एव तन्त्रशास्त्रस्य सर्वस्वम्। अन्येऽप्याचाराः पश्वाचारदक्षिणाचारादयो वर्तन्ते, येषु न कापि विप्रतिपत्तिः। अस्मदीयधर्मकृत्येषु तान्त्रिकाचारस्यान्तर्भावः प्रभावश्च बाहुल्येन दरीदृश्यते। वैदिकपौराणिकानुष्ठानेष्वपि क्वचित् क्वचित् तन्त्रानुष्ठानं पदं कृतवदिति नाविदितं विदुषाम्। सर्ववर्णसाधारण्यास्तान्त्रिकदीक्षाया

गौरवं द्विजमात्रनिष्ठवैदिकोपनयनतो न न्यूनम्। तान्त्रिकसन्ध्यावन्दनमपि वैदिक-सन्ध्योपासनमिव नित्यं कर्म दीक्षितमात्रस्य सर्ववर्णीयस्य स्त्रीपुरुषनिर्विशेषस्य जनस्य। सत्यपि तान्त्रिकपौराणिकपूजापद्धत्योर्भेदे उभयोस्तथा संमिश्रणं जातम्, यथा शुद्धा पौराणिकपद्धतिर्दुर्लभैव। एवमविशेषपरिचितस्य नातिरेकश्रद्धाभाजनस्य तन्त्रशास्त्रस्य प्रतिष्ठा संशयरहिता सार्वत्रिकी चेदानीन्तनसमाजेऽपि। भारतजनमानसे तन्त्रशास्त्रस्य तन्त्रसंस्कृतेश्च प्रभाव आत्मस्वरूपोपलब्धिप्रसङ्गेनाद्वैतभावनाविकासव्यापारे संभाव्यत एव। तथा च यथास्य शास्त्रस्य सम्यक्परिचयो भवेद् जिज्ञासूनां जनानां मध्ये, तथा प्रयत्नो विधेयोऽस्त्यैः पारिषदैस्तन्त्रानुरागिभिः। सर जान् उड्रफ्-अटोश्राडेर्-प्रमुखाणां वैदेशिकपण्डितवर्याणामेतद्विषयकः प्रयासः सार्थकतामाप्तस्तन्त्राश्रितभ्रान्त-धारणाया अंशतोऽपि निरसनेन श्रद्धायाः कथञ्चित् प्रवर्तनेन चाधुनिकसुधीजनसंसदि। अस्माभिरप्यनुसृते तत्प्रदर्शिते मार्गेऽधिकतरं साफल्यं स्यात्। अविदितपूर्वनवीन-तथ्योद्घाटनेनाविस्पष्टता च दूरीभवेत् परमदेवताप्रीतिश्च जायेत॥



# उद्घाटनभाषणम्

तन्त्रशास्त्रस्य मर्मज्ञा मनीषिणः, विद्वज्जनाः, विद्यार्थिनः, सज्जनाः, देव्यश्च !

भारतवर्षस्य सांस्कृतिकानां वैज्ञानिकानां च आयोजनानामितिहासे प्रथममेवेदं निदर्शनं यदखिलभारतीयं तन्त्रसम्मेलनमायोज्यते, तदपि वाराणसेयसंस्कृतविश्वविद्यालयसदृशेन सुमहता सरस्वतीमन्दिरेण । इदमप्यतीव महत्त्वास्पदं यदस्य सम्मेलनस्य आयोजनसाधनानि भारतस्य विश्वविद्यालयानुदानायोगसदृश्या समुद्बुद्धया संस्थया सम्पाद्यन्ते । सर्वमिदं विचारे विकासप्रवृत्तेः सुनिश्चितं लक्षणम् ।

विचारे विकासः

विकासोऽयं प्रामुख्येन उत्तरप्रदेशराज्यस्य सप्तानां विश्वविद्यालयानां द्वयोः केन्द्रीयविश्वविद्यालययोः कांगड़ीस्थगुरुकुलविश्वविद्यालयस्य च प्रतिनिधिभिर्देशस्य प्रमुखैः शिक्षाशास्त्रिभिः प्रकटितेभ्यो विचारेभ्यः समुद्भूतः । अस्मिन् सन्दर्भे निवेदनमिदमावश्यकं प्रतिभाति यद् भारतीयविश्वविद्यालयानामितिहासे प्रथम एवायं प्रसङ्गो यत् त्रिषष्ट्युत्तरैकोनविंशतिशततमेशवीयाब्दस्य जूनमासे नैनीताले उपकुलपतीनामेकमीदृशं सम्मेलनं समपद्यत; येन राज्यशासनानि केन्द्रीयशासनं विश्वविद्यालयानुदानायोगं भारतीयविश्वविद्यालयांश्चोद्दिश्य एष प्रस्तावः स्वीकृतो यदाधुनिकविश्वविद्यालयेषु प्राचीनभारतस्य कलानां विज्ञानानां प्रविधीनां च प्रारम्भिकानि तत्त्वानि पाठ्येरन्, तदौपयिकानि साधनानि च राज्यशासनैर्विशेषेण केन्द्रियशासनेन च सम्पाद्येरन्, प्रारम्भश्चास्य ईदृशीनां सर्वासां समानविद्यापद्धतीनां मूलभूतस्य संस्कृतस्य शिक्षाप्रदानाय प्रतिष्ठापिते वाराणसेयसंस्कृतविश्वविद्यालये क्रियेतेति ।

उपकुलपतीनां सम्मेलनेनैतदर्थं खेदः प्रकटितो यद् विभिन्नेषु विश्वविद्यालयेष्वाधुनिकज्ञानस्य समसामयिकस्य गवेषणस्य च प्रकाशे प्राचीनभारतस्य विज्ञानानां कलानां च प्रारम्भिकतत्त्वानामध्ययनं न भवति यदासां सर्वासां विद्यानामुन्नतरा-

---

१. वाराणसेयसंस्कृतविश्वविद्यालयेन आयोजितस्याखिलभारतीयतन्त्रसम्मेलनस्यावसरे (८-३-६५ दिनाङ्के) वाराणसेयसंस्कृतविश्वविद्यालयस्य कुलपतिना उत्तरप्रदेशस्य राज्यपालेन महामान्यश्रीविश्वनाथदासमहोदयेन प्रदत्तमिदं भाषणम्—सम्पादकः ।

ध्ययनस्य पृष्ठभूमिरूपेणाधारशिलारूपेण चावश्यकम् । उपकुलपतिभिरयमभिप्रायः प्रकटितो यदेतादृशमध्ययनं विश्वविद्यालयानां सर्वेषु सम्बद्धनिकायेषु प्रवर्तनीयम्, येनासु विद्यासु भारतीययोगदानस्य प्रशस्तः परिचयो विद्यार्थिनां मनःसु जायेत, अस्य निःशेषो निष्क्रयश्च लभ्येत, भारतीयसभ्यताया विकासस्य भावोऽपि प्रोत्साह्येत ।

सम्मेलनेनेदमपि संस्तुतं यदेतदुद्देश्याय सर्वोपयुक्तो वाराणसीस्थः संस्कृत-विश्वविद्यालयो विकास्येत । प्राचीनभारतीयानां कलानां विज्ञानानां संस्कृतेश्च साङ्गोपाङ्गाध्ययनस्य व्यवस्थायै केन्द्रत्वेन प्रतिष्ठाप्येत, नैजस्य च विशिष्टस्य स्वरूपस्य स्थिरतायै विकासनाय च पूर्णतमसाहाय्येन संयोज्येत ।

## प्रस्तावे कृता क्रिया

प्रस्तावोऽयं देशस्य शासनानि विश्वविद्यालयांश्च प्रति प्रेषितः । अस्य प्रस्तावस्य पदान्यनुरुध्य चर्चाः क्रियन्ते, अनुरोधा विधीयन्ते, कतिपयेषां प्रारम्भिकाणां कार्याणामङ्गीकरणाय कतिपयानि साधनानि प्राप्यन्ते । विश्वविद्यालयानुदानायोगो विशेषतश्च तस्य प्रतिभाजुष्टोऽध्यक्षो योगतन्त्रयोर्विधिशास्त्रार्थशास्त्रादीनां प्राचीनभारतीयशाखानां चाध्ययनाध्यापनयोः साधनानि सुलभीकर्तुं व्यवस्थां कृतवानिति सोऽस्माकं धन्यवादार्हः ।

प्राचीनभारतीयविज्ञानेष्वन्यतमस्य तन्त्रस्य प्रभूताः सम्भावनाः सन्धातुं विश्वविद्यालयानुदानायोगो निखिलभारतीयतान्त्रिकसम्मेलनायोजनस्य साधनानि समजीघटदित्येतदर्थमपि समं स साधुवादानधिकरोति ।

## तन्त्रविज्ञानम्

मानवविकासाय पाश्चात्यजगतः समक्षं तन्त्रस्य विज्ञानरूपतायाः प्रकटनमावश्यकम् । महदिदं विज्ञानं यस्य सम्भावनाः पूर्णतयाऽनुभवगोचरीकरणीया । विज्ञानान्तरवद् विज्ञानमिदं सैद्धान्तिकम् । साधना तु क्रियात्मकस्य रूपम्, यदस्ति दुरूहतमम् । विंशतितम्याः शताब्द्या आदौ सरजानवुडरफमहोदयेन भणितं यदस्य विज्ञानस्य मर्मज्ञाः शनैः शनैर्ह्रसन्ति । इदं तदा यदि सत्यमासीदधुना त्विदं सत्यतरम् । विज्ञानस्य सैद्धान्तिकेऽनुशीलने रतानां विदुषां संख्यात्पा, अल्पीयसी च तावत्साधनानिरतानां प्राज्ञानाम् ।

अस्मिन् विज्ञानेऽप्यनुरक्तेर्ह्रासः परिलक्ष्यते। इयं स्थितिस्तु परिवर्तनीयैव। यतस्तन्त्रस्य विश्वसंस्कृतेर्निर्माणे महान् भागो वर्तते। अस्मिन् सम्मेलने विश्वविद्यालयानुदानायोगेन प्रदत्तसाधनान्येव विवेकशालिनां भारतीयानां प्रशासकानां चाभिरुचिं सूचयन्ति। एवमिदमस्य विज्ञानस्य साधकानां शुभचिन्तकानां च नूनं नवीनोत्साहप्रदर्शनं गम्भीरसाधनं चावाहयति। यतो हि तन्त्रं विश्वसंस्कृतेरुत्थानाय सफलं सहयोगं ददातु, अन्यच्च विज्ञानस्य पूरातनभारतीयपद्धतेरुत्कर्षं च प्रदर्शयतु।

## शून्यात् तन्त्रस्य प्रवृत्तिः

तन्त्रेण तन्त्रसम्प्रदायेन च शून्यादेव प्रवर्तितव्यम्। विज्ञानजगति संस्कृतिजगति च सम्मेलनेन न केवलं तन्त्रस्य सम्भावनानि विवेचनीयानि; प्रत्युतास्य असन्दिग्धयोगदानपूर्वपीठिकया सह च तानि विचारणीयानि। अत एतदावश्यकं प्रतिभाति यत् तन्त्रविषयेऽखिलस्य प्राप्यसाहित्यस्य संकलनाय सम्पादनाय प्रकाशनाय च प्रयत्नो विधेयः। तिब्बतीयपाल्यादिष्वनेकेषु प्राकृतेषु किं वा राष्ट्रियभाषासु सुलभमेतत् साहित्यं स्यात्। कालान्तरेण सर्वमेतत् कस्याञ्चिद् विशिष्टभाषायामनूद्यं भवेत्। अपरं च सैद्धान्तिकः प्रायोगिकश्च पाठ्यक्रमः सामान्यप्रमाणपत्रीय-स्नातकोत्तरीयपाठ्यक्रमेषु साधनासु च विभाजनीयः। अन्यच्चास्मिन् क्षेत्रे सम्प्रत्यध्यापकाः प्राध्यापकाश्च प्रायशो दुर्लभा एव। समस्येयं पुनरपि विशेषेण तदानुभूयते यदा सुलभेषु योग्यसाधकेष्वप्यल्पीयांस एव विश्वविद्यालयेन निर्धारिते प्रतिबन्धेऽनुशासने चात्मानं नियन्तुं स्वीकुर्वन्ति। प्रायशस्ते स्वावासं त्यक्तुं नेच्छन्ति। एतासु विषमपरिस्थितिष्वस्मिन् सम्मेलने विषयोऽयं सम्यग् विचारणीयः।

## तन्त्रस्य सम्भावनानि

एवं श्रूयते—युद्धे हता निखिलासुरसैनिका महता शुक्राचार्येण पुनरुज्जीविताः। पुराणेषु तन्त्रप्रभावेण महद्भिः सैनिकैरनुष्ठिता अद्भुतप्रयोगा अलौकिकचमत्काराश्चोल्लिखिताः सन्ति। इमे प्रश्ना अपि विचारणीया यद्याप्यावश्यकसाधनाभिः किमेता लोकोत्तरशक्तयः सम्भवन्ति। पुनस्तन्त्रप्रयोगे वगलासिद्धिः, पिशाचीसाधना, तथा अपराश्च साधना वर्तन्ते। तास्तु दुष्कराः साधनाः परं तासां सम्भावनानि तु महान्ति सन्ति। यदि पुरातनकालेष्वेताः साधना यथार्थाः सम्भवप्रयोगा-

आसन् तद्वैगत्येऽपि तासां सम्भाव्यसिद्धौ न किञ्चिदकारणं परिलक्ष्यते। एवं प्रस्तूयते यदस्य विज्ञानस्य साधकानां साधनेच्छाप्रोत्साहनाय जनानां शासकानां च प्रवृत्तिरप्यपेक्ष्यते। सम्मेलनमिदमाश्वासयामो वयं यत् पुरातनविज्ञानस्य संस्कृतेश्चोपासकैरुपक्रान्तस्य कस्यचिदपि विज्ञानस्य साधनायाश्च प्रोत्साहनाय जनाः शासकाश्चोभयेऽपि नूनं सन्नद्धा भविष्यन्ति। एभिः शब्दैरुद्घाटयामि सम्मेलनमिदं साकल्येनास्य साफल्यं च वाञ्छामि ॥

***

# कुण्डलिनीविज्ञानरहस्यम्

श्रीब्रह्मचारी राजानकलक्ष्मणः, काश्मीरस्थगुप्तगङ्गान्तर्गतेश्वराश्रमवास्तव्यः ।

स्वाधारादुल्लसन्ती द्युतिविदितमहादिव्यतेजःस्वरूपा
षट्चक्रं स्फोरयन्ती गतिकृतमधुरध्वानमावेदयन्ती ।
प्राप्येशं तोषयन्ती दशशतकमले व्याप्य विश्वं स्थिता या
विश्वानन्दप्रवाहान् वितरतु भवतां कौलिकी कुण्डली सा ॥

अथ तन्त्रसम्मेलनसमारोहदिवसे मया कुण्डलिनीविज्ञानविषयमधिकृत्य यथाबुद्धि यथागुर्वाम्नायञ्च किञ्चित् प्रस्तूयते ।

सामान्यरूपतया पूर्णाहन्तारूपा शैवी विसर्गशक्तिः कुण्डलिनीति कथ्यते, या सार्धत्रिवलयाकारा आम्नायेषु प्रतिपाद्यते । तत्र प्रमेयप्रधानमहन्तारूपं कुण्डलिन्याः प्रथमो वलयः, प्रमाणप्रधानमहन्तारूपत्वं द्वितीयो वलयः, प्रमातृप्रधानमहंस्वरूपत्वं चास्यास्तृतीयो वलयः, तथावशिष्टार्धवलयः प्रमाप्रधानाहमात्मक इत्यस्या आगमिकी रहस्यप्रक्रिया ।

इत्येवंरूपा परविमर्शात्मासौ परा संविदेव यदा बहिरौन्मुख्यलक्षणात् स्वातन्त्र्यात्तत्तद्रूपतयाऽवविभासयिषया स्वात्मन्येव प्रोल्लसति, तदा सा परा शक्तिर्घटपटादिभावं स्वात्माभिन्नरूपतया विमृशन्ती सुप्ताहिसदृशी शक्तिकुण्डलिनीति सर्वाम्नायेषु निगद्यते । येयम्—

प्रकाश्यसर्ववस्तूनां विसर्गरहिता तु सा ।
[ ३-१३९ ]

इति श्रीतन्त्रालोकोक्तनीत्या विसर्गरूपापि विसर्गरूपतामनश्नुवाना स्वात्मन्येव चमत्कृतिमयी शिवस्याद्योन्मेषात्मिका शक्तिर्भवति ।

किञ्च, शैवशासनदृष्ट्या यदा योगी स्वात्माभिन्नशिवस्वरूपपरामर्शानुसन्धानवशाद्विश्वात्मसाक्षात्काररूपायां समावेशभूमौ तिष्ठति तदास्य विसर्गशक्तौ समावेशो जायते, येन स परमं शक्तिस्पन्दं स्वात्मनि चमत्कुर्वन् शक्तिकुण्डलिनीदशामाविशति । शक्तिकुण्डलिन्याः स्वरूपं तंत्रसद्भावे यथा—

या सा शक्तिः परा सूक्ष्मा निराचारेति कीर्तिता।
हृद्बिन्दुं वेष्टयित्वान्तः सुषुप्तभुजगाकृतिः॥
तत्र सुप्ता महाभागे न किञ्चिन्मन्यते उमे।
चन्द्राग्निरविनक्षत्रैर्भुवनानि चतुर्दश।
क्षिप्तोदरे तु या देवी विषमूढेव सा गता॥

सैव शक्तिकुण्डलिनी भगवती श्रीतन्त्रालोके—

कला सप्तदशी तस्मादमृताकाररूपिणी।

इत्यारभ्य—

प्रकाश्यसर्ववस्तूनां विसर्गरहिता तु सा।
शक्तिकुण्डलिका..............................॥

इत्यन्तं निरूपितास्ति। परापराशक्त्यपरपर्यायाया विसर्गशक्तेरियं बीजात्मिका मध्यमा दशा भवति। अस्या विसर्गशक्तेराद्यन्तदशयोर्वर्णनं प्राणकुण्डलिनी-पराकुण्डलिनीनिरूपणावसरे भविष्यति।

कामकलापरामर्शानुसारेण कौलयोग्यपि चर्याक्रमे तां शक्तिकुण्डलिनीं सिद्धयोगिनीसङ्घट्टात्मकसमावेशावसरे कामतत्त्वरूपतया साक्षात्करोति। यदाहुराचार्या-भिनवगुप्तपादाः—

अत एव विसर्गोऽयमव्यक्तहकलात्मकः।
कामतत्त्वमिति श्रीमत्कुलगुह्वर उच्यते।
कामस्य पूर्णता तत्त्वं सङ्घट्टे प्रविभाव्यते॥
[तं० ३-१४६]

श्रीवातूलनाथाचार्येणापि—

"सिद्धयोगिनीसङ्घट्टान्महामेलापोदयः"

इत्यस्मिन् सूत्रे महामेलापशब्देन सेयं शक्तिकुण्डलिनी निरूपिता, यस्यां क्षणमात्रमपि स्थितिं प्राप्य कौलयोगी वेद्यवेदकात्मशिवशक्त्यात्मद्वयविगलनेन तां शिवशक्त्यात्ममहासामरस्यरूपां स्थितिमनुभवति—इत्यस्यां सिद्धयोगिनीसङ्घट्टा-त्ममहामेलापदशायां शक्तिकुण्डलिनीदशामनुभवन् यः कौलयोगी चर्याक्रममाचरति,

स एव चर्याक्रमेऽधिकृतोऽस्ति, नान्य इत्यवधातव्यम्। तस्मात् परिपूर्णस्वात्मावमर्शनिष्ठानां पूर्णाशयानामेवास्मिन्निरुत्तरसमावेशास्पदे चर्याक्रमेऽधिकारो नेतरेषाम्। यदाहुः श्रीक्षेमराजपादाः—

ते नात्राधिकृताः परैः पुनरिदं पूर्णाशयैश्चर्च्यताम्।
[स्पं० नि०]

अथ प्राणकुण्डलिनीस्वरूपं निर्णीयते। चिच्चमत्कृतिरूपा विसर्गशक्तिः,

स्वात्मनः स्वात्मनि स्वात्मक्षेपो वैसर्गिकी स्थितिः।
[तं० ३-१४१]

इत्याचार्याभिनवगुप्तपादोक्तथा स्वात्मन्येव विसर्गस्योन्मेषदशां परामृशन्ती 'प्राक् संवित्प्राणे परिणता' इति नयेन प्राणनरूपतां चावभासयन्ती प्राणकुण्डलिनीरूपतयागमेषु निरूप्यते। यद्यप्यस्यां प्राणकुण्डलिनीरूपायां विसर्गशक्तौ प्राणनरूपत्वाद्बहिर्भावावभासनात्मिका स्थितिर्दृश्यते; तथाप्यत्र प्राणादिपञ्चवाहस्यानुन्मीलनात् स्वात्मानन्दचमत्कृतिमयत्वमेव सर्वतः प्रवर्तते। इयमेव प्राणकुण्डलिनीरूपा चितिशक्तिर्विसर्गस्यादिकोट्यात्मनि स्वरूपे स्फुरतीति कौलयोगिभिरनुभूयते। अत्र तु स्वानुभवसारमपि किञ्चिन्मया वर्ण्यते—

तामाश्रित्योर्ध्वमार्गेण चन्द्रसूर्यावुभावपि।
सौषुम्नेऽध्वन्यस्तमितो हित्वा ब्रह्माण्डगोचरम्॥
तदा तस्मिन् महाव्योम्नि प्रलीनशशिभास्करे।
सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः॥
[स्पं० २४-२५]

इति श्रीवसुगुप्तपादप्रतिपादितनयेन यदा शैवयोगी क्षणमप्यवधानशैथिल्यमसहमानः सततमेव शिवात्मभावमनुसन्दधानः समावेशदशायामुन्मुखो भवति, तदास्य स्वात्मानुसन्धिबलादेवोभौ प्राणापानौ सौषुम्ने मार्गे लयं गच्छतः, तदनन्तरमस्य प्राणशक्तिर्मूलाधारपदवीमाश्रयते। तस्मान्मूलाधारान्मध्योर्ध्वमार्गेण प्रोच्छलन्त्यां विकस्वरायां प्राणशक्तौ योगी प्राणकुण्डलिन्यवस्थामनुभवति।

अत्र [प्राणकुण्डलिनीसमावेशदशायां] योगिनां द्वे गती भवतः। तत्राद्या यथा—केषाञ्चिद्यदा प्राणापानौ मध्यमार्गे लयं गच्छतस्तदा प्रथमं तावदधोमुखौ सन्तौ लम्बिकास्थानं भित्त्वाङ्गुलिपिहितकर्णघोषवद् ध्वनन्तौ मूलाधारचक्रं वेधयतः, तदास्य योगिनो मूलाधारचक्रमुक्तप्रकारेणैव सशब्दं पूर्णवेगेन परिवर्तत इति योगी प्राथम्येनानुभवति। ततो मूलाधारचक्रादुत्थिता मध्यवाहिनी प्राणशक्तिर्द्वितीयं नाभिस्थानगतं चक्रं वेधयति, यद्वशात्तद्द्वितीयमपि नाभिचक्रं वेगेन सशब्दं परिभ्रमति। तदानीं योगी यौगपद्येनानयोश्चक्रयोः परिवर्तनदशामनुभवति। तदनु तस्य योगिनः प्राणशक्तिर्नाभिचक्रात् समुत्थाय वेगेन हृच्चक्रं वेधयित्वोर्ध्वं गच्छति, तदा स योगी हृच्चक्रस्यापि वेगेन परिवर्तनदशामनुभवति। ततः कण्ठस्थानमाप्ता सा मध्यवाहिनी प्राणशक्तिः कण्ठस्थानगतं चक्रमेवं भ्रूमध्यस्थानगतं चक्रञ्च वेगेन वेधयति, यद्वशात्ते उभे चक्रे अपि वेगेन परिवर्तेते—इत्यस्य योगिन एवानुभवगोचरत्वमेति। इत्थं बिन्दुस्थानगतं चक्रं वेधयित्वायं योग्यस्यां प्राणकुण्डलिनीस्पन्दनदशायां मूलाधारचक्रस्थानादारभ्य भ्रूमध्यस्थानगतचक्रपर्यन्तानां समस्तानां चक्राणां यौगपद्येन सवेगं परिवर्तनरूपत्वमनुभवति, यदनन्तरमेव योगिनमणिमाद्यष्टसिद्धयः समाश्रयन्ते। अमुमेवाशयं वेधदीक्षाविचारावसरे आचार्याभिनवगुप्तपादाः श्रीतन्त्रालोक उपोद्बलयन्ति—

> वेधदीक्षा च बहुधा तत्र तत्र निरूपिता।
> सा चाभ्यासवता कार्या येनोर्ध्वोर्ध्वप्रवेशतः॥
> शिष्यस्य चक्रसंभेदप्रत्ययो जायते ध्रुवः।
> येनाणिमादिका सिद्धिः........................॥
>
> [२९।२३७-२३८]

अथापरा सृतिर्यथा—केषाञ्चिच्च मन्दयोगिनां मध्यनाड्यां यदा प्राणापानावस्तं गच्छतस्तदा तेषां परमेश्वरशक्तिपातस्य मन्दत्वादेव मध्यवाहिनी प्राणशक्तिर्विपर्ययेणैव प्रथमं भ्रूमध्यस्थानगतं चक्रं वेधयति, यद्वशादस्य योगिनस्तच्चक्रं प्रथमं सशब्दं घूर्णते। तदनु कण्ठस्थानगतं चक्रं ततो मूलाधारस्थानं यावदखिलानि चक्राणि सशब्दं परिवर्तन्ते, येन तस्य योगिनः संसारवासनायास्तत्रावस्थितत्वेन न किञ्चिदनुभवगोचरत्वमेति। अणिमाद्यष्टसिद्धीनां कथा तु दूरापास्तैव; प्रत्युत स योगी निम्नाङ्कितेन पिशाचावेशेन समाविष्टो भूत्वा विघ्नपरम्परामेवानुभवति। यदुक्तं श्रीरत्नमालायाम्—

अधोऽवस्था यदा ऊर्ध्वं संक्रामन्ति वरानने।
सैव मोक्षपदावस्था सैव ज्ञानस्य भाजनम्॥
ऊर्ध्वचक्रगतावस्थाः यदाधः संभवन्ति च।
तदा पैशाच आवेशः स वै विघ्नस्य कारणम्॥

अथ कामकलां परामृशन् योगी सिद्धयोगिनीसङ्घट्टावसरात्मके चर्याक्रम इमां प्राणकुण्डलिनीदशां विषतत्त्वप्रवेशसमयेऽनुभवति। पूर्वोक्तरूपायां महामेलापदशाया-मादौ या दशा ह्यनुभूयते, सैव विषतत्त्वरूपागमेषु वर्णितास्ति। श्रीकुलगुह्वरतन्त्रे इयमेव वेधदीक्षा मन्त्र-नाद-बिन्दु-शाक्त-भुजङ्ग-परेतिरूपा षोढा वर्णिता—

मन्त्रवेधं तु नादाख्यं बिन्दुवेधमतः परम्।
शाक्तं भुजङ्गवेधं तु परं षष्ठमुदाहृतम्॥

वेधदीक्षाषट्कस्य स्वरूपमधस्तान्निर्दिश्यते। मूलाधारचक्रादुत्थिता पूर्णाहन्ता-त्मकमन्त्रस्वरूपा प्राणकुण्डलिनी पूर्णाहन्ताबलात् समस्तानि चक्राणि वेधयन्ती आदिमा मन्त्रवेधदीक्षेति कथ्यते। मध्योर्ध्ववाहक्रमेण च प्रोच्छलन्ती नादाकारा सा द्वितीया नादवेधदीक्षेति भण्यते। वीर्यस्वरूपा सा प्राणकुण्डलिनी समस्तं चक्रवर्गं वेधयन्ती तृतीया विन्दुवेधदीक्षेति नाम्ना व्यपदिश्यते। शक्तिरूपतामापन्ना चक्रवेधनक्रियापरा सा तुर्या शाक्तवेधदीक्षा भवति। सर्पाकारतामादधाना चक्रवेधनञ्च कुर्वाणा व्युत्ति-ष्ठन्ती भुजङ्गवेधदीक्षा पञ्चमी। पराशक्तिरूपतामाश्रयन्ती समस्तचक्रवेधनशीला सा परवेधदीक्षा षष्ठीति।

अथ पराकुण्डलिनीस्वरूपं विमृश्यते—परचितिरूपा विसर्गशक्तिर्यदान्तर्भावों-न्मुख्यरूपान्तःकोट्यात्मनि स्वरूपे स्वात्मानं चमत्कुर्वाणा पूर्णाहन्तात्मके पद इदन्ता-समावेशं तथेदन्तात्मके पदे पूर्णाहन्तायाः समावेशं कुर्वती समाधिव्युत्थानसामरस्य-दायिनीं क्रममुद्रारूपां जगदानन्दस्वरूपात्मिकां पराकुण्डलिनीदशां प्रकाशयति। जगदानन्दस्य लक्षणं श्रीतन्त्रालोके यथा—

यत्र कोऽपि व्यवच्छेदो नास्ति यद्विश्वतः स्फुरत्।
यदनाहतसंवित्तिपरमामृतबृंहितम्                    ॥

यत्रास्ति भावनादीनां न मुख्या कापि संगतिः ।
तदेव जगदानन्दमस्मभ्यं शम्भुरूचिवान् ॥
[ ५-५१,५२ ]

अत्रापि स्वानुभवानुसारं मया किञ्चिल्लिख्यते—तीव्रशक्तिपातभाजनस्य शिवयोगिनः प्राणा यदा सौषुम्ने मार्गे समाविशन्ति, तदा तस्य प्राणशक्तिर्मध्योर्ध्ववाहक्रमेण षट्चक्रवेधनक्रममस्पृष्ट्वैव ब्रह्मरन्ध्रस्थानमासाद्य चिदानन्दस्वरूपा भवति । इत्थं तस्य योगिनः क्रममुद्रायां समावेशो जायते । क्रमसूत्रेषूक्तम्—

"क्रममुद्रया अन्तःस्वरूपया बहिर्मुखः समाविष्टो भवति साधकः । तत्रादौ बाह्यादन्तः प्रवेशः, आभ्यन्तराद्बाह्यस्वरूपे प्रवेश आवेशवशाज्जायते । इति सबाह्याभ्यन्तरोऽयं मुद्राक्रमः" इति ।

किञ्चेदृशीं समावेशदशामनुभवन् समावेशचमत्कृतिबलादेव व्युत्थानेऽपि समस्तं भावजातं चिद्गगने लीयमानं पश्यन् योगी यदा किञ्चित् किञ्चिद् व्युत्तिष्ठति, तदा तस्य सर्वाणीन्द्रियाणि प्राणापानसहितानि क्षणं प्रादुर्भूय स्वात्मन्येव लीयन्ते, इत्थं स हिण्डोललीलावदुभयतः प्रसरन्तीमन्तर्बहिःसमावेशात्मिकां दशामनुभवन्नेव पराकुण्डलिनीधाम प्रविशति, येनास्योर्ध्वकुण्डलिनीरूपायां क्रियाशक्तौ समावेशो जायते, यद्वशात् कौलयोग्यपि सिद्धयोगिनीसङ्घट्टवेलायां निरञ्जनपदभाग् भवति । उक्तं हि—

"क्रियादेवी निरञ्जनम्" इति ।

एवं कामकलारहस्याभिप्रायेण कामतत्त्वमिच्छाशक्तौ, विषतत्त्वं ज्ञानशक्तौ, निरञ्जनतत्त्वञ्च क्रियाशक्तावन्तर्भवन्ति । तथेच्छाशक्तिः शक्तिकुण्डलिनीति, ज्ञानशक्तिः प्राणकुण्डलिनीति, क्रियाशक्तिः पराकुण्डलिनीति च तत्र तत्र शिवागमेषु व्यपदिश्यते ॥



# कुण्डलिनीप्रकाशः

श्रीरामेश्वरझा आचार्यः, जोशीनिवासः, कोल्हुआ, वाराणसी ।

चित्सुधासमुद्रस्य देशकालाद्यतीतस्य सर्वथा परिच्छेदशून्यस्य व्यपदेष्टुमनर्हस्यापि कथञ्चिदखण्डमण्डलाकारादिशब्दाभिलक्षितस्य परमशिवस्य स्वाभिन्ना तादृश्येव पूर्णा समाश्रितसामरस्या शान्ता शक्तिप्रतिभा कौलिक्याद्यनेकाभिधानाऽनाद्यभेदप्रणयरसिका शक्तिरस्ति सामरस्यावस्थायां परमानन्दं सम्पादयन्ती ।

सैव स्वभावात् समुन्मिषन्ती तस्य तदानन्ददानविमुखीव भवन्ती कुटुम्बकार्यसम्पादनव्यग्रा मनोरमा जायेव कुलकार्यव्यापृता सङ्कुच्य प्रसरन्ती प्रसरणशक्तिविग्रहा भवति । सम्भोगशृङ्गाररससहचरी विप्रलम्भालम्बनायमानेव जायते तदा जगल्लीलापरायणा जगद्रूपा भवतीति ब्रह्माण्डपिण्डाण्डयोर्व्यष्टिसमष्टयोश्चैकरूपत्वाद् देहस्वरूपा भवति ।

सर्वैरनुभूयमाना देहोत्पत्तिप्रक्रियैवेयं विमृश्य परिदृश्यमाना सम्यगवगमयति, देहस्य विश्वस्य च शक्तिशिवमयतामथ च शक्तिसंवलितस्वात्मनो नित्यानन्दमयविसर्गवत्त्वम् । येन च शक्त्यात्मकस्वकुण्डलिन्या उद्बोधनं स्वाधीनं विज्ञातं सत् सुकरं भवतीति तां प्रक्रियामेव पूर्वं प्रस्फोटयामि—"तस्माद्वा एतस्मादात्मनः सकाशादाकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवीति", "आत्मैवायमग्र आसीत्", "आनन्दाद्धि प्रजाः प्रजायन्ते" इत्यादयः श्रुतयो दृश्यन्ते । अनुभूयते च स्वमहिम्नि वर्तमानोऽयं पुरुषः स्वातन्त्र्यादेव स्वभावात् परिहाय स्वानन्दमग्नतां स्थितिं प्रथमं जायामभिलष्यति, अभिलाषश्च नान्तरेण शब्दनं सम्पद्यते; शब्दानुवेधस्य तत्रानुभूयमानत्वादिति तदभिलाषोत्पत्तिरेव शब्दतन्मात्रात्मकशुद्धाकाशावभासनात्मिकाकाशसृष्टिः । अभिलषतश्चास्य पुरुषस्य जायमानमानन्देन्द्रियकाठिन्यमेव स्पर्शतन्मात्राविरूढं वायुं तत्सृष्टिं चावगमयति । अनन्तरञ्च वायुरूपतापन्नकामजन्योष्मैव वह्निः । अतश्चाग्ने रसात्मकं वीर्यम्, तस्माच्च देहात्मिका पृथिवी भवतीति सर्वेषामस्मदादीनां स्वानुभवगोचरोऽयं विषयो न वाञ्छति स्वसिद्धिं प्रत्युप-

पत्त्यादिकमन्यत्। पुरुषस्य चानन्दाज्जायमानत्वादानन्दाधारत्वाच्चानन्दमयता सदैवानपायिनी यद्यप्यस्ति; तथापि सा सृष्ट्युद्यतस्य समन्तात् समुज्जृम्भमाणा स्वसाक्षिकेति किं तत्र वक्तव्यम्। शिवात्मा स्वात्मा तु सर्वतः पुरस्तादस्त्येवेत्यपि स्वानुभवसिद्धमेव। श्रान्तेव शक्तिः पृथिव्याः परतो न प्रसरतीति न तत्त्वान्तरोत्पत्तिरितोऽग्रे। अत एव निवृत्त्याख्या कलात्र तिष्ठतीति शास्त्रे प्रतिपादितम्। अत्र गतिनिवृत्तिरूपा स्थितिरेव शक्तिर्न पुनरितः परावर्तमानता, यतोऽसंख्यातौषधिपिण्डाण्डरूपतया पौनःपुन्येन तथैवारचयन्ती स्वभावादुपलभ्यत एव। देहेऽपि सहस्रारतः पादतलं यावदाकाशादिपञ्चभूतात्मके पृथ्वीस्थाने मूलाधारे प्रसुप्ता तिष्ठति। सामरस्यसुखलोलुपमायान्तं शिवं भ्रमयति, संसारे पञ्चेन्द्रियप्रवृत्त्या शब्दस्पर्शरूपरसगन्धग्रहणत्यागात्मकसृष्टिसंहारौ कुर्वन्ती तथाऽऽदानविसर्जनानन्दाद्यर्थप्रवृत्त्या च प्रजासृष्टिं स्थगयन्ती चकास्तीति प्रत्यक्षमिव प्रसिद्धं धीमतां विवेककुशलानाम्।

अत्र शिववैमुख्यमेव शक्तेर्मायात्मता, तथा शक्त्यनुधावनमेव च शिवस्याभिलषितत्वापूर्णम्मन्यतादिविमोहः। नहि प्रकाशात्मशिवाधारं परित्यज्य शक्तेः स्थितिर्युक्तेति प्रधानतया स्वाधारविमर्शनं विहाय पराहंभावं विमुच्येव यद्विरमतीव शक्तिः, तं विरामरूपं शून्यातिशून्यं महामायास्वरूपं शिवः स्वरूपतया प्रथममभिमनुते। ततः पुनः शक्तिः क्रमात्तत्त्वाध्वरूपतया बहिर्गच्छन्ती, पञ्चतत्त्वरूपतया वा धावन्ती पृथिव्यां तिष्ठति। शिवश्च तामनुगच्छन्नत्र देहे विद्योतत एव; परन्तु देहात्मतया न पुनः स्वस्वरूपतयेति बद्धः पशुरुच्यते। यदा पुनः शक्तिः प्रतिनिवर्त्य पूर्णाहंभावस्वरूपा तिष्ठति, तदा शिवो मुक्तशिव उच्यत इति।

तत्त्वतस्तु—उन्मेषनिमेषस्वभावस्पन्दशक्तिमतो भगवतश्चिदात्मनः परमशिवस्य निष्कलसकलोभयरूपस्य अधिविद्याविद्ययोस्तिष्ठतो विश्वं विश्वोत्तीर्णं चोभयं स्वरूपभूतमेवास्तीति न संसारो न वा मोक्षस्तं स्वरूपतया प्रत्यभिजानतां परयोगिनां चेत्यस्माकं श्रीगुरुचरणरजःपूतानामागमः। अस्त्वेतावदेवैतत्; निजानन्दनिमग्नस्याजन्मतोऽज्ञातस्यापि सुखस्य या प्राप्तीच्छा यौवनोद्गमे लोकस्य स्थावरजङ्गमजीवमात्रस्य वा विसर्जनात्मिका सृष्टिकर्तृता प्रत्यक्षीक्रियते सर्वतः स्वानुभवतश्च, सा स्वभावभूता स्वस्मिन् स्वस्मात् स्वयं समुद्भूतोच्छलत्तैव सिसृक्षात्मिका, सृष्ट्यात्मिका च। स्वभावभूताया अप्यस्याः क्वचन सरीसृपपशुपुरुषादौ शिवशक्तिविभक्तलिङ्गधृत-

विग्रहयोः पारस्परिकौन्मुख्यसंलब्धसंयोगतः पूर्तिरुपजायते। क्वचन पुनर्वृक्षलतादौ परमनपेक्ष्यैकस्मिन् स्वस्मिन्नेव सा पूर्तिरुपलभ्यते। यथा पितरौ भ्रातरावुत्पादयन्तौ सृष्टिपरम्परात्मिकां सृष्टिं रक्षतस्तथैव तां लतावृक्षादयोऽपि पुष्पफलबीजान्युत्पादयन्तः स्थगयन्ति। इति यथेदं निर्विवादं भूतपञ्चात्मकं जगत् परिदृश्यते। दृश्यतेऽनुभूयते चैकस्मादपरस्योत्पत्तिस्तथैवैतेषां मूलभूतस्यैकस्याकाशस्यापि च प्रकाशकतयाधारभूतस्तस्मादपि सूक्ष्मतमः स इव सर्वत्रानुगतः स्मर्ता ज्ञाता स्वतन्त्रः परमेश्वरश्चिदाकाशचिद्घनचिदानन्दादितत्तद्विलक्षणतया तैस्तैः सिद्धयोगिजनैरनुभूतः सर्वस्मात् पूर्वसिद्धोऽस्ति, आकाशादिरिवैकोऽपि योऽस्मदादिब्रह्मकीटगुल्मादिरूपेण चकास्ति। इत्थंभूतः स एवायमहमस्मीत्यात्मानं सर्वशक्तिमन्तं विदित्वा पौनःपुन्येन निभाल्य स्वरूपस्थो योगी जागृतबोधकुण्डलीको देहस्याधारचक्रगतां कुण्डलीं स्वातन्त्र्यशक्त्या द्रागेव यथोद्बोधयति, स खल्वेष प्रकारः।

पौनःपुन्येन संस्मृतस्वातन्त्र्यशक्तिः स्थिरमतिरुत्साहसमन्वितः साधक ऊर्ध्वाधःस्थद्वादशान्तात् प्राणापानोदयलयस्थानात् प्राणसूत्रं हंसं शनैः शनैः परामृशन् अनायासेनैव तं मध्यधामस्थपरस्मिन् महसि विलापयन् प्राणापानात्मकधर्माधर्मसूर्येन्दुदिनरात्र्यादिद्वन्द्वविनिर्मुक्तमध्यमज्योतीरूपशुद्धप्रमातृस्वरूपः प्रोन्मीलिततृतीयनेत्रो भवति। अथ च नित्यप्रद्योतितात्मशक्तिरकृतप्राणापानजयोऽपि योगी मूलाधारस्थापितमनाधृतधैर्यः शक्तिद्वादशान्ताद् नासिकावधिकबहिर्द्वादशाङ्गुलिस्थानात् प्राणापानयोरस्तोदयस्थानात् तुट्यात्मकपञ्चदशतिथिप्रधानपञ्चदशीतोऽमाकलापरनाम्नः प्राणापानयोरविरोधादेव प्राणापानौ शनैः शनैर्ग्रसन् स्वल्पसमयाभ्यासत एव मध्यधामप्रविष्टः कुण्डलीशत्वं स्वस्यावगच्छतीति।

सन्ति यथान्यानि नामानि भगवत्यास्तथैव कुण्डलिनी, कुण्डली, कुण्डिकेत्याद्यपि तस्या नाम। यथा लघुस्तवे—

माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी।
शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रीङ्कारी त्रिपुरा परापरमयी माता कुमारीत्यसि॥ १८॥

तथा सकलजननीस्तवे श्यामाकारत्वेन कुचभरनतत्वेन च कुण्डली विशेषिता, तथाहि—

यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या
योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम्।
तस्याप्यन्तः कुचभरनतां कुण्डलीति प्रसिद्धां
श्यामाकारां सकलजननीं सन्ततं भावयामि ॥ ३७ ॥ इति ।

तथा चर्चास्तवेऽपि—

त्वां व्यापिनीति सुमना इति कुण्डलीति
त्वां कामिनीति कमलेति कलावतीति।
त्वां मालिनीति ललितेत्यपराजितेति
देवि स्तुवन्ति विजयेति जयेत्युमेति ॥ इति ।

तन्त्रालोकवामकेश्वरीमतादिव्याख्यात्रा श्रीमदाचार्यजयरथेनाप्युक्तम्—

परैव सूक्ष्मा कुण्डलिनी शक्तिः शिवेन सह परस्परसामरस्यरूपमध्यमन्थकभावात्मकं सङ्घट्टमासाद्येति—

अकुलस्यास्य देवस्य कुलप्रथनशालिनी।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः ॥
[ ६७ त. ३ ]

इत्यत्र । तथा—

सात्र कुण्डलिनी बीजं जीवभूता चिदात्मिका ।
तज्जं ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥
[ त. ३।२२० ]

इत्यत्रापि सा पारमेश्वरी संविन्मात्ररूपा विसर्गशक्तिरेव गर्भीकृतनिखिलविश्वत्वात् कुण्डलिनीशब्दव्यपदेश्या अनच्ककलारूपेति—

या सा कुण्डलिनी सात्र जगद्योनिः प्रकीर्तिता ।
त्रुटिरूपा तु सा ज्ञेया जीवभूता जगत्यपि ॥

इति सिद्धयोगीश्वरीमततयोपन्यस्तम्। तथा त्रिशिरोभैरवेऽपि—"कुण्डल्याख्या तु सा ज्ञेया सर्वाध्वोपरिवर्तिनी" इत्याद्यागमग्रन्थप्रमाणेन कुण्डलिनी कुण्डलीत्यादिशब्दस्य शक्तिपर्यायता। तथा शक्तेः विश्वकार्योन्मुखता स्वरूपविशेषवाचकता चावधार्यते। वस्तुत उन्मेषनिमेषान्तरावस्थापन्ना शक्तिः कुण्डलिनीशब्दवाच्या, तत एव विसर्गरूपता-ग्रहणपूर्वकाले स्वीकृतोन्मेषमात्रा शक्तिः शक्तिकुण्डलिनीति, तथा प्रारब्धविसर्गा प्राण-कुण्डलिनीति, एवं विसर्गात् प्रतिनिवृत्ता शक्तिः पराकुण्डलिनीति व्यपदिश्यत इति तन्त्रालोकतृतीयाह्निके महामहेश्वराचार्येण श्रीमदभिनवगुप्तगुरुणा स्वशब्देनैवोद्घोषितम्। तथाहि—

प्रकाश्यसर्ववस्तूनां विसर्गरहिता तु सा
शक्तिकुण्डलिका चैव प्राणकुण्डलिका तथा।
विसर्गप्रान्तदेशे तु पराकुण्डलिनीति च ॥ इति ॥
[ तं. आ. १३९ ]

अत्र प्रकाश्यमिति पाठोऽस्ति, जयरथेनापि तथैव व्याख्यातम्; परन्तु सोऽपपाठ एवेत्यनवसरत्वान्नोद्घाटयामः। एवमेव शक्तेर्ज्ञाननादप्राणादिपरिग्रहणनिमित्तकमागमे बोधकुण्डलिनीति, नादकुण्डलिनीति, प्राणकुण्डलिनीति नाम निर्दिष्टम्। यथा मयापि पूर्णताप्रत्यभिज्ञायां मन्त्रकलारहस्याख्यानावसरे प्रोक्तम्—

पारमेशी च बोधाख्या शक्तिर्गर्भीकृताखिला।
परा कुण्डलिकाभिख्या स्फुरन्त्याप्नोति सत्वरम् ॥
विमर्शनेन नादात्मवर्णकुण्डलिकात्मताम्।
निमज्जितैतद्रूपैति प्राणकुण्डलिकात्मताम् ॥ इति।

ततश्च शक्तेः कार्योन्मुखत्वाद्युपाधिकृतं कुण्डलिनीति नामेति सुस्पष्टं सिद्धम्। तथापि बोधनादशक्तिप्राणकुण्डल्यादेः सूक्ष्मतमसूक्ष्मतरसूक्ष्मादिरूपत्वान्न सकललोक-साधारणवेद्यतेति जना विशेषतो गुदमेढ्रान्तरालस्थत्रिकोणाकारमूलाधारगतां वायुवह्नि-बिन्दुनादहंसाद्युत्पत्तिहेतुभूतां कुण्डलिनीमेव जानन्ति। युक्तं चैतत्, लोकानां स्थूलज्ञान-प्रवृत्तिमत्त्वात्। यथा श्रीमद्भगवतोक्तम्—

"अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः"। इति।

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम्॥ इति,
येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्॥ इत्यादि च।

नेत्रतन्त्रे—"कुण्डलाख्या महाशक्तिस्तृतीयाप्युपचर्यते" [अ० २१ श्लो. ६१] इत्यत्र क्षेमराजाचार्येण—"कुण्डलाख्येत्यनेन अन्तःशून्यबहिष्कृतपारवश्यात्मताख्यापनेन व्यापिनी शक्तिरित्युक्तम्। तत्र पूर्वमुन्मनासमनयोः कथनाद्व्यापिन्याः प्रतिपादनं युक्तमेवेति कुण्डलाशब्देन व्यापिन्या अपि शास्त्रे ग्रहणमिति ज्ञेयम्" इत्युक्तम्।

विज्ञानभैरवटीकायां द्वयसम्पत्तिकारवामननाथविवृतिरुद्धृता—

आत्मस्थाने निराधारा द्वितीया शक्तिरैश्वरी।
बीजभूता कुण्डलिनी सार्धत्रिवलयात्मिका॥
प्राणशक्तिरियं देहे हकाराख्या नदत्यलम्। इति।

एतत्सर्वालोचनेन ज्ञायते कुण्डलीशब्दस्यानेकार्थे शक्त्यात्मके प्रयोगः शास्त्रे। योगकुण्डल्युपनिषदिति ग्रन्थेऽपि प्रयोगः कृतोऽस्ति। अस्याः कुण्डलिन्याः क्वचन अष्टधा वलितत्वमप्युक्तम्। यथा योगकुण्डल्युपनिषदि—

अष्टधा कुण्डलीभूतामृज्वीं कुर्यात्तु कुण्डलीम्। इति।

तथैव योगशिखोपनिषद्यपि लभ्यते। त्रिधा वलितत्वन्तु सर्वत्र प्रसिद्धमेव।

ध्यानबिन्दुयोगचूडामणियोगकुण्डल्यादिषु सर्वासूपनिषत्सु मूलाधारस्थितायाः कुण्डलिन्या एवोल्लेखोऽस्ति। पूर्वोक्तायाः त्रिविधायाः कुण्डलिन्या जागरणे पूर्णा भवति कुण्डलीप्रक्रिया। परन्तु नहि सर्वेषामेकदैवेयं सर्वत्र जागर्ति; केषाञ्चिदेव महतां तथा जागर्ति। अतः केषाञ्चित् पूर्वं बोधगता, केषाञ्चिन्नादगता, केषाञ्चिद् हठयोगिनां वा श्रीगुरुशक्त्या पूतात्मनां वा मूलाधारस्था प्रसुप्ता वायुगता शक्तिः प्रथमं जागर्ति। यद्यप्येकत्र जागृता सा सर्वत्र प्रभवति; तथापि न बोधकुण्डलिनी जागृतापि तथा नादप्राणादौ विशेषतो जागर्ति। एवमेव प्राणकुण्डलिनी जागृतापि न विशेषतो नादबोधयोः प्रभवति; तथाप्यभ्यासतः सर्वत्र क्रमात् प्रभवत्येवैकत्र जागृतापीति निश्चयः।

अथेदानीं यथेयं मूलाधारस्था कुण्डलिनी क्रिययोद्बोध्यते, सापि काचिल्लिख्यते। तत्रापि शक्तिचालनप्राणजयाद्युपायभेदेन प्रकारभेदोऽस्त्येव। तथाहि— अरुन्धत्याख्यसरस्वत्याः चालनं क्रियते, निर्भयो मुहूर्तद्वयपर्यन्तं शक्तिं चालयेत्। अथ च सुषुम्नारूपां कुण्डलीं मनसा प्राणैश्च किञ्चिदूर्ध्वमाकुञ्चयेत्। तेन सुषुम्नां हित्वा प्राणरूपशक्तिर्ब्रह्मरन्ध्रे प्रविष्टा भवति। किञ्च, नाभिकन्दादधो हस्ताभ्यां चालनमपि गुरुविशेषक्रमे उपदिश्यते।

अथ च, पद्मासनस्थः स्वस्थो योगी गुदमाकुञ्च्याकुञ्च्य वायुमूर्ध्वगतं कुर्यात्, कुम्भकप्राणायामयुक्तश्च तिष्ठेत्; तेनानेन मूलबन्धनाभ्यासेनापि कुण्डलिनी जागर्ति। तथाहि—मूलबन्धनेनापान ऊर्ध्वगो भूत्वा प्रज्वलितवह्निना साकं प्राणस्थानं गच्छति, ततस्त्रयोऽप्येते एकीभूय मूलाधारस्थितां सुप्तां शक्तिमुद्बोधयन्ति। अयं भावः— या स्वीयात्मप्रकाशिका शक्तिः पञ्चभूतात्मतामेत्यान्तिमभूते स्थिरतामिवागत्य पुनः प्राणादिरूपतामेत्य बहिर्मुखतां प्रारभ्यान्तःकरणबहिष्करणादिरूपा सोमसूर्योत्पन्नवह्निरूपप्रमातृतां शिवेन सह निरवाक्षीत्। सेदानीमन्तिमबहिर्मुखतां परित्यज्य अन्तिमबहिर्मुखतादिमस्थाने तत्पूर्वसूक्ष्मप्राणकृतबहिर्मुखत्वान्तिमस्थाने मूलाधारे मध्यस्थाने स्थिरा भवति। ततोऽपि साधकशिवप्रयासकृतानुनयविनयलज्जितेवाभिमुखीभूय सामरस्यपर्यङ्कसहस्राराय गन्तुमुपक्रममाणा जागृता पदाभिलप्यमाना क्रमात् षट्चक्रं विभेदयन्ती सहस्रारपर्यङ्के स्वात्मसमर्पणेन शिवं पुनः समरसीकरोति। उन्मिषन्त्यां शक्तौ शिवो जीव इवेन्द्रियव्यापारप्रवृत्तौ क्षुब्धः स्वभिन्नेदन्तास्पदीभूतं विषयं शून्यमारभ्य धरापर्यन्तं स्वात्मसात्कुर्वन् संसारीव खिद्यति, पुनर्निमिषन्त्यां च तस्यां गृहीतविषयतया प्रतिनिवृत्तेन्द्रियक्षण इव सुषुप्त्यवस्थाक्षण इव वा जीवप्रमातेव शिवः स्वात्मविश्रान्तिसुखमनुभवति।

चक्रभेदसमयेऽनन्तरं च या अनुभूतयोऽनन्तप्रकारिकाः, तासां कथनेन न किमपि प्रयोजनं प्रतिभातीति विरमामीति॥



# तन्त्रावतारः

## ( शास्त्रदृष्ट्या ऐतिहासिकदृष्ट्या च )

श्री एन. आर. भट्टः, पाण्डिचेरी ।

अनादिकालाद् गुरुशिष्यपरम्परया आगतो ग्रन्थसन्दर्भ आगम इत्युच्यते। शब्दोऽयं 'आङ्पूर्वकाद्' 'गम्'धातोर्निष्पन्नः। वेदा अपि गुरुशिष्यपरम्परयैवागता इति तेऽप्यागमास्तथा तन्त्राण्यपि। तत्र वेदजातस्य तन्त्राणां च क्वचिद्भेदेन व्यवहारायास्तत्पूर्वजा वेदान् निगमा इति तन्त्राण्यागमा इति च व्याजह्रुः। विद् ज्ञाने इति धातोर्निष्पन्नो वेदशब्दः। कामिकाद्यागमानामपि कामिकादिज्ञानमित्यस्ति बहुशो व्यवहारः। गुरुमुखाच्छिष्येण श्रवणमूलकमुपलभ्यतया यथा वेदानां श्रुतिरिति व्यवहारस्तथागमानामपि। तेऽपि श्रवणमूलकमुपलब्धा एव। स्यादपि संशयः केषाञ्चिद्यद् वेदेष्वेव श्रुतिरिति व्यवहारो नान्यत्रेति, नैवं वक्तुं युक्तम्। हारीतधर्मशास्त्रे—"अथातो धर्मं व्याख्यास्यामः। श्रुतिप्रमाणको धर्मः। श्रुतिश्च द्विविधा–वैदिकी तान्त्रिकी च" इति तन्त्राणामपि 'श्रुतिः' इति व्यवहारो दृश्यते। यथा मनुस्मृतौ द्वितीयाध्याये प्रथमश्लोकस्य व्याख्याने श्रीमान् कुल्लूकभट्टोऽपि—"वैदिकी तान्त्रिकी चैव द्विविधा कीर्तिता श्रुतिः" इति श्रुतीनां द्वैविध्यं वेदास्तन्त्राणि चेत्यभ्युपैति। यदपि—

या वेदबाह्याः स्मृतयो याश्च काश्चित् कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोभूता हि ताः स्मृताः॥

इति मनुवचनाद् वेदबाह्यानां तन्त्राणां कथं धर्मे प्रमाणता, तदपि न वक्तुमुचितम्। आपस्तम्बऋषिणा "स्पष्टमाम्नायः प्रमाणम्, आम्नायैरविरुद्धाः प्रमाणम्" इति यथा वेदानां तथा तदविरुद्धानां सर्वेषां प्रमाणतयाऽभ्युपगमात्। न कुत्रापि तन्त्रेषु वेदविरुद्धार्थप्रतिपादनं दृश्यते।

"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति हि धर्मशब्दस्य व्याख्या। वेदेषु प्रवृत्तिनिवृत्तिरूपोभयविधधर्मव्याख्यानाद्यथा अभ्युदयनिःश्रेयससिद्धिस्तथा तन्त्रेष्वपि। प्रवृत्तिनिवृत्तिधर्मौ शैवागमेषु पशुधर्मपतिधर्मावित्युच्येते, अभ्युदयनिःश्रेयसे भुक्तिमुक्ती इति नामान्तरेण व्यवह्रियेते। एवं च फलतो वेदागमयोः सामरस्यात्

"नहि वेदागमयोरत्यन्तं विरोधं पश्यामः। परकर्तृत्वाविशेषात्" इति सूर्यभट्टः शैव-सिद्धान्तपरिभाषायामाह। धर्मसाधनमार्गेषु परमस्ति महान् व्यत्यासो वेदागमयोः। साधनमार्गे दृश्यमानं व्यत्यासं पश्यन्तो वस्तुतत्त्वमजानन्तो बहवस्तान्त्रिकपथमवगणयन्ति। अस्त्वेतत्।

शिव-विष्णु-शक्ति-बुद्ध-जिनादीनां पारम्यं प्रतिपादयन्तः आगमाः शैव-वैष्णव-शाक्त-बौद्ध-जैनादिभेदेन भिन्नाः। प्रत्येकं पुनस्तेऽवान्तरभेदेन बहुधा भिन्नाः। वैष्णवागमा वैखानस-पाञ्चरात्रभेदेन द्विविधाः। भगवता विखनसा भृगु-अत्रि-मरीच्यादिभ्य उपदिष्टाः, तैश्च प्रचारं नीता वैखानसागमाः। पाञ्चरात्रागमा द्विविधाः—दिव्या अदिव्याश्च। भगवता नारायणेन स्वयमुपदिष्टाः पौष्कर-जयादि-संहिता दिव्याः। अदिव्याः पुनर्द्विविधाः—मुनिभाषिता आप्तोक्ताश्चेति। भरद्वाजादि-ऋषिप्रोक्ता भरद्वाजसंहितादयो मुनिभाषिताः। आप्तैर्मनुजकुलोद्भूतैराचार्यै-र्विरचिता आप्तोक्ताः। एतेषामाहत्य संख्या एकोनविंशत्युत्तरद्विशतमिति पञ्चविंशत्युत्तर-द्विशतमिति वा संप्रदायविदां व्यवहारः।

शाक्तबौद्धाद्यागमानां भेदप्रपञ्चोऽत्रत्यतन्त्रप्रदर्शिनीचित्रपटेभ्यो निरूपितः।

शैवागमाश्चतुर्विधाः—शैव-पाशुपत-सोम-लाकुल( अथवा नाकुल )भेदेन। तत्र शैवभेदः पुनस्त्रिधा—वाम-दक्षिण-सिद्धान्तभेदेन। कापाल-कालामुख-अघोरे-त्यादयो वामभेदेऽन्तर्भवन्ति। 'त्रिक' इत्यपरनामानः काश्मीरशैवागमा दक्षिणभेदेऽन्त-र्भवन्ति। कामिकाद्यष्टाविंशतिः शैवागमास्तदुपभेदाश्च सिद्धान्तभेदेऽन्तर्भूताः। अत्यन्तमाप्तभूतेन परमशिवेन स्वयमुपदिष्टत्वादेते सिद्धान्ता इत्युच्यन्त इति, "आप्तोक्ति-रत्र सिद्धान्तः शिव एवाप्तिमान् यतः" इति श्रीकण्ठसूरिवचनानुरोधेन वक्तव्यं भवति। कामिकागमे तु—

हेयोपादेयवस्तूनां निर्णये परमार्थतः।
तत्सर्वमधरीकृत्य शैवसिद्धान्त ईरितः॥

इति सर्वेषामन्यशास्त्राणां पूर्वपक्षत्वम्, कामिकादीनां परं सिद्धान्तत्वात् सिद्धान्त इति व्यवहार इत्युक्तमस्ति।

अष्टाविंशतिषु सिद्धान्तशैवागमेषु दश शिवभेदाः, अष्टादश रौद्रभेदाः। भगवता सदाशिवस्वरूपिणा शिवेन लोकस्य अज्ञाननिवृत्तये तत्त्वावबोधनाय च प्रथमं प्रणवादिदशशिवेभ्य उपदिष्टाः कामिकाः, योगजः, चिन्त्यः, कारणः, अजितः,

दीप्तः, सूक्ष्मः, सहस्रः, अंशुमान्, सुप्रभेद इत्याख्याता दश शिवभेदाः। ततोऽनादिरुद्रा-द्यष्टादशरुद्रेभ्य उपदिष्टा विजयः, निश्वासः, स्वायंभुवः, अनलः, वीरः, रौरवः, मकुटः, विमलः, चन्द्रज्ञानः, मुखबिम्बः, प्रोद्गीतः, ललितः, सिद्धः, सन्तानः, शर्वोक्तः, पारमेश्वरः, किरणः, वातुल इत्यभिधीयमाना अष्टादश रौद्रभेदाः।

वैदिकश्रुतिवत् कामिकाद्यागमवृन्दरूपश्रुतिरपि परशिवेनैव जगदुत्पत्तिसमयेऽभिव्यक्तीकृतेति तान्त्रिकश्रुतय उद्घोषयन्ति। मृगेन्द्रागमे विद्यापादे—

सृष्टिकाले महेशानः पुरुषार्थप्रसिद्धये।
विधत्ते विमलं ज्ञानं पञ्चस्रोतोऽभिलक्षितम्॥

इति परमेश्वरः सृष्टेरारम्भे भुक्तिमुक्त्यात्मकपुरुषार्थसंपत्तये सद्योजात-वामदेव-अघोर-तत्पुरुष-ईशानाख्य-मन्त्रमयस्वमुखपञ्चकेन विमलज्ञानस्वरूपान् दिव्यागमानभिव्यञ्जयतीति प्रतिपाद्यते। तत्र स्यादेका शङ्का—यद्यप्यनादिभूतस्य परमेश्वरस्य स्वरूपभूतं विमलं ज्ञानमप्यनादि, तथापि श्रेष्ठं तद्विमलं ज्ञानं प्रशान्तस्वरूपाद् निष्कलात् परशिवात् कथं प्रकाशितम्। ज्ञानं च द्विविधम्—अवबोधरूपं शब्दरूपं च। अवबोधरूपं ज्ञानं यद्यप्यनादि, तथापि शब्दरूपारूढमेवार्थे प्रवर्तते। तस्मादवबोधरूपं तद्विमलज्ञानं कथं शब्दरूपेण कामिकादिशास्त्ररूपतया प्रकाशितमिति। अत्र समाधानमेवम्—परमेश्वरोऽवबोधरूपमथवा स्फुरणरूपं ज्ञानं सृष्टेरारम्भे नादरूपेणाविष्कृत्य ततः परमधिकारावस्थायां सदाशिवरूपमास्थाय पुनः शब्दरूपारूढं ज्ञानमनन्ताद्यष्टविद्येश्वरेभ्य उपदेशयामास। अत्र विषये इदमववेयम्—परमकारणभूते व्योमाकारे शिवतत्त्वे सर्वेषां शब्दानां परमकारणभूतोऽन्यन्तं सूक्ष्मो नादोऽव्यक्ततया वरीवर्ति। यस्मादयमव्यक्तावस्थास्थस्ततोऽस्य परनाद इति व्यवहारः। परनादस्याभिव्यक्तिरेव स्फोटः। स एव वर्णः। शिवतत्त्वाच्छक्तितत्त्वस्याविर्भावसमय एव स्फोटस्याप्याविर्भावः। मयूराण्डरसन्यायेन सर्वशब्दात्मकेन स्फोटेनालिङ्गितं शक्तितत्त्वं प्रादुर्भवति। एवं स्फोटेन सहाविर्भूतस्य शक्तितत्त्वस्य परबिन्दुरिति नाम। ततो मूलवर्णभूतः स्फोटः शक्तितत्त्वात् सादाख्यतत्त्वस्य (अथवा सदाशिवरूपस्य) आविर्भावसमये स्थूलरूपं प्राप्याभिव्यक्तोऽनुभववेद्यो भवति। सेयमवस्था 'अपरनादः' इति नाम्ना व्यवह्रियते। अनेन सादाख्यतत्त्वेन सहाविर्भूतो वर्णसमूहात्मकोऽक्षरबिन्दुरपरबिन्दुरिति व्यवह्रियते। अपरबिन्दोः सकाशादेव ईश्वरतत्त्वाश्रयाः सूक्ष्म-

वर्णाः शुद्धविद्यातत्त्वाश्रयाश्च स्थूलवर्णा आविर्भूताः। एवं शक्तिः सदाशिव ईश्वरः शुद्धविद्या इत्याख्यकार्यतत्त्वचतुष्टयस्याश्रयभूताश्चतुर्विधाः शब्दा एव क्रमेण परा, पश्यन्ती, मध्यमा, वैखरीति वाग्वृत्तिचतुष्करूपेणाभिव्यक्ता अर्थवाचका भवन्ति।

पूर्वं परनादस्याभिव्यक्तिरेव स्फोटः, स च वर्णरूप इत्युक्तम्। वैयाकरणैर्वर्णातिरिक्तः स्फोटोऽभ्युपगम्यते। सिद्धान्तागमरीत्या वर्णातिरिक्तः स्फोटो नास्ति। शङ्कराचार्या ब्रह्मसूत्रव्याख्याने (१.३.८-२८) "वर्ण एव च शब्दः' इत्युपवर्षाचार्यवाक्यमस्मिन्नर्थे उदाहरन्ति। तथा रामकण्ठाचार्या नादकारिकायां वर्ण एव स्फोट इति प्रतिपादयन्ति। सोऽयं स्फोटो मूलवर्णभूतः प्रणवः। तस्य प्रणवस्यैव विस्तारोऽकारादिलकारान्तपञ्चाशदक्षरप्रसरः। प्रमाणप्रमातृप्रमेयरूपे विश्वप्रपञ्चविलासे प्रवृत्तस्य सृष्ट्युन्मुखस्य परशिवस्येच्छाशक्त्या क्षोभितो बिन्दुरेव प्रणव इत्युच्यते। प्रणवात्प्रसृतेषु पञ्चाशदक्षरेषु ककारादिळकारान्तानां व्यञ्जनानां स्वरैर्विनानुपयुक्तत्वाज्जीववियुक्तशरीरतुल्यत्वाच्छरीरत्वेन व्यवहारः, अकारादिषोडशस्वराणामात्मत्वेन व्यवहारः। एवं व्यञ्जनस्वरसंयोगे पदोत्पत्तिः। पदसमुदायैर्मन्त्राणामुत्पत्तिः। तादृशवर्णैः पदैर्मन्त्रैश्च तन्त्राणामाविर्भावः। इममेवार्थं विशदयन्त्यागमाः—

नादरूपतया पूर्वं शिवेनाविष्कृतः पुनः।
सदाशिवादिरूपेण तेनैवासौ पृथक् पृथक्॥
कामिकादिप्रभेदेन शिष्येभ्यः संप्रकाशितः।
अष्टाविंशतिसंख्योऽसौ सिद्धान्त इति संज्ञितः॥ इति।

एतैः श्लोकैरिदं व्यक्तं यत् परशिवः सृष्ट्यारम्भे स्वस्मिन् नित्यसिद्धं विमलज्ञानं नादरूपतया प्रकाशयित्वा पुनः सदाशिवरूपमास्थाय प्रणवादिदशशिवेभ्य आदिरुद्राद्यष्टादशरुद्रेभ्यश्च कामिकादिवातुलान्तानष्टाविंशत्यागमानुपादिदेशेति, अस्यैव आगमसमुदायस्य सिद्धान्त इति नाम इति च। शिवतत्त्वे स्वीयशक्तेरीषच्चलनस्यैव नाद इति नाम। अथवा चिच्छक्तेः स्फुरणेन शुद्धमायायाः कार्योन्मुखचलनमेव नाद इत्युच्यते। सोऽयं नादः शब्दतत्त्वजातस्य मूलभूतः। अयमेवार्थो रामकण्ठेन नादकारिकायामेवं प्रतिपादितः—

स महामायाजन्यो नादः परमार्थवाचको भवति।
येन स्थूलं शब्दं मन्त्रं तन्त्रात्मकं भवेद्वापि॥ इति।

शिवतत्त्वे तत्स्वरूपभूतमेवावबोधरूपं विमलज्ञानं प्रथमतो नादरूपेण सूक्ष्मतयाविर्भूय ततः स्थूलरूपतामेत्य मन्त्रतन्त्रादिवाङ्मयरूपेण प्रसृत इति हि श्लोकस्यार्थः। तथा शिवतत्त्वं सदाशिवरूपेण विमलज्ञानमभिव्यञ्जयतीत्यस्यायं भावः—सर्वमूलभूतं शिवतत्त्वमेव शक्ति-सदाशिव-ईश्वर-शुद्धविद्येत्यादिषट्त्रिंशतत्त्वरूपेण परिणामं प्राप्नोति। शक्तिमारभ्य भूमिपर्यन्ततत्त्वानां परशिव एव मूलभूत इति परशिवस्यैव शिवतत्त्वमिति व्यवहारः। शिवतत्त्वं सर्वकारणभूतम्, अन्यतत्त्वानि च तत्कार्यभूतानि। शिवतत्त्वं त्वेकमेव। तत्कार्यभूतं सदाशिवतत्त्वं शिवसादाख्य-अमूर्तसादाख्य-मूर्तसादाख्य-कर्तृसादाख्य-कर्मसादाख्यभेदेन पञ्चधा। एतानि पञ्चसादाख्यान्येव सद्योजात-वामदेव-अघोर-तत्पुरुष-ईशानेत्यभिहिताः पञ्चब्रह्ममूर्तयः। तेषामेव पञ्चवक्त्रत्वव्यवहारोऽपि। सदाशिवोऽस्मदादिवन्न शरीरेन्द्रिययुक्तः। तस्य शुद्धमायोपादनकबैन्दवशरीराभ्युपगमेऽपि नेदं शरीरमस्मदादिप्राकृतशरीरतुल्यम्, अस्मदादिशरीरस्योत्पत्तिप्रलयादिसत्त्वात्, तत्तुल्यत्वे तस्येश्वरत्वभङ्गप्रसङ्गात्। अतः सदाशिवस्य शाक्तं शरीरम्, तत्र 'पञ्चवक्त्राणि' इत्यादेरयमर्थः—ईशानमूर्ध्ने नम इत्यादिपञ्चमन्त्रात्मकाण्यनुग्रह-तिरोभाव-आदान-रक्षण-उत्पत्तिरूपपञ्चकृत्योपयुक्ता ईशानादिशक्तय एव शरीरकार्यनिर्वाहाच्छरीरत्वेन व्यवह्रियन्ते। स्पष्टमिदं मृगेन्द्रागमे—

तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः।
ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिकम्॥ इति।

अत्र 'वपुः'शब्दस्य 'वरैः पुष्णाति ध्यायिनः' इत्यन्वर्थताप्यस्ति। यद्यपि सदाशिवस्य ध्यानश्लोके पञ्चवक्त्रदशभुजाद्याकारेण रूपध्यानमागमेषु विहितमस्ति, तथापीयमाकारकल्पना साधकानामुपासनासौकर्याय। "आकारवांस्त्वं नियमादुपास्यो न वस्त्वनाकारमुपैति बुद्धिः" इत्युक्तरीत्या निराकारस्य ध्यानपूजादि दुष्करमिति कृत्वा रूपकल्पना विहिता। नैतावता सदाशिवस्यास्मदादिशरीरवच्छरीरकल्पना कर्तुं युक्ता। एवं च सदाशिवतत्त्वस्य पञ्चसादाख्यावस्थाभेदभूता पञ्चमन्त्रात्मका ईशानादिशक्तय एव पञ्चवक्त्राणीत्युच्यन्ते। तेभ्यो सदाशिवस्य पञ्चभ्यो वक्त्रेभ्यो विमलं ज्ञानमागमरूपेण प्रसृतमभूत्।

कामिकाद्यजितान्ताश्च सद्योजातमुखोद्भवाः।
दीप्तादिसुप्रभेदान्ता वामदेवमुखोद्भवाः॥

विजयाद्यास्तु वीरान्ताः पञ्चैतेऽघोरवक्त्रजाः ।
रौरवाद्यास्तु बिम्बान्ताः पुरुषाख्याननोद्भवाः ॥
प्रोद्गीताद्यष्टतन्त्रास्तु चैशानाननसम्भवाः ।

कामिकः, योगजः, चिन्त्यः, कारणः, अजित इत्येते पञ्च सदाशिवस्य सद्योजातमुखात् ; दीप्तः, सूक्ष्मः, सहस्रः, अंशुमान्, सुप्रभेद इति पञ्च वामदेवमुखात् ; विजयः, निश्वासः, स्वायम्भुवः, अनलः, वीर इत्येते पञ्च अघोरमुखात् ; रौरवः, मकुटः, विमलः, चन्द्रज्ञानः, बिम्ब इत्येते पञ्च तत्पुरुषमुखात् ; प्रोद्गीतः, ललितः, सिद्धः, सन्तानः, सर्वोत्तरोऽथवा शर्वोक्तः पारमेश्वरः, किरणः, वातुल इत्यष्टौ ईशानमुखाच्च प्रकाशिताः । तत्र सदाशिवः प्रथममनन्त-सूक्ष्म-शिवोत्तम-एकनेत्र-एकरुद्र-त्रिमूर्ति-श्रीकण्ठ-शिखण्डीत्याख्यावतामष्टविद्येश्वराणां कामिकादि-दशशिवभेदानुपदिश्य ततः प्रणवादिदशशिवेभ्य उपदिष्टवान्, अष्टादश-रुद्रभेदांस्त्वनादिरुद्राद्यष्टादशरुद्रेभ्यश्च । एतेनैषामागमानां शिवसंहिता रुद्रसंहिता इत्यपि व्यवहारः । अत्र प्रथमतः सदाशिवेन दशशिवेभ्योऽष्टादशरुद्रेभ्यश्च प्रत्येकमेकैकस्याः संहिताया उपदेशक्रमः प्रतिसंहिताक्रम इत्युच्यते । उपदिष्टाश्चैताः संहिताः संप्रदाय-क्रमेण परम्परया भिन्नभिन्नश्रोतृभिः श्रुताः, तैश्च पुनरुपदिष्टाः, श्रोतृबाहुल्यात् सर्वत्र प्रसृताश्च, इत्यागमानामयमुपदेशविस्तरो महौघक्रम इत्युच्यते ।

उपरिनिर्दिष्टानां कामिकाद्यष्टाविंशतिसिद्धान्तशैवागमानां शाखाभूता उपागमा अपि सन्ति । संप्रदायानुसारेण एषामाहत्य संख्या अष्टोत्तरद्विशतम् । आगमेषु प्रत्येकमागमानां ग्रन्थसंख्यापि निर्दिष्टा । प्रत्यागमं विद्या-क्रिया-योग-चर्याख्यपाद-चतुष्कमस्ति । पशु-पति-पाशाख्यपदार्थत्रयविवेचनं विद्यापादे, कर्षणादिप्रतिष्ठान्त-सर्वविधदेवतायनसम्बन्धिक्रियाकलापः, दीक्षा, देवपूजा, स्नपनोत्सवादिनित्यनैमित्तिक क्रियाकलापविस्तरः क्रियापादे, अर्चनादीक्षादिकर्मोपयुक्तयोगसाधनविशेषविवेचनं योगपादे, आचारप्रायश्चित्तादिविषयकविवरणं चर्यापादे च लभ्यते । एवं परमशिवेन स्वयमुपदिष्टाः परशिवविषयकभक्त्यर्चनव्रतध्यानज्ञानादिबोधका एते शिवागमाः स्वतः प्रमाणभूता भुक्तिमुक्त्यर्थिनां सर्वेषां परमोपादेयाश्चेति । शिवागमा उद्घोषयन्ति यत् शिवागमोक्तरीत्या शिवतत्त्वं निष्कलमव्यक्तं नामरूपाभ्यां रहितम् । सदाशिवतत्त्वं सकलनिष्कलं व्यक्ताव्यक्तं नामरूपाभ्यां सहितमिव भाति । वास्तवरूपं तु नास्ति । अत

एव शिवलिङ्गं सकलनिष्कलरूपमित्युच्यते। सदाशिवतत्त्वादुत्पन्नमीश्वरतत्त्वं महेश्वरतत्त्वापरपर्यायं सकलं व्यक्तं नामरूपाभ्यां सहितमित्युच्यते। इदमेव महेश्वरतत्त्वं चन्द्रशेखरादिपञ्चविंशतिमूर्तिभेदेन भिन्नम्। सर्वेषामेषां तत्त्वानां ज्ञाने, परशिवस्यार्चनादिप्रकारे, तद्ध्यानक्रमे, शिवभक्तानामाचारक्रमे च शिवागमा एव परमं प्रमाणम्।

एतावत्पर्यन्तं शैवागमानामवतारक्रम आगमशास्त्रोक्तरीत्या विवेचितः। सम्प्रति चारित्रिकविमर्शकदृष्ट्या किञ्चिद्विवेचने प्रयत्नः क्रियते। वेदभागेषु तदनुयायिषु प्राचीनेषु षडङ्गेषु वैदिकाचारबोधकेषु श्रौतगृह्यसूत्रेषु वागमेषु प्रधानतया प्रतिपाद्यमानस्य देवपूजादिविषयकस्य विवरणं साक्षान्नोपलभ्यते। वैदिकानां दैनंदिनाचारव्यवहारप्रतिपादकेषु गृह्यसूत्रेषु देवयज्ञो निर्दिष्टः, परं सः केवलमग्नौ समिद्धोमरूपः। किमेतावता आगमेषु सुविस्तरं प्रतिपाद्यमाना देवपूजा नैवासीद् गृह्यसूत्रकालेष्विति सिद्धान्तः कर्तव्यः। अनिर्देशो नास्तीत्यत्र प्रमाणं भवितु नार्हति। वेदोक्तमार्गानुयायिनामवश्यप्रसक्तानामाचारव्यवहाराणां प्रतिपादने बद्धादराणां गृह्यसूत्रादिसमस्तवैदिकग्रन्थजातानां वेदे साक्षात्प्रतिपादितयज्ञादिविषयकविवेचनं तदनुयायिनां कर्ममार्गश्च प्रतिपादितः। देवपूजा प्रतिमाप्रतिष्ठादेवालयनिर्माणादिविषयविवेचने वा तत्पथावलम्बिनां साधकानामाचारव्यवहारविषयप्रतिपादने वा नैषामादरः। अथापि तेषां काले देवपूजा-देवतायतनादीनां सत्तायाः सूचकानि पदानि वाक्यानि तत्र तत्रोपलभ्यन्त एव। मानवगृह्यसूत्रे २-५-६ "यद्यर्चा दह्येद्वा, नश्येद्वा, प्रपतेद्वा, प्रभजेद्वा, प्रहसेद्वा, प्रचलेद्वा" इत्यादिसूत्रे देवताप्रतिमानां भङ्गे प्रायश्चित्तं विधीयते। बौधायनगृह्यसूत्रे २-२-१३ "अथोपनिष्क्रम्य, बाह्यानि चित्रियाण्यभ्यर्च्य स्वान् गृहानानयति" इति सूत्रमस्ति, तद्व्याख्यानसंस्काररत्नमालायां चित्रियाणि देवता इति व्याख्यातम्। जातस्य शिशोरुपनिष्क्रमणे देवालयं प्रतिगमनमद्यापि शिष्टाचारः। लौगाक्षिगृह्यसूत्रे १८,३ देवतायतनस्य निर्देशो दृश्यते। गौतमधर्मसूत्रे ९,६६ देवतायतनानि प्रदक्षिणीकृत्य गमनं निर्दिष्टम्। शाङ्खायनगृह्यसूत्रे ४,२,५५ देवतायनस्य, २,६,६ देवकुलस्य च निर्देशोऽस्ति।

नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्।
देवताभ्यर्चनं चैव समिदाधानमेव च॥

[२. १७६]

तथा—

मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम्।
प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्॥
[४. ३९]

देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा।
नाक्रामेत् पादतश्छायां बभ्रुणो दीक्षितस्य च॥
[४. १३०]

इत्यादिषु (८. ८७, ३. ११७) मनुस्मृतौ। देवताप्रतिमाया देवताभ्यर्चनस्य च निर्देशो दृश्यते। कौटिलीयार्थशास्त्रे पत्तनमध्ये शिवलक्ष्म्यादिदेवतानामायतनं कार्यमिति दृश्यते। "जीविकार्थे चापण्ये" ५, ३,९९ इति पाणिनिसूत्रे पण्यमपण्यं चेति देवताप्रतिमाद्वयं निर्दिष्टम्। तद्व्याख्याने महाभाष्ये—"अपण्य इत्युच्यते। तत्रेदं न सिध्यति—शिवः स्कन्दो विशाख इति। मौर्यैर्हिरण्यार्थिभिरर्चाः प्रकल्पिताः। भवेत्तासु न स्यात्। यास्त्वेताः सम्प्रति पूजार्थास्तासु भविष्यति" इति विवरणं दृश्यते। तत्र पूजा नाम देवतोद्देशेन द्रव्यत्यागात्मकत्वाद्याग एवेति शबरस्वामी (४, २, २७–२८) स्वभाष्ये देवपूजां यागत्वेनाह। आगमेष्वपि देवपूजा अन्तर्याग-बहिर्यागशब्दाभ्यां व्यवह्रियते। इतिहासपुराणेषु बहुशो देवपूजादेवतायननिर्देशाः सन्ति। उपलभ्यमानैरेतादृशैर्निर्देशैरेवमभ्यूहस्यास्त्यवकाशो यद्देवालय-देवपूजादिकं पाणिनेः कालात् पूर्वमप्यासीदिति। यदि स्यात्तर्हि तत्प्रतिपादकानामागमानामप्यस्तित्वे कुतो विवादः। केचित्तु बौद्धैः कृताः प्रतिमा दृष्ट्वा वैदिकमार्गावलम्बिनोऽपि शिवादिप्रतिमाः कृतवन्तः, बौद्धधर्मप्रचारेण यज्ञयागादिक्रियाकलापस्य हीनदशायां देवतानामर्चामङ्गीचक्रुरित्याद्यभ्यूहन्ति। पाणिनिस्तु बुद्धादपि प्राचीनकालीन इत्यत्र नास्ति विमर्शकानां विवादः। अत आगमानामपि, आगमोद्दिष्टपूजादीनामपि पाणिनेरपि पूर्वकालीनत्वमूहितुमस्त्यवकाशः। यदि मोहन्जोदारोपत्तने पुरातनवस्तुगवेषकैरुह्यमानानि चिह्नानि शिवलिङ्गादिद्योतकानीत्युररीक्रियते, तर्हि सुतरां स्थापितमत्यन्तं प्राचीनत्वमागमानाम्। परमेते आगमाः किं स्वरूपेण आसन्नित्यस्य विषयस्य विमर्शे नापलब्धानि सहायकानि साधनानि। अथाप्येतावत्परं वक्तुमस्त्यवकाशः—पुरा कदाचित्काले प्रस्थानद्वयमासीत्—वैदिकप्रस्थानम्,

आगमप्रस्थानमिति। तत्तन्मार्गावलम्बिनश्च तत्तत्प्रस्थानमूलभूतग्रन्थजातेषु बद्धादरास्त-दनुयायिनश्चासन्। एकप्रस्थानानुयायिग्रन्थलेखकानां प्रस्थानान्तरस्य विषयान् प्रति नासीदादरः। कालान्तरे प्रस्थानद्वयावलम्बिनोः परस्परमुत्कर्षापकर्षभावः क्रमेण समजनि। वैदिकास्तान्त्रिकान् वेदबाह्यानिति वदन्ति स्म। आगमिकास्तु वैदिकान् यज्ञयागादिप्रवर्तकान् दृष्ट्वा केवलभोगाभिलाषिण इत्यमन्यन्त। कामकागमीयौ श्लोकावेतौ इममर्थं विशदयन्ति—

> आदावभूद् द्विधा ज्ञानमधिकारिविभेदतः।
> परापरेण भेदेन पतिपश्वर्थदर्शनम्॥
> शिवप्रकाशकं ज्ञानं शिवज्ञानं परं स्मृतम्।
> वेदाद्यमपरं ज्ञानं पतिपश्वर्थदर्शकम्॥ इति।

अथापि कालक्रमेण मार्गद्वयावलम्बिनामप्येषां प्रस्थानद्वयेऽप्यभ्युदयनिः-श्रेयसयोर्भुक्तिमुक्त्योर्वा प्रतिपादनं पश्यतामासीत् कदापि परस्परसमन्वयबुद्धिः। कालेऽस्मिन् वैदिकमार्गे पूर्वमनुपलब्धस्थाना देवपूजा क्रमशः स्थानमलभत। वैदिक-मन्त्रा आचारव्यवहाराश्च आगमेषु स्थानमलभन्त। कामिकागमे आगमानां सदाशिवस्योर्ध्वादीशानवक्त्रादाविर्भावादुत्तमोत्तमत्वं वेदादीनामवरमुखादाविर्भावा-वादधमत्वं वर्णितमासीत्। अजितागमे तु (१, १०६–१०७) कामिकादिसुप्रभे-दान्तानां दश शिवभेदानां साङ्गानां वेदाना च सदाशिवस्योर्ध्ववक्त्रादाविर्भावः कथ्यते, सोऽयं वेदानामागमानां च सामरस्यकालं सूचयति। कालेऽस्मिन् स्मात् स्मृतिकारा अप्यागमानां प्रामाण्यं वेदानामिव श्रुतित्वं चाभ्युपागच्छन्। सामरस्य-कालेऽस्मिन् आगमोक्ता बह्वोंऽशा धर्मशास्त्रेषु निबन्धेषु पुराणेषु च तत्र तत्रांशे किञ्चिद्व्यत्यासेन नियोजिताः। इदानींतनकाले उपलभ्यमानेषु प्रस्थानद्वयानुयायिषु ग्रन्थेषु परस्परमेकस्य प्रस्थानस्य विषया अन्यत्र तथा योजिता यथा चारित्रिकविमर्शन-द्वारमन्तरेण विषयविभागो दुष्करो भवति। कालेऽस्मिन्नागममार्गो वेदमार्गस्य सार इति प्रथां लभते। अयमप्यर्थो मकुटागमे (१, २०–२३) वर्णितः—

> वेदसारमिदं तन्त्रं तस्माद्वैदिकमाचरेत्।
> वेदान्तार्थमयं ज्ञानं सिद्धान्तं परमं शुभम्॥
> ऊर्ध्वस्रोतोद्भवं श्रेष्ठमष्टाविंशतितन्त्रकम्।
> वेदसारमिदं ज्ञेयमन्यत्त्वन्यार्थसाधकम्॥ इति।

अत्र स्यात् संशयः कथं प्राचीनेषु प्रत्येकप्रस्थानावलम्बिषु मूलभूतेषु त्रिष्वागमेषु कालत्रयेषु सम्भावितस्य परस्परमननुगुणस्य वेदेभ्योऽप्युत्तमत्वस्य वेदसमत्वस्य वेदसारत्वस्य चोल्लेखनं दृश्यत इति। समाधानमेवमत्र वक्तुं शक्यम्–मूलभूता आगमास्तेनैव स्वरूपेण गुरुशिष्यपरम्परया नागताः, अपि तु किञ्चिद् व्यत्यासेन। अयमंशः प्रकारान्तरेणागमैरेवाभ्युपगम्यते। मृगेन्द्रागमस्य ज्ञानपादे—

शिवोद्गीर्णमिदं ज्ञानं मन्त्रमन्त्रमहेश्वरैः।
कामदत्वात् कामिकेति प्रगीतं बहुविस्तरम्॥
तेभ्योऽवगम्य दृग्ज्योतिर्ज्वालालीढसुरद्रुमः।
ददावुमापतिर्मह्यं सहस्रैर्भवसम्मितैः॥
तत्रापि विस्तरं हित्वा सूत्रैः सारार्थवाचकैः।
वक्ष्ये निराकुलं ज्ञानं तदुक्तैरेव भूयसा॥

अत्र व्याख्याने नारायणकण्ठ एवमाह—"तत्राप्यर्थवादानुवादरूपं विस्तरं त्यक्त्वा सारार्थाभिधायिभिर्बाहुल्येन क्वचिदुक्तैः क्वचिच्चात्मीयैराकुलं सङ्कुलं ज्ञानं शास्त्रमभिधास्ये इतीन्द्रो मुनीनामाहेति हारीतः स्वशिष्यान् ब्रूते" इति।

मूलभूतस्य कामिकागमस्य ग्रन्थसंख्या परार्धश्लोकाः। उमापतिना संगृहीतस्य ग्रन्थसंख्याएकादशसहस्रश्लोकाः। इदानीमुपलभ्यमाने मृगेन्द्रे सहस्रद्वयपरिमिताः श्लोका उपलभ्यन्ते। विचारे क्रियमाणे विषयाणां सार एव श्लोकबद्धो गुरुशिष्यपरम्परया आयात इति वक्तव्यं भवति। यद्येवं तर्हि तत्तत्कालीननूतनविषयाणां क्वचित् कुत्रचिदन्तर्भावस्यावकाशो न दुर्लभः। अत एव भिन्नकालेषु संगृहीतेष्वागमत्रयेष्वागमवेदविषये त्रिविधमर्थं प्रतिपादयतां श्लोकानामन्तर्भावस्यावकाश इति प्रतिभाति। कतिपयान्येवोदाहरणान्यत्र दत्तानि। एवमेव शतश उदाहरणानि सन्ति, येषां पर्यालोचने पूर्वोक्तनिष्कर्षं विनाऽन्यथा सामञ्जस्यं वक्तुं न शक्यते। इदानीं वेदसारतयाऽभ्युपगम्यमाना आगमाः कालान्तरे न वेदमार्गानुयायिनः परं प्रत्येकं स्वतन्त्रमार्गानुयायिन आसन्नित्यधोनिर्दिष्टैर्विषयैः स्फुटीभविष्यति।

वैदिकग्रन्थेषु ब्रह्मसृष्टिः प्रतिपाद्यते, शैवागमेषु तु शिवसृष्टिः।

मन्वादिस्मृतिकारास्त्रिवर्षादूर्ध्वं देवालये पूजकस्य पातित्यं पङ्क्त्यनर्हत्वं वा प्रतिपादयन्ति। शैवागमास्तु शिवाचार्यस्य परार्थपूजां नित्यकर्तव्यतयोद्घोषयन्ति, तादृशं शिवपूजकं सर्वेभ्य उत्तमोत्तम इति पङ्क्तिपावक इति च निर्दिशन्ति।

त्रैवर्णिकानामेव वेदाधिकारो वैदिककर्मस्वप्यधिकारः। शिवपूजादिकार्येषु सर्वेषां वर्णानामप्यधिकारः, गुरुकृता दीक्षा परमावश्या। समयदीक्षा, विशेषदीक्षा, साधकदीक्षा, आचार्यदीक्षेत्यादिदीक्षाभेदेनैवोत्तमोत्तमत्वं न वर्णविभागेन। एवमादिविषयविमर्शेने कदाचित् पूर्वकालादारभ्य प्रस्थानद्वयक्रमेण गुरुशिष्यपरम्परया आगता वेदा आगमाश्च कालानुसारेण कारणान्तरैरुद्देशभूतफलस्य चैक्यात् सामरस्यमभजन्त, क्रमेण च प्रायशो वैदिकग्रन्थेष्वंशतो विलीना लुप्तप्रायाश्चाभवन्। ये केचन षट्कर्मसाधनभागा ऐहिकेच्छुभी रक्षिताः। यान् भागान् दृष्ट्वा तन्त्राणां षट्कर्मसाधनमात्रपरत्वं मन्यमानास्तेषामवहेलनमकुर्वन्। तन्त्राणां मुख्यं प्रयोजनं भुक्तिसाधककर्मज्ञानादिनिरूपणं न षट्कर्मसाधनम्। अथर्ववेदेष्विव यत्र कुत्रापि षट्कर्मसाधनं निरूपितमभूत्। परमयं भागो मनुष्यकर्तृकेष्ववर्वाचीनतन्त्रेषु ऐहिकैकफलार्थिभिस्तथा वर्धितो येन परमार्थसाधनवेदेभ्य एतेषामपकर्षः समजनि। मूलभूतानागमान् यदि पश्येम तर्हीदं सुविदितं स्याद्यन्नास्ति तेषु षट्कर्मसाधकप्रकरणानां विस्तरः, अपि तु भोगमोक्षसाधनोपायानामेवेति। भोगशब्देन च नैहिकभोगोऽभिहितः, अपि तु लोकान्तरेष्वनुभूयमानः। अतः फलतो वेदेष्वागमेषु च भुक्तिमुक्तिसाधनोपायान्येव कथ्यन्त इति नास्ति विरोधः, नाप्युत्कर्षापकर्षभाव इत्युभयोरपि बहोः कालादारभ्य गुरुशिष्यपरम्परयाऽध्ययनमित्यादिवचनं समुचितं भाति ॥



# तान्त्रिकसंस्कृतिः

डा० शिवशङ्कर-अवस्थी गोरखपुरविश्वविद्यालयस्यः।

तत्सारस्वतसार्वभौमपदवी सद्यो मम द्योततां
यत्राज्ञाविहितैर्महाकविशतैः स्फीतां गिरं चुम्बताम्।
चैत्रोन्मीलितकेलिकोकिलकुहूकारावताराञ्चित-
श्लाघासिञ्चितपञ्चमश्रुतिसमाहारोऽपि भारोपमः॥

(मातृकाविलासे)।

अपि नाम क्वचन तान्त्रिकसंस्कृतिरिह जागर्ति ? सा च वैदिकसंस्कृतेर्भिन्ना कच्चित् ? नहीत्यस्माकं सुविचारितं मतम्। वेदा एव सामान्यतया, अथर्ववेदो विशेषतः समस्ततान्त्रिकप्रक्रियावितानवैभवे वीजमिति दृढं निश्चिनुमः। तथा हि कौशिकसूत्रेषु गोपथब्राह्मणोक्तः श्लोकः—

आज्यभागान्तं प्राक्तन्त्रमूर्ध्वंस्विष्टकृता सह।
हवींषि यज्ञ आवापो यथा तन्त्रस्य तन्तवः॥ इति।

यथा तन्त्रे सम्भूय तन्तवः पटं जनयन्ति, तथैवानुष्ठानाङ्गवैविध्यमेव पाकयज्ञं वितनोतीति वदन्नयं सन्दर्भस्तन्त्रशब्द साधु निरवोचत्। किञ्च, तन्त्रमङ्गसंहतिः, "कर्मणां युगपद्भावस्तन्त्रम्" इति वदता कर्काचार्येण कात्यायनेन च एष एवार्थः समर्थितः। "तन्त्रायिणे नमः" इति यजुर्वेदवर्णं व्याचक्षाणो महीधरो वेददीपे—"एष वै तन्त्रायी य एष तपति, एष हीमाँल्लोकाँस्तन्त्रमिवानुसञ्चरति" इति श्रुतिमुदाहरन् आदित्यस्तन्त्रायीति तान्त्रिकीं व्याख्यां निरदिशत्। "त्रय्याधारः प्रणव इति यन्मण्डलं चण्डरश्मेः" इत्यादिना वैदिकं ज्ञानम्, "आगतः शिववक्त्रेभ्यो गतश्च गिरिजानने" इत्यादिना तान्त्रिकं ज्ञानं चादित्यत एव प्रसरतीति तयोरेकमेव रहस्यमयं मूलमिति ज्ञेयम्। शिवश्च पञ्चवक्त्र आदित्य एवेत्यत्रनास्त्युपासकानां विवादः।

सर्वं चाथर्वणं कर्म पाकयज्ञशब्देनोच्यते। द्विविधं च तत्कर्म—आज्यतन्त्रं पाकतन्त्रं च। यत्र प्रधानं हविराज्यं तदाज्यतन्त्रम्, यत्र च चरुपुरोडाशादिकं तत्पाकतन्त्रम्।

'अव्ययचसश्च'—कर्तुर्जपः, बर्हिर्लवनादितः प्रारभ्य आज्यभागपर्यन्तं प्राक्तन्त्रं पूर्वतन्त्रं वा। अभ्यातानानि, पार्वणहोमः, एवं स्विष्टकृद्धोमेन सह दक्षिणादानं ब्रह्मोत्थापनपर्यन्तमुत्तरतन्त्रम्।

यद्यप्यत्र तन्त्रशब्देन आज्यप्रधानता पाकप्रधानता चाभीष्टा, तथाप्याथर्वणकौशिकसूत्रेषु—"न दर्विहोमे न हस्तहोमे न पूर्णहोमे तन्त्रं क्रियेत्येके" (१५।२।१३८), "तन्त्रसूक्तं पच्छः स्नानेन यौ ते पक्षौ यदतिष्ठः" (२५।६८) इत्यादौ, एवं च तत्र तत्रैतट्टीकायां दारिलकेशवौ—

'सर्वत्र स्रुवहोमे नित्यं तन्त्रं हस्तहोमे विकल्पेन तन्त्रम्।' (कण्डिका ६)

'येषु निशाकर्मसु तन्त्रं तेष्वयं धर्मः।' (क० ८)

'साङ्ग्रामिकाणां कर्मणां तन्त्रं वक्ष्यामः' (१४)

'ततो दक्षिणाग्नितन्त्रं कृत्वा पूतीकैस्तरणम्' (२२)

'एतस्मिन् तन्त्रे यवराशिमध्यान्मुष्टिमेकां गृहीत्वा उलूखलेन अप्रदक्षिणं पिष्यते। ततो व्याधितं सम्पात्य शणसूत्रेण जिह्वामार्जनं करोति।' (२५)

'तन्त्रं कृत्वा वरणो वारयता इति तृचेन वरणवृक्षमणिं बध्नाति' (२६)

'अस्मिन् तन्त्रे दावाग्निप्रणयनं कुर्यात्' (३०)

'वेतसपत्रैः स्तरणं पटेरकेण वा अस्मिन् तन्त्रे सर्वं मारुतं कर्तव्यम्' (४०)

'त्रयोदशेऽहनि पाकयाज्ञिकं तन्त्रं व्रतोपायनान्तं कृत्वा ततो देवस्य त्वा सवितुरित्यादि मरुद्भ्यो जुष्टं निर्वपामि' (४१)

'एकस्मिन् विषये यत्र बहूनि कर्माणि पठितानि तत्रैकं कुर्यात् सर्वाणि वा तन्त्रविकल्पः' (४६)

'अथवा एतत्—अभिचारतन्त्रमुच्यते।

'कृकलासकर्म शरभृष्टिकर्म सपत्नक्षमणीयकर्माणि षड् ग्राममेत्य च कर्माणि षड् मणिकर्म पाशकर्माणि त्रीणि विकङ्कतस्रुवकर्म एकोनविंशतितन्त्राणि भवन्ति।'

द्वाविंशतिः सवयज्ञाः संहितायां पठ्यन्ते स्वर्गौदनतन्त्रेण सर्वे कर्तव्या ब्रह्मौदनतन्त्रेण वा 'स्वर्गब्रह्मौदनौ तन्त्रमिति वचनात्।'

इत्यादि क्रियाकलापपरः प्रयोगपरः प्रकरणपरश्च तन्त्रशब्द इति स्फुटं प्रोचतुः। अन्यच्च शान्तिकल्पे आथर्वणिके—

तन्त्रभूतां महाशान्तिं प्रवक्ष्यामो यथाविधि।
अन्यासां सर्वशान्तीनाममृतां विश्वभेषजीम्।।
नदीभ्यो वा ह्रदेभ्यो वा जलं पुण्यं समाहरेत्।
सं सं स्रवन्तु वद्विद्वानभिमन्त्रयते जनः।। (२०।१।२)

"शं त आपो हैमवतीः" (अथर्व०) इति मन्त्रे सायणाचार्योऽपि 'शं त आप' इति सूक्तेन तन्त्रभूतमहाशान्तौ नद्यादिसमाहृतं जलमभिन्त्रयेत" इति, 'तथा तन्त्रं कृत्वा अनेन सूक्तेन मौञ्जान् पाशान् सम्पात्याभिमन्त्र्य सेनाक्रमेषु वपति तन्त्रं च। 'इन्द्रो मन्थतु इत्यर्थसूक्तेऽष्टमे काण्डेऽथर्ववेदव्याख्यायां चाह।

अथर्ववेदे शान्तिकपौष्टिकाभिचारिकाद्भुतभेदेन कर्माण्युक्तानि। मेधाजनन-चित्राकर्मलक्ष्मीकर्मालक्ष्मीविनाशकृषिनिष्पत्त्यादीनि पौष्टिकानि कर्माणि। सर्व-व्याध्युपशान्तये भैषज्यकर्माणि च ग्रहशान्तये यज्ञादिकमन्यानि च तत्तदद्भुत-निवृत्तये शान्तिकर्माणि भवन्ति। 'मा नो विदन्' (अथर्व० १।४।३) इति सूक्तस्य ब्राह्मणायुधधारणदेवताप्रतिमानर्तनहसनाद्यद्भुतेषु आज्यहोमे विनियोग इत्यद्भुतकर्म-निर्देशः। 'अथाद्भुतानि' इत्युपक्रम्य 'यत्र धेनवो लोहितं दुहते' इत्यादि कौशिक-सूत्रेषु सम्पूर्णस्त्रयोदशोऽध्यायोऽद्भुतकर्मणां स्वरूपतच्छान्तिकथनेन पूर्ण इति द्रष्टव्यः। 'उभयतः परिच्छिन्नं शरमयं बर्हिराभिचारिकेषु' इत्यादि षष्ठेऽध्याय आभिचारिककर्मणां तन्त्रं निरूपितम्। तन्त्रेष्वपि—'रोगकृत्याग्रहादीनां निरासः शान्तिरीरिता' (शारदाति० २३ पट० १२३) इत्यादिना शान्तिस्तम्भाकृष्टिवश्योच्चाटन-मारादीनि षट्कर्माण्युक्तानि। यद्यपीह षट्कर्मणामेव रूढिस्तथापि।

शान्तिके पौष्टिके दिव्ये प्रायश्चित्तविशोधने।
मोहने दीपने योगं प्रयुञ्जन्ति मनीषिणः।।
मारणे विषनाशे च ग्रहभूतविनिग्रहे।
उच्चाटने च विद्वेषे पल्लवः सम्प्रचक्षते।।

इति पदार्थादर्शोक्तदिशा बहूनि कर्माणि ज्ञेयानि।

यद्धि तन्त्रेषु मन्त्रयन्त्रतन्त्राणि विशेषत उक्तानीति वेदेऽपि तथा। मन्त्र-विषये यथा—

'तदेवमाथर्वणमन्त्राणां सिद्धमन्त्रत्वेनापरिमितवीर्यत्वप्रदर्शनार्थमादिमसूक्तस्य विस्तरतः सर्वेषु कर्मसूपलक्षणत्वेन सूत्रकृता विनियोगोऽभ्यधायि।'

( अथर्ववेदे प्रथमकाण्डे सायणाचार्यः )

तन्त्रेषु—'सर्वे वर्णाः केवलाः संयुक्ताः समुच्चिता अपि सर्वार्थसाधका मन्त्रा एवेति' उक्तम्। तेषामधिष्ठातृरूपतया स्थिता देवता अपि सूचिताः। वेदेऽपि—

ऋचोऽक्षरे परमे व्योमन्
यस्मिन् देवा अधिविश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति
य इत्तद्विदुस्त इमे समासते॥

इत्यनया ऋचा ऋग्वर्णानां देवाधिष्ठातृतोक्ता। ते च चिदाकाशरूपा वर्णा इत्यभिहितप्रायम्। एतत्तत्त्वं यो न जानाति स ऋचा किमधिगमिष्यतीत्यपि प्रतिपादितम्।

किञ्च प्रश्नोपनिषदि—

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योऽन्यसक्ता अनविप्रयुक्ताः।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः॥

इत्याद्युक्तम्। तन्त्रेऽपि—

उच्चार्यमाणा ये मन्त्रा न मन्त्राँश्चापि तद्विदुः।
मन्त्राणां जीवभूता तु या स्मृता शक्तिरव्यया॥
तया हीना वरारोहे निष्फला शरदभ्रवत्।

इति शिवसूत्रविमर्शिन्यां धृतं वचनं सर्वथा संवदति।

यन्त्रशब्दोऽथर्ववेदे मणिशब्देनोक्तः। 'दर्भमणिबन्धने विनियोगः', 'प्राजापत्याख्यायां सुवर्णरजतलोहमयमणिबन्धनं कुर्यात्; जङ्गिडवृक्षनिर्मितमणिबन्धने पूर्वसूक्तेन सह उक्तो विनियोगः, सन्तत्याख्यायां महाशान्तौ शतवारं मणिमभिमन्त्र्य बध्नीयात्।' इत्यभिमन्त्रितमणिबन्धनेन यन्त्रप्रक्रिया सूचिता। यद्यपि तान्त्रिकयन्त्रेषु कचिदङ्कानां जातुचिद्वर्णानामथ च बिन्दुविलसितरेखानां सङ्घटना दृष्टिपथमवतरति, वेदे न तथा; तथापि एतद्बीजं तत्र सूक्ष्मेक्षिकयाऽन्वेषणीयम्। तथाहि वेदे यः सूर्यो गन्धर्वशब्देनोक्तः, तद्रश्मयश्चाप्सरःशब्देन; तन्त्रे स एव बिन्दुरूपेण प्रणवरूपेण वोक्तः। तद्रश्मय एव रेखा मातृकाश्च।

अनवद्याभिः समुजग्म आभिरप्सरास्वपि गन्धर्व आसीत्।
समुद्र आसां सदनं म आहुर्यतः सद्य आ च परा च यन्ति ॥ ( अथ० २।२ )

अर्थात् प्रशस्तरूपाभिरप्सरोभिर्मरीचिरूपाभिः; 'सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरसः' ( तै० ३।४।७।१ ) इति श्रुतेः। सूर्यरूपो गन्धर्वः संजग्मे सङ्गतवान्। अप्सरस्स्वपि गन्धर्वः सूर्यनामा सङ्गतोऽभवत् । आसां मरीचिरूपाणामप्सरसां सदनं समुद्रः सूर्यः। इति कथयन्ति मेऽभिज्ञाः यस्मादादित्यात् सद्यः सूर्योदयसमकालमेव आगच्छन्ति परागच्छन्ति च।

एष मन्त्रः सूक्तं च सर्वं मातृनामगणे पठितम्। मातरश्चाप्सरसो देवीपदेनोक्ताः। एतासामेव मातॄणां कृते चतुष्पथे बलिरुपह्रियते।

तथा च साम्बपञ्चाशिकायाम्—

यत्रारूढं त्रिगुणवपुषि ब्रह्म तद्बिन्दुरूपं
योगीन्द्राणां यदपि परमं भाति निर्वाणमार्गः।
त्रय्याधारः प्रणव इति यन्मण्डलं चण्डरश्मे-
रन्तः सूक्ष्मं बहिरपि बृहन्मुक्तये तत्प्रपद्ये ॥

शिवसूत्रवार्त्तिकेषु च—

अकारादिक्षपर्यन्ताः कलास्ताः शब्दकारणम्।
मातरः शक्तयो देव्यो रश्मयश्च कलाः स्मृताः ॥

तान्त्रिकयन्त्रेषु सूर्यो बिन्दुर्वा तन्मरीचयस्तत्तदधिष्ठातृदेवताश्च प्रतीकरूपेणोल्लिख्यन्ते।

तन्त्रशब्दस्तु प्राग्विवेचितः प्रयोगपरो विशेषतो वैदिकसाहित्ये द्रष्टव्यः।

'चत्वार ईं बिभ्रति क्षेमयन्तः' इति ऋग्वर्णे पञ्चदशाक्षरीविद्यायाः. 'य ईं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्' इत्यादौ 'क्लीं' इति बीजस्य दर्शनाद् वेदे तन्त्रप्रक्रियाबीजं सुवचमिति भास्कररायादयः।

'वेदो ज्ञानकर्मोपासनाख्यकाण्डत्रयात्मक इति प्रसिद्धम्, 'प्रकृतं तन्त्रशास्त्रमुपासनाकाण्डेऽन्तर्भवति' इति श्रीमदुत्पलपूज्यपादशिष्योः लक्ष्मणाचार्यः।

"परमार्थतस्तु तन्त्राणां स्मृतित्वाविशेषेऽपि मन्वादिस्मृतीनां कर्मकाण्डशेषत्वं तन्त्राणां ब्रह्मकाण्डशेषत्वमिति सिद्धान्तादुत्तरमीमांसीयदेवताधिकरणन्यायेन देवता-

विग्रहादेस्तान्त्रिकैरङ्गीकारात् तत्तत्कामनापूरकत्वादिगुणकं ब्रह्म ध्यातव्यमिति द्योतनमेव विशेषविधेः प्रयोजनम्" इति महायोगिनो भासुरानन्दनाथाः।

"वयं तु वेदशिवागमयोर्भेदं न पश्यामः। वेदोऽपि शिवागम इति व्यवहारो युक्तः, तस्य तत्कर्तृकत्वात्" इति शैवभाष्ये श्रीकण्ठाचार्याः।

वेदे एकदेवतावादः, त्रिदेवतावादः, बहुदेवतावादश्चोपलभ्यते। 'महाभाग्या-द्देवताया एक आत्मा बहुधा स्तूयते' इति, 'अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वान्तरिक्ष-स्थानः, सूर्यो द्युस्थानः' इति च। एतेषामेव भक्तिसाहचर्यसंस्तवकृतो बहुदेवतावाद-व्याख्याया यास्कीये निरुक्ते दर्शनात्। शक्तयश्च [1]देवीदेवतापदेन तत्र तत्रोक्ताः। किञ्च, 'आनीदवातं स्वधया तदेकम्' इत्यादौ शिवशक्त्योः, वाक्सूक्ते च परासंविदः केवलायाः स्वरूपमपि दृश्यते। एतेन वेदे मातृशक्तेः सर्वोत्कृष्टाया नास्ति निदर्शनमिति पाश्चात्त्यविद्वच्चरणचुम्बनचणा एतद्देशीया विचक्षणब्रुवाः परास्ताः। किञ्च, साधनायां सवितुर्गायत्र्याख्या भर्गशब्देनोक्ता महाशक्तिरद्याप्यनुभूयत एवेति क्व वराकाः? एतत्प्रत्याख्याने।

दहरशाण्डिल्यादिविद्यानामुपासनायां ध्यानं यज्ञे च द्रव्यत्यागे देवताध्यान-मुदाह्रियते। तन्त्रेषु प्रतीकपूजा, मूर्तिपूजा, लिङ्गपूजा वा दृश्यते; तस्या नास्ति वेदे निदर्शनमिति तदसत्, तत्र लिङ्गोक्तानां देवतानामिन्द्रवरुणादीनां सहैवार्चनचर्चनात्। लिङ्गोक्ताश्च देवता इन्द्रादीनां मूर्तयः प्रतीकानि लिङ्गानि वेति वैदिकसाहित्यसमा-हिण्डनपराणां मतम्। यदा वेदाभिप्रायमजानानां वैदिकानां यज्ञेषु महद्विशसनं सम्प्रवृत्तं पशूनाम्, तदाप्रभृत्येव वैदिककर्मकाण्डं मुमूर्षुतां प्रपेदे। सुवर्णदण्डप्रभृतयो ब्राह्मणा बौद्धसाहित्ये ख्याता एतद्विषये प्रमाणम्।

वैदिकसाहित्ये हविषां विषये पैठीनसिपरिभाषा प्रचलितास्ति। तथाहि कौशिकसूत्रभाष्ये—

'उपदधातीत्यनादेशे (१) आज्यम् (२) समित् (३) पुरोडाशः (४) पयः (५-६) उदौदनं (७) पायसं (८) व्रीहिः (९) यवः (१०) तिलं (११) धानाः (१२) करम्भः (१३) शष्कुलयः—एतानि त्रयोदश हवींषि जानीयात्।,

---

१. सूर्यो देवो देवता, मित्रावरुणौ देवौ देवते, पृथिवी देवी देवतेति दर्शनाद्देवदेवतयोर्भेदोऽभ्युपगन्तव्यः।

अत्र पशुर्हविषां मध्ये नास्ति, किन्त्वथर्ववेदं व्याकुर्वता सायणाचार्येणायमेव पाठ इत्थमुदाहृतः—'उपधानं नाम आज्यादित्रयोदशद्रव्यहोमः। उपदधात्यनादेशे आज्यं समित् पुरोडाशः पय ओदनं पायसं पशुर्व्रीहियवतिलधानाः करम्भः शष्कुल्यः— एतानि त्रयोदश हवींषि जानीयादिति पैठीनसिपरिभाषणात्'।

यदपि कैश्चिदुक्तं वैदिकयज्ञेषु देवतार्चने पुष्पाणां प्रयोगो नास्ति, तदर्थं मूलं मृग्यमथवा तान्त्रिकैः पौराणिकैर्वा विकासः कृत इति ध्येयम्।

ओङ्कारस्य यत्स्वरूपं महत्त्वं च वैदिकसाहित्ये, तथैव कुण्डलिन्यास्तन्त्रे, तयोरेकरूपत्वात्, 'अध्युष्टवलयाकारा प्रणवत्वमुपागता' इत्यादि दर्शनात्।

तन्त्रेषु पञ्चमकारसेवनं तन्त्राणामुच्छित्तये जातमिति दृढं प्रतीमः। यद्यपि पञ्चानामेतेषामन्या व्याख्यापि लभ्यते, तथापि तादृशः कुत्सिताचारो गुप्तरूपेण प्रसृत आसीदित्यत्र नास्ति शङ्कालवः।

आनन्दोल्लासः, वीराचारः, चक्रपूजा, लतासाधनम्, योनेः स्तोत्रम्, योनिकवचं तु तत्तत्तन्त्रेषु क्षिप्तं मनोविनोदायैव न सिद्धये, धूर्तानां कामचार एवैतत्सर्वमिति निश्चिनुमः।

कुल्लूकभट्टेन मनुस्मृतिटीकायां (२।१) हारीतस्य वचनान्युदाहृतानि— 'श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च' इत्येतेन वेदतन्त्रयोर्विभक्तः पन्था इति कथयितुं पार्यते। एवमेव पौराणिकी श्रुतिस्तृतीयेति त्रिधा श्रुतिरिति योजनेऽपि नास्ति बाधा। एकमेव पुराणं ब्रह्मणा प्राक् प्रणोदितमिति दर्शनात्। वस्तुतः प्रामाण्यसिद्धय एव तदुक्तिरिति तु वयम्।

ज्ञानलवदुर्विदग्धस्तु 'आगमः स्वयमेव स्वकीयां वैदेशिकीं जन्मप्रवृत्तिमिहागमनं च निर्वक्ति' इत्याह। तन्मते तु समस्तं ज्ञानजातमिहत्यं नास्ति, ऋग्वेदस्य किमपि सूक्तम्, मन्त्रः, वर्णानि वा एतद्देशीयानि स्युर्न वेति को अद्धा वेद? अनुकम्पनीयास्ते प्रतीच्यगुरुयुगन्धरमयूरपिच्छयष्टिकाचङ्क्रमणमुषितशेमुषीकाः।

वस्तुतस्त्वनादिकालात् प्रवृत्तं महाज्ञानं संसारेंऽशांशरूपेण प्रचलितमास्ते। जपः, पूजा, देवतादीनां स्वरूपचर्चा च जगतः समस्तप्राचीनसाहित्येषूपलभ्यन्ते। तद्धि ज्ञानं कस्मात् स्थानात् कुत्र गतमिति विचारणायां विशेषतो मानाभावः। साधका

अद्यापि तत्तत्सरणिमनुसरन्तः समानमेव तत्त्वमनुभवन्ति। प्राचीनेतिहासविदां केचन तत्त्वमन्यथयन्तः 'सम्भवतः' इति पदं महास्त्ररूपेणाददाना यद्यदिच्छन्ति तदेव कल्पयन्ति।

यदिदं महोद्देश्यं जीवनस्य पुराणैर्निर्दिष्टम्—

"इह लोके सुखं भुक्त्वा अन्ते ब्रह्मपुरं ययौ"

इति तद्वेदमूलकमेव, 'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्' इत्यादि यजुषि (२२।२२), 'आयुः प्राणं प्रजां पशुं ब्रह्मवर्चसं मह्यं दत्त्वा व्रजत ब्रह्मलोकम्' इति अथर्ववेदे। (१९।७१।१), 'धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्। इन्द्र प्रातर्जुषस्व नः' (३।५२।७।), 'न ता नशन्ति न दभाति तस्करो नासाममित्रो व्यथिरादधर्षति। देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपति सह'॥ (६।२८।३।) 'यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते। कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि इन्द्रायेन्दो परिस्रव'॥ (९।११३।११) इत्यादि वाङ्मयेऽपि दर्शनात्। तन्त्राणि तु भोगमोक्षपराण्येवेत्यत्र नास्ति शङ्कालेशः। मध्यकाले भिक्षवः संन्यासिनश्च एकाङ्गिनं वैनाशिकदर्शनं जगन्मिथ्यात्वदर्शनं च व्याचक्षाणा व्यवहारे पराजिग्युः।

इत्थं च मन्त्रेषु बीजरूपेणावस्थापिता, ब्राह्मणेषु कल्पेषु चाङ्कुरायमाणा, स्मृतिषु पुराणेषु तन्त्रेषु च शाखाप्रशाखापल्लवपुष्पफलप्रस्तारमातन्वती महाविटपायमाना वैदिकसंस्कृतिरेव विजृम्भत इति शिवम्॥

———

# जैनेषु तन्त्रसाधना तद्गता आचाराश्च

श्रीरुद्रदेवत्रिपाठी, मालवमयूरसंपादकः ।

## मानवस्य साहजिकी प्रवृत्तिः

मातृगर्भान्मुक्तिं प्राप्य संसारमागतः सर्वोऽपि जीवः स्वस्य ज्ञानतन्तूनां विकासस्य प्रथमायां सोपानपङ्क्तौ समारूढः सन् सुखमभिलषत्येव । यथायथञ्चास्य वृत्तयो वर्धन्ते तथातथैव मानवस्य मानस्यो मृगतृष्णा वर्धमाना भवन्ति । तस्मादेव स प्रतिक्षणंसुखस्य सौरभं स्वार्थस्य मरन्दं तथा मानसिक्याः पिपासायाः शमनहेतून् गवेषयन् कान्दिशीकतां बिभर्ति । प्रतिपदं च लौकिकेषु क्रियाकलापेषु नवनवान् प्रयोगप्रयत्नान् यत्नतश्चरीकरीति । परं यथा क्रीडासु बालकोऽन्यस्माद् बालकान्निलीयमानः प्रत्यक्षं स्थितोऽपि हस्तगतो न भवति, तथैव भूयो भूयः शान्तिं सुखञ्च कामयमानोऽपि हस्तसात्कर्तुमसमर्थ एव तिष्ठति, इत्थं चिन्तासन्तानतान्तस्य शरणं गुरुचरणमेव भवतीति मत्वा विविधान् साधनापथः प्राप्नोति ।

## सुखप्राप्तेः साधनानि

आधिदैविकाधिभौतिकाध्यात्मिकरूपत्रिविधतापानां हानाय गुरूपदिष्टान् मार्गान् सम्यग् ज्ञात्वापि चिरं विकलो जनः सर्वत्र श्रमाधिक्यमेव सम्मनुते । विविधप्रक्रियाशालिनो यन्त्र-मन्त्र-तन्त्र-स्वरयोगमार्गा अपि तेषु सुखशान्तिप्रदा इति मत्वा तत्रापि कस्यचिदेकस्यावलम्बनं कृत्वाऽऽत्मनः कल्याणाय यतमानः स आध्यात्मिकदृष्ट्या शान्तिमधिगच्छति । यद्यप्यस्मिन्ननवधानतया हानेराशङ्का पदे पदे समायात्येव; तथापि निष्कामभावनया केवलमीश्वराराधनधिया प्रवर्तिते प्रयासे सुखमेव स्फुरति । तस्मादेव साधना साधीयसी सम्पद्यते ।

## मन्त्र-यन्त्र-तन्त्राः

साधनामार्गस्यास्य तिस्रो धाराः प्रधानरूपेणोपलभ्यन्ते, यासु मन्त्रधारा यन्त्रधारा तन्त्रधारा चेति तिस्रोऽपि त्रिवेणीव सारभूताः सर्वसम्मता विद्यन्ते । जैनाचार्यैश्च यथासमयं तिस्रोऽपि स्वीकृताः । जैनसम्प्रदायस्यागमेषु यत्र तत्र निर्देशोऽपि

मिलत्येव। सनातनग्रन्थेषु यथा क्वचित् तन्त्रनाम्नैव, क्वापि मन्त्रनाम्नैव, क्वचन यन्त्रनाम्नैव सर्वा अपि तान्त्रिक्यो विधाः प्रदर्शितास्तथैव जैनधर्मग्रन्थेष्वपि सम्मिश्रितया प्रणाल्या परिचायिता इमा धाराः। आगमनाम्ना सूचितेषु जैनग्रन्थेषु सनातनीयागम'नामवन्नास्ति केवलं साधनापथो दर्शनम्, परं 'कुलार्णवतन्त्र'-वदागमानां कलावाचारसम्मतत्वं प्रायः स्वीकृतमेव।[2] जैनशास्त्रेषु योगशब्दोऽपि तन्त्रनाम्नैव बोधितः। भगवतः श्रीपार्श्वनाथादेव जैनेषु सेयं मान्त्रिकी साधना-पद्धतिः प्रस्फूर्तिं गतेति विदुषां मतम्। समाजस्याभिरुचिर्यदाऽनवरतं मन्त्र-तन्त्र-साधनासु विशिष्य जागरशालिनी गोचरीभूता तदा जैनाचार्यैरपि जैनतन्त्राणामक्षयः कोषोऽपावृतः। महानिर्वाणतन्त्रस्य[3] वचोऽनुसारं जैनधर्मावलम्बिभिरपि सर्वेष्वपि कर्मस्वागमकर्मणां प्राधान्यमुपदिष्टम्। सृष्टि-स्थिति-संहाररूपाः परिकल्पनाः, देवपूजा-सर्वसाधन-पुरश्चरण-षट्कर्मसाधन-ध्यान-योगादयश्च साधयितुं विधि-दर्शका अनेके ग्रन्था अत्र निर्मिताः। अर्धमागध्यां भाषायामपि तत्तच्छास्त्रनिर्माण-पाटवं पुरस्कुर्वद्भिराचार्यैः कतिपया नवीनाः पद्धतय उपदीकृताः। यथा हि—नखदर्पण-(हाजरात)स्य पद्धतिमवलम्ब्य खड्गदर्पण-जलदर्पण-कज्जलदर्पण-घटावतार-कज्जलावतार-पद्धतयः[4], अञ्जनप्रयोगे च पातालाञ्जन-हनुमदञ्जन-वेतालाञ्जनादयः

---

१. कृते श्रुत्युक्त आचारस्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलावागमसम्मतः॥

२. आगमपरिभाषा चेयम्—

सृष्टिश्च प्रलयश्चैव देवतानां यथार्चनम्।
साधनं चैव सर्वेषां पुरश्चरणमेव च॥
षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तमागमं तद्विदुर्बुधाः॥

[वाराहीतन्त्रे]

३. विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये।

४. अङ्गुष्ठे सलिले खड्गे दीपे च विधिनाऽमुना।
आदर्शे चापि कर्तव्यं साधनं मन्त्रवेदिभिः॥

[आर्षविद्यानुशासने]

प्रयोगा 'अञ्जनकल्प'नामके ग्रन्थे विशदीकृताः। रोगाणां निवारणाय नानाविधौषध-मूलिकादिग्रहणप्रयोगेऽपि जैनाचार्या न मौनाः। यन्त्रविषये च पताकायन्त्राणि, अङ्कयन्त्राणि, रेखायन्त्राणि, अक्षरयन्त्राणि चेत्यादयो सुबहुविचारपदवीमारोपिताः। सहैव च बीजमन्त्र-त्राटकादिप्रकाराणामपि विधयो विचारिताः।

## विद्या-कल्पनामभ्यामागमसूचनम्

जैनाचार्यैर्विशिष्य तान्त्रिकग्रन्थानां नामविरचने—विद्या (विज्जा)-कल्प-(कप्प) नाम्नोः सन्ततं ग्रहणं कृतम्। यथा हि—गणधरविद्या, चन्दसेणमहाविज्जा, मयूरवाहिनीविद्या, चन्द्रप्रभविद्या, महामोहिनी पद्मावती विद्या, शत्रुभयनाशिनी पार्श्वविद्या, परविद्योच्छेदिनी पार्श्वविद्या, वर्धमानविद्या, गान्धारविद्या, चतुर्विंशति-तीर्थङ्करविद्या, श्रीऋषभविद्या, शान्तिनाथविद्या, अपराजिता विद्या, रोगापहारिणी विद्या, वासुपूज्यविद्याम्नायः, सारस्वतमहाविद्या, श्रुतदेवताविद्यादि-बह्वयो विद्याः प्रदर्शिताः सन्ति। एतासु काश्चन केवलं मन्त्ररूपात्मिकाः, काश्चन पद्धतिदर्शिकाः, काश्चन ग्रन्थरूपाः सन्ति। ब्रह्मविद्या-श्रीविद्ययोरपि कल्पनाम्ना संग्रहो विद्यते। कल्पनाम्ना विविधानां ग्रन्थानां संग्रहः प्राच्यभाण्डागारेषु सम्मिलति। यथा हि—नमस्कारमन्त्रकल्पः, पञ्चपरमेष्ठिमहामन्त्र-यन्त्र-बृहत्कल्पः, ओङ्कारकल्पः, ह्रीङ्कारकल्पः, उवसग्गहरकल्पः, नमिऊणकल्पः, भक्तामरकल्पः, कल्याणमन्दिर-कल्पः, लोगस्सकल्पः, शक्रस्तवकल्पः, चिन्तामणिकल्पः, मन्त्राधिराजकल्पः, अट्टेमट्टे मन्त्रकल्पः (त्रिभुवनविजयपताकायन्त्ररूपः), धरणोरगेन्द्रस्तव-कल्पः, कलिकुण्डयन्त्रमन्त्रकल्पः, जीराउलीपार्श्वनाथमन्त्रकल्पः, रक्तपद्मावतीकल्पः, पद्मावतीकल्पलता, सूरिमन्त्रकल्पः, वर्धमानविद्याकल्पः, गान्धारविद्याकल्पः, अप्रति-चक्राकल्पः, अम्बिकाकूष्माण्डीकल्पः, ज्वालामालिनी (ज्वालिनी) कल्पः, सिद्धायिका (कामचण्डालिनी) कल्पः, पञ्चाङ्गुलिकाकल्पः, प्रत्यङ्गिराकल्पः, भारती-कल्पः, वाग्वादिनीकल्पः, सारस्वतकल्पः, श्रीदेवीकल्पः, सिद्धचक्रकल्पः, ह्रींमण्डल-कल्पः, श्रीविद्याकल्पः, मणिभद्रकल्पः, घण्टाकर्णकल्पः, उग्रविद्याकल्पः, क्षेत्रदेवता-कल्पः, वीशाकल्पः, पण्डरिकाकल्पः, पञ्चषष्टिकल्पः, द्वासप्ततिकल्पः, विजययन्त्रकल्पः, विजयपताकाकल्पः, जैनपताकाकल्पः, अर्जुनपताकाकल्पः, हनुमानपताकाकल्पः, वज्र-पञ्जरमहामन्त्राकल्पः, चन्द्रकल्पः, श्वेतार्क-श्वेतगुञ्जा-अपराजिता-रुदन्ती-मयूरशिखा-

सहदेवी-शृगालशृङ्गी-मार्जारीप्रभृतिदिव्यौषधीनां कल्पाः, प्रतिष्ठाकल्पश्च तन्त्र-साहित्यग्रन्थेषु महत्त्वपूर्णां कामनां पूरयन्ति ।

जैनाचार्याः प्रायेण तत्तन्मन्त्रसम्बन्धिविधानसूचकान् विषयान् कल्परूपेण सम्बोधयन्ति । एते हि कल्पा विविधप्राच्यग्रन्थागारेषु सम्पुटरूपेण निबद्धानां प्रतीनां मध्ये विभागशः समवेता वा विद्यन्ते ।

## जैनश्रमणेषु शक्तिपूजनम्

जैनश्रमणेषु शक्तिपूजायाः शाक्ततन्त्राणामपि च प्रधानं स्थानं विद्योतते । यद्यपि तत्र बाह्याचारकुलाचारसमयाचारसदृशानां केषामप्याचाराणां परम्परा न प्रतीयते; तथापि प्रणव-मायाबीज-कामनाबीजानामुपासनाभिः सह वर्णमय्या देवतायाः, तीर्थङ्कराणां शासनदेवतानाम्—चक्रेश्वरी-अजिता-दुरितारि-कालिका-वैरोट्या-प्रभृतीनां सरस्वत्याश्च षोडशविद्याव्यूहरूपेण रोहिणी-प्रज्ञप्ति-शृङ्खलादिदेवीनामुपासना सुप्रचलिता विद्यते । अथ च सनातनधर्मावलम्बिषु श्रीविद्योपासना, बौद्धेषु च तारादेव्युपासना यथा विशिष्टं महिमानं धारयतस्तथैव जैनेषु शाक्तसम्प्रदायानुकूलैव श्रीपद्मावतीदेव्या उपासनाऽतीव वृद्धिमती दृश्यते । पद्मावत्या अनेके प्रयोगा यत्र तत्र तन्त्रग्रन्थेषु वयं विलोकयामः । यथा हि—रक्तपद्मावती, शैवागमोक्त-पद्मावती, हंसपद्मावती, सरस्वती-पद्मावती, सवरीपद्मावती, कामेश्वरी-पद्मावती, भैरवी-पद्मावती, भैरवपद्मावती, त्रिपुरापद्मावती, नित्या-पद्मावती, महामोहिनी-पद्मावती, पुत्रकर-पद्मावती, कज्जला-वतार-पद्मावती, घटावतार-पद्मावती, दीपावतार-पद्मावतीति कर्मणां सिद्धयेऽपि तत्त-न्नामसंयोजनपुरस्सरं पद्मावत्या मन्त्राणामुपलब्धिः सुशकैव । जैनधर्मानुयायिनः शक्तिपूजायां पूर्णतया विश्वासभाजो विलोक्यन्ते । 'अन्तः शाक्ता बहिः शैवाः' इत्यस्य स्थाने—'अन्तः शाक्ता बहिर्जैनाः' इत्येवमुक्तिश्च चरितार्थतां गच्छत्येव । इदमत्र परं वैशिष्ट्यं यदस्य सम्प्रदायस्याहिंसाप्रधानत्वात् कोऽपि वामाचार-वज्रयान-सदृशः पन्थाः पृथग् न प्रचलितः । सेयं शक्त्युपासना जैनेषु विशुद्धेन स्वरूपेणात्मयोगमार्गं पोषयन्ती शक्तियुक्तात्मभावनानां विधानं पुरस्करोति । आचार्यः श्रीहेमचन्द्रः स्वकीये योगशास्त्रे सप्तमाष्टमप्रकाशयोर्धर्मध्यानप्रसङ्गे 'पदस्थ'नामके ध्याने षट्चक्रवेधपद्धत्य-नुसारं वर्णमय्या देवतायाश्चिन्तनं स्मारयति—

> क्षीराम्भोधेर्विनिर्यान्तीं प्लावयन्तीं सुधाम्बुभिः ।
> भाले शशिकलां ध्यायेत् सिद्धिसोपानपद्धतिम् ।। इति ।

## पञ्चनमस्कृतेः सारसर्वस्वम्

पञ्चनमस्कृतिमन्त्राणां जैनधर्मे परमं माहात्म्यं सूचितम्। अखिलमपि कर्म यथाऽन्येषु धर्मेषु गायत्रीजपादृते न सिद्धिदं सम्पद्यते, तथैवात्र पञ्चगुरुमन्त्रसाधनां विना सकलमपि निष्फलं भवति। यदा जैनधर्मे तन्त्रक्रियाणां प्रामुख्यमुपेतं तदाऽस्य पञ्चनमस्कारमन्त्रस्यापि नैकशो मान्त्रिकाः प्रयोगा आचार्यैरुपदिष्टाः। अस्य मन्त्रस्य कादि-हादिविद्यावत् कूटतां साधयद्भिराचार्यैः 'अ-सि-आ-उ-सा' इति मन्त्रः प्रदर्शितः। नमस्कारमन्त्रस्तोत्रे वाचकवर्यश्रीमदुमास्वातिना (?) अयं मन्त्रः श्रीजिनेश्वरभगवतां मन्त्रात्मकं शरीरमिति सूचितम्। यथा—

जग्मुर्जिनास्तदपवर्गपदं तदैव विश्वं वराकमिदमत्र कथं विनाऽस्मान्।
तत् सर्वलोकभुवनोद्धरणाय धीरैर्मन्त्रात्मकं निजवपुर्निहितं तदत्र॥ ८॥

ओङ्कारविद्यास्तवने च ओङ्कारस्य स्वरूपं पञ्चपरमेष्ठिनां वाचकमिति साधयता श्रीसमन्तभद्रसूरिणा—"पञ्चसु गुरोर्विद्यैका सुखदा परा॥ १२॥" इति संसूच्य क्रमेण 'अ+अ+आ+उ+म्' अरिहन्त-अशरीरी-आचार्य-उपाध्याय-मुनीनां प्रथमाक्षरनिष्पन्नता प्रतिपादिता। एवमेव ह्रीङ्कारेऽपि पञ्चपरमेष्ठिनां निवासं प्ररोचयद्भिर्ऋषिमण्डलस्तवयन्त्रालेखने—

नादोऽर्हन्तः कला सिद्धाः सान्तः सूरिः स्वरोऽपरे।
बिन्दुः साधुरितः पञ्चपरमेष्ठिमयस्त्वसौ॥

इति प्ररूपितम्। श्रीमन्त्राधिराजकल्पे तु चतुर्विंशतिजिनानामपि ह्रीङ्कार एवावस्थितिः प्रदर्शिता। सहैव च वर्णादीनां न्यासस्थानानां मुद्राणां चाकलनमपि विचारसहं विद्यते। पञ्चनमस्कारान्तर्गत-अर्हत्सिद्धाचार्योपाध्यायसाधूनामैक्यरूपं बीजं 'अर्हम्' इत्यपि सुप्रतिपादितम्। "ॐ ह्रीं अर्हं नमः" इति मन्त्रस्य च रत्नत्रय-रूपेण सूचनमपि तत्रैव प्रतिभाति। क्वचित् 'र्हं' इत्येव मन्त्रराजत्वेन परिचायितः। यथा—

ऊर्ध्वाधो रेफमाक्रान्तं सकलं बिन्दुलाञ्छितम्।
अनाहतयुतं तत्त्वं मन्त्रराजं प्रचक्षते॥ र्हं॥

(ब्रह्मविद्याविधौ)

## मन्त्राणां साधनाप्रकाराः

मन्त्रोपासनायां यदा कश्चनोपासकः प्रवृत्तो भवति तदा तत्कृते गुरोरावश्यकता सर्वतः प्रथममावश्यकी भवति। गुरुश्च तं शिष्यं परीक्ष्य स्वसम्प्रदायानुरूपं दीक्षयाऽऽत्मसात् करोति। अनया दीक्षयैव सर्वा अपि साधनाः फलवत्यः सम्पद्यन्ते। शङ्कराचार्याणाम् "मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः" इत्येषा भणितिः सर्वथा सामयिकीति मन्यमानैर्जैनाचार्यैरपि दीक्षायै महत्त्वं प्रदत्तम्। किञ्च, साधनाया आचारा अपि स्वसम्प्रदायानुरूपं वर्णिताः। बहिर्योगरूपेण शय्यात्याग-मलविसर्जन-दन्तधावन-स्नान-वस्त्रधारणोपास्ति-गृहप्रवेश-आसन-दिशामुख-गन्ध-धूप-पुष्पदीपादीनामपि ते ते प्रकारा एवाङ्गीकृता येऽन्यासु पद्धतिषु दर्शिताः। षट्कर्मणां वश्यादीनां सिद्धये विशिष्टकर्मणां क्रियाणाञ्च प्रकारा अपि सुनिश्चिताः। स्वस्वाराध्यदेवानां प्रतिमाः, यन्त्राणि, चित्राणि तेषां बाह्यार्चनपूर्वकं कुण्डलिनीजागरण—सहस्रारभेदनादीनि कर्माण्यपि नात्र विस्मारितानि। अन्यसम्प्रदायेषु द्वित्रान् प्रकारानेव सूचयित्वा आचार्या विरतास्तदा जैनमन्त्रतत्त्वविद्भिः स्वप्रतिभाबलेन नानाप्रकारास्तत्र सुनियोजिताः। यथा हि मालाविषयमधिकृत्य यदाऽन्यत्र रुद्राक्ष-तुलसीप्रभृतीनां तथा करमालायाश्च द्वित्राः प्रकारा वर्णितास्तदाऽत्र सूत्रमाला-मुक्तामाला-बीजमालादीनां तथा करमालायां ॐकारवर्त-ह्रीङ्कारवर्त-नन्द्यावर्त-श्रीकारवर्तरूपमालाप्रकारा अभिनवा एव दर्शिताः।

यन्त्रविरचनाय—

सुवर्णे रौप्ये पटे कांस्ये लिखित्वा यस्तु पूजयेत्।  
तस्यैवाष्टमहासिद्धिर्गृहे वसति शाश्वती॥ ८८॥  
भूर्जपत्रे लिखित्वेदं गलके मूर्ध्नि वा भुजे।  
धारितं सर्वदा दिव्यं सर्वभीतिविनाशकम्॥ ८९॥

इमानि साधनानि प्रस्तारप्रकाराश्च भौम-भैरव-उत्कीर्णप्रस्तारास्तथा आलेखन( चित्रण )लेखन-उत्कीर्णनप्रकारा अपि स्वीकृताः[1]।

---

१. द्रष्टव्यः—श्रीनमस्कारस्वाध्यायस्य द्वितीयो भागः।

मन्त्रसिद्धये षट्चक्रशोधनम्, मालामन्त्र-लेखनमन्त्र-पूजनमन्त्र-पाठमन्त्र-जपमन्त्राणां ज्ञानम्, कीलिताभिशप्त सुप्त-प्रसुप्त-खण्डितस्वरूपविचारणम्, अभिषेक-मार्जन-अधिश्रयणान्यसंस्कारकरणं दोषवारणाय च पञ्चाङ्ग-विधानम्, रहस्य-स्तोत्र-सहस्रनाम-कवच-न्यास-ध्यान-मुद्रा-तत्त्व-मण्डल-स्वरादीनां सामयिकः परिचयोऽपि नातितिरस्कृतः। 'आर्षविद्यानुशासनग्रन्थरत्ने' मन्त्रमेलनं पाञ्चभौतिकं च चक्रम्, द्वादशारचक्रम्, ऋणधनशोधनचक्रम्, नक्षत्रचक्रम्, कूर्मचक्रं च साधु वर्णितम्। एतावदेव नहि; अपि तु जैनाचार्याः सर्वसुखावहान् लौकिकान् विषयानपि तान्त्रिकविद्यासु स्थानं ददते। यथा हि आर्षविद्यानुशासनस्य षष्ठे समुद्देशे नारीणामष्टौ दोषाः सन्तीति निरोधकादोषास्तेषां लक्षणानि, तत्तद्दोषनिवारणार्थमौषधयो मन्त्राश्च, वन्ध्यायै पुत्रदायकाः प्रयोगा औषधयश्च, गर्भसम्बन्धिसर्वविधदोषनाशक-प्रयोगाः, गर्भस्थितिकाले प्रतिमासकर्तव्यानि, शीघ्रप्रसूतिकरा मन्त्राः, सर्पविज्ञानम्, विषविज्ञानम्, बालविज्ञानम्, निधिगर्भभूपरीक्षणविधानसम्बद्धान् विषयान् हितावहान् मत्वा वैशद्येन सूचयन्ति।

### जैन धर्मे यन्त्राणां बाहुल्यम्—

आध्यात्मिकसाधनायां प्रवर्तमानेषु वैदिक-जैन-बौद्ध-धर्मेषु समानेन रूपेण यन्त्राणां वैविध्यं बाहुल्यञ्च वयं पश्याम एव। परं जैनेषु—अर्हद्वक्त्रप्रसूतं गणधर रचितं द्वादशाङ्गं विशालं विद्यते। तदनुसारं द्वादशाङ्ग्यां द्वादशोऽङ्गः किल दृष्टिवादोऽभूत्। तस्य पञ्चसु विभागेषु तृतीयस्य विभागस्य चतुर्दशपूर्वेषु दशमः पूर्वो विद्याप्रवादनामा बभूव। यस्मिन् बहवो मन्त्रा विद्याश्चाभूवन्। एकस्य जैनशास्त्रवेत्तुः प्रामाणिकेन कथनेन ज्ञायते यद् जैनधर्मे लक्षमिता यन्त्रास्तथा लक्षमिता एव तन्त्रप्रयोगा आसन्। भगवतः पार्श्वनाथस्य ( ई० पू० ८५० ) स्थितिकाले वैदिकतापस-नास्तिकपरम्पराः प्रचलन्ति स्म। तदा प्रायः सर्वेऽपि तापसा यन्त्र-मन्त्रप्रयोगैर्जनान् चमत्कृत्य स्वस्वधर्मे प्रवेशयितुं कटिबद्धा अभूवन्। तान् वारयितुं सत्ये मार्गे च प्रेरयितुं भगवताऽपि तादृशी पार्श्वपरम्परा प्रवाहितेति लौकिको वादः। तदा पुरुषादानीयश्रीपार्श्वनाथ-भगवतः शासनदेव्याः पद्मावत्या अपि समाराधना विशेषतः परिवृद्धा।

### जैन-तन्त्रगता आचाराः—

स्वस्वसम्प्रदायानुसारं केचनाचारा अपि भवन्त्येव। जैनधर्मे कस्यापि मन्त्रानुष्ठानस्य सिद्धये सर्वसामान्यरूपेण—

अष्टा चाम्लतपःपूर्वं जिनानभ्यर्च्य सिद्धये।
अष्टजातीसहस्रैस्तु जापो होमो दशांशतः॥ २९॥
(ऋषिमण्डलस्तवयन्त्रालेखनम्)

इत्यादिवचनैराचाम्लतपःकरणमावश्यकमापतति। अनेनैव पद्येन सकलीकरण प्रक्रियाया अपि निर्देशो मिलति। सकलीकरणे च १—मन्त्रः, २—न्यासः, ३—ध्यानम्, ४—साधनम्, ५—जापः, ६—तपः, ७—अर्चा, ८—अन्तर्यागश्चेति विषया आयान्ति। मन्त्रे ह्यासनविधयः, न्यासे कवचकर्माणि, ध्याने पिण्डस्थ–पदस्थ–रूपस्थध्यानानां प्रकाराः, मुद्रायां विशिष्य गौतमस्वामिमुद्राः (सौभाग्य–सुरभि–प्रवचन–परमेष्ठि–अञ्जलिमुद्राः), जापे जात्यादिपुष्पार्पणपूर्वको जपविधिः[1], तपसि आचाम्लादि तपः-प्रकारा,ः अर्चायां जिनपूजा स्नानविधिः, अन्तर्यागे च नाभिमण्डलाग्नौ चतुर्विधकपायाणां होम इत्यादयो विषया अन्तर्भवन्ति[2]। क्वचित् क्वचिद् जैनाचार्याः शान्तिक–पौष्टिक–वश्याकर्षणोच्चाटन–स्तम्भनादिकर्मणां सिद्धये वैदिकधर्मानुसारेण कर्तव्य-भूतान् होमादिविधीनप्युपदिशन्ति। मन्त्रस्तोत्राणां पुष्पिकासु फलश्रुतयः किल सुबह्व्यः प्रदर्शिताः। याकिनी–शाकिनी भूत–वेताल–ग्रह–व्यन्तर–भयापसारणाय प्रायः सर्वत्र स्मरण–जपादिविधानं सूचितम्। कर्मणां विनाशाय विघ्नादीनामुत्सारणाय लब्धिप्राप्तये मुक्तिलक्ष्मीवरणाय च मन्त्राणां जापनिर्देशः सर्वत्र सम्मतः[3]। तथापि कर्मकाण्डप्राधान्यं परित्यज्यात्र अन्तर्यागविषय एव विशिष्टरूपेणात्मसात् कृतः। पूजास्वपि वासक्षेपद्वारैवार्चनं हितं मतम्।

लक्षनमस्कारगुणनविधौ जैनाचारपरम्परादर्शनं विशेषरूपेण मिलति। यथा—"मूलनायकस्य स्नानं कृत्वा पूजा क्रियते। ततः पञ्चशक्रस्तवैर्देवा वन्द्यन्ते।

---

१. जपस्य व्याख्या—
भूयो भूयः परे भावे भावना भाव्यते हि या।
जपः सोऽत्र स्वयं नादो मन्त्रात्मा जप्य ईदृशः॥

२. मन्त्राधिराजकल्पे सागरचन्द्रसूरिः पूजायै षट्कर्मणामित्थं प्रकारान् सूचयति—
आदौ जिनेन्द्रवपुरद्भुतमन्त्रयन्त्राह्वानासनानि सकलीकरणं च मुद्राम्।
पूजां जपं तदनु होमविधिं षडेव कर्माणि संस्तुतिमहं सकलं भणामि॥

३. महामन्त्रप्रभावेन विघ्नजालान्यनन्तशः।
दुष्टारिनृपचौरादिजानि नश्यन्ति तत्क्षणम्॥ ७६॥
(तत्त्वार्थसारदीपके)

ततः पञ्चपरमेश्वराराधनार्थं २४ लोगस्स कार्योत्सर्गं कृत्वा पञ्चपरमेष्ठिप्रतिमा मण्ड्यन्ते। ततो वासकर्पूरादिभिः (वासक्षेप-धूप-दीपादिभिः) पूजा विधीयते। ततो नमस्कारं नमस्कारं प्रतिदेवस्य तिलक-पुष्पारोपण-वासक्षेप धूपोद्गाहन-प्रदीपाखण्डकाक्षतोपढौकन-वन्दनानि क्रियन्ते। सहस्रे सम्पूर्णे सति पूगीफलोपढौकनपूर्वं च तिसृभिः स्तुतिभिर्देवा वन्द्यन्ते।" इत्यादिरूपेण जैनतन्त्रगता आचाराः सर्वसम्प्रदायानां साम्य एव तिष्ठन्ति।

## जैनाचार्यास्तेषां मन्त्रग्रन्थाश्च

जैनधर्मे आचार्याणां परम्पराऽतीव दीर्घा विद्यते। सूत्रेषु निशीथसूत्रे नमस्कारमन्त्र-सूरिमन्त्रयोर्विद्याविषये सप्रमाणा उक्तयः सन्ति। अन्यासां विद्यानां विषये पञ्चमचरित्रे, वसुदेवहिण्डी-त्रिषष्टिशलाकापुरुषचरितयोर्बहूल्लिखितं विद्यते। "एन्शेण्टइण्डियाजैन गाडेस" नामकग्रन्थे विद्यानां संग्रहो दृश्यते। श्रीसिंहतिलकसूरेः-"मन्त्रराजरहस्यम्", "तन्त्रलीलावती", भट्टारकाकलङ्कदेवस्य स्तोत्राणि, श्रीसिद्धसेनदिवाकरस्य, जिनप्रभसूरेः, जिनदत्तसूरेः, मुनिगुणाकरस्य, कुन्दकुन्दाचार्यस्य हेमचन्द्राचार्यस्य च ग्रन्था मन्त्र-तन्त्र-यन्त्र-योगविषयका अतीव महत्त्वपूर्णाः सन्ति। "आर्षविद्यानुशासनम्" नामकोऽपि ग्रन्थो जैनधर्मे मन्त्रग्रन्थेष्वतीव महत्त्वमासादयति। प्रायः पञ्चसहस्रश्लोकात्मकोऽयं ग्रन्थो मन्त्रशास्त्राणां जैनधर्मविषयिणीं सर्वामपि जिज्ञासां पूरयति। 'कोष्ठकचिन्तामणि'—नामाऽन्यो ग्रन्थो यन्त्रनिर्माणस्य विविधान् प्रकारान् सूचयति, तथा रेखायन्त्राणाम्, अङ्कयन्त्राणाम् बीजाक्षरगर्भयन्त्राणाम्, मन्त्रगर्भयन्त्राणाम्, स्तुतिपद्यगर्भयन्त्राणाम्, नामगर्भयन्त्राणां च भद्र-अतिभद्र-सर्वतोभद्र-महाभद्रतारूपप्रकारानावर्जयित्वा सृष्टि-स्थिति-संहरणरूपलेखनप्रकारान् तत्तत्कर्मफलाभिलाषमाध्यमेन करणीयानि यन्त्राणि निर्मातुं विधयः प्रोक्ताः। अस्य ग्रन्थस्य केवलं शतगाथा अर्धमागध्यां विरचिता आसन्, यासां प्राप्तिरद्यावधि न जाता। परं तासां टीकारूपेण प्राप्तैका प्रतिर्विद्यते, यस्याः प्रविर्जैनसाहित्यविकासमण्डलाख्य संस्थायां मुम्बापुरीस्थायां सुरक्षिताऽस्ति। एवमेव जाङ्गुलिमन्त्र-स्वर्णसिद्धिप्रयोग-ज्वरादिनिवारणमन्त्रप्रयोगाश्चापि भृशं गवेषणीयाः प्रकाशनीयाश्च विद्यन्ते॥



# शाक्ताख्यो वैकल्पिकपथक्रमः

श्रीनवजीवनरस्तोगी, लक्ष्मणपुरम् ।

परशिवतरणिकिरणदृढपातविकासितहृदयकमले
सरहस्यस्फुरितनिजातिसुन्दरपरिमलबोधक्रमे ।
अहं शिवनाथो निखिलजनतत्त्वसुनिर्भर इति विरावं कुर्वन्
स्फुरति विमर्शभ्रमरः प्रकाशनिजलक्ष्यं बिभर्ति ॥[1]

अस्ति हि प्रास्ताविकमत्र किञ्चित् । अस्मिन् शिवाद्वयनये आत्मविमर्श एवोपेयतयोपपाद्यते । अतो हि प्रकाशैकस्वभावस्य विश्वविलासस्य स्वस्फुरणानुभवो विमर्शोपायतया पर्यवस्यति । न खलु स्वसत्तामात्रेण विश्वस्यात्मविमर्शं प्रत्युपायत्वम्, अपि तु तथा तथा विमृश्यमानावस्थायामेव ।[2] ननु तस्योपायत्वे स्वीक्रियमाणे विश्वप्रपञ्चस्य किञ्चिन्नैयत्यमपि समापतति । नैतच्छङ्कनीयम् । यतो हि वस्तुवृत्त्या स्वात्मरूपपरमेश्वरस्य विकल्पस्वभावं स्वातन्त्र्यमप्रतिहतं सर्ववादिसम्मतञ्च । विश्वव्यवहारोऽपि परिमितापरिमितप्रमातृद्वयकल्पनां विना नोपपद्यते । तत्र कल्पितप्रमाता घटोऽयं पटोऽयमित्यादिभेदप्रथावैयाकुल्येन विकल्पात्मनो भावान् परस्परं विविक्तानुद्भावयति । तानेव चार्थग्रहणकाले करणप्रणालिकयाऽनुभवक्रियाविष्टान् पर्यालोचयतस्तस्य देशकालाद्यवच्छेदोल्लङ्घी परसंविद्रूपः प्रत्यभिज्ञानात्मा परप्रमाता आविर्भवति । अपरिमितप्रमाता तु स्वस्फुरत्तैकस्वभावतया भेदाकुलस्य वेद्यवर्गस्य प्रकाशरूपतामुपलभते सुतराम् । ततो युक्तमेव यद् दर्शनान्तरेषु बन्धनतया परिकल्पितो विषयोल्लासोऽत्र "जीवन्मुक्तिलक्षणाह्लादस्वभावं स्वात्मनो विमर्शं प्रत्युपायतयोपदिश्यते[3] ।" श्रीमहार्थमञ्जर्युद्धृतोऽयं वचनकलापोऽपि उपायोपेयभावसमुन्मेषे प्रभुः पारमेश्वरस्वातन्त्र्यमासूत्रयति—

---

१. अभिनवगुप्तः, तंत्रसारः, पृ० २३-२४, मूलप्राकृतश्लोकयोः संस्कृतच्छाया ।

२. द्रष्टव्यः, महेश्वरानन्दः, महार्थ-मञ्जरी-परिमलः, त्रिवेन्द्रम्, पृ० १० ।

३. तत्रैव, पृ० १४ ।

ख्यातिमपूर्णां पूर्णख्यातिसमावेशदार्ढ्यतः क्षपय ।
सृज भुवनानि यथेच्छं स्थापय हर तिरय भासय च[1] ॥

नन्वहंरूप एव परमेश्वरः, स तु प्रकट एव, किं बहुचर्चितेन आणवाद्युपाय-त्रयसंघातेन । अतिस्फुटस्योपायान्वेषणं न युज्यते । उक्तमपि—

उपायजालं न शिवं प्रकाशयेद् घटेन किं भाति सहस्रदीधितिः ।
विवेचयन्नित्थमुदारदर्शनः स्वयं प्रकाशं शिवमाविशेत् क्षणात्[2] ॥

विज्ञानोपनिषदि—

न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते ।
केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने ॥
शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना ।
तदासौ शिवरूपी स्यात् शैवीमुखमिहोच्यते ॥
यथालोकेन दीपस्य किरणैर्भास्करस्य च ।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये[3] ॥

इति श्लोकत्रयेण समाधीयते यदुपायोपेयभावः काल्पनिकः, तथाप्यात्मस्वरूपस्य स्फुटोपलब्धावुत्पन्नायां जिज्ञासायामस्ति कश्चिदुपयोग उपायस्य । उपायोपेयभावाश्रयणं ज्ञानसत्तायां जिज्ञासुं प्रवेशयति । सर्वोऽयं प्रपञ्चविलासः शक्तिरूपः । शक्तेः शिवाभेदा-ल्लब्धशाक्तबलः पशुः शिवस्वरूपो जायत एव । एतदर्थमुपायो नाम न कश्चित् शक्तेर्विजातीयः पदार्थः; अपि तु शैवी शक्तिर्हि प्रत्यक्षीकारचमत्कारसारे आत्मस्वरूप-प्रवेशने प्रवेशद्वारतयोद्घोष्यते[4] । महती चेयमनुप्रवेशयुक्तिः, यः खलु उपायो नाम ।

---

१. तत्रैव । विरूपाक्षपञ्चाशिकास्थ एष श्लोकः ।

२. शिवोपाध्यायः, विज्ञानभैरवविवृतिः, पृ० १०८ ( उद्धृतम् ) । अपि च द्रष्टव्यम्— तत्रैव पृ० १०९; म० मं०, गाथा ४; क्षेमराजः, स्तवचिन्तामणिविवृतिः, पृ० ८३; अभिनवगुप्तः, मालिनीविजयवार्त्तिकम् २-३-४ ।

३. विज्ञानभैरवः १९–२१ ।

४. गुरुरप्यत्र शक्तित्वेनैव स्मृतः । तथा हि शिवसूत्रम्,–'गुरुरुपायः' ( २.२३ ) इति । द्रष्टव्यं भट्टभास्करकृतं वार्त्तिकमपि ( पृ० ३५ )

प्राधान्यात्र गुरुः शक्तिरुपायः परमः स्मृतः ।
यतः सा शाम्भवी शक्तिरनुग्रहकरी सदा ॥

स्वस्फुरत्तात्मनां शक्त्यानुप्राणितानां प्रागल्भ्यात् स्वात्मा प्रत्यभिज्ञायते। आसादितायां शक्तावासादित एव शिवः[1]। शक्तेः शक्तिमद्रूपत्वाभिधाने तयोरुपायोपेयभावो विजृम्भते। अभिहितञ्च श्रीतन्त्रालोककृद्भिः—

तन्मुखा स्फुटता धर्मिण्याशु तन्मयताश्रितिः॥
त एव धर्माः शक्त्याख्यास्तैस्तैरुचितरूपकैः।
आकारैः पर्युपास्यन्ते तन्मयीभावसिद्धये[2]॥

अनेनैव न्यायेन स्पन्दनये शक्तिचक्रविकासस्तत्प्राप्तावुपायतया प्रोक्तः[3]। उपायतारतम्यं वैविध्यं चानयैव रीत्या व्याक्रियते। पूर्णस्वभावे हि रूपे उपासन्नाः शक्तयः पूर्णामेव भुक्तिमुक्तिद्वयाह्लादलक्षणां सिद्धिं प्राप्नुवन्ति, अपूर्णस्वभावे पुनरपूर्णामेव[4]। अत एव च दर्शनभेदः[5]। "तद्भूमिकाः सर्वदर्शनस्थितयः"[6] इति प्रत्यभिज्ञाहृदयोक्तिश्चेदमेव मनोदार्ढ्यमुपयाति।

---

१. प्रतिपादितं चैतत्प्रत्यभिज्ञायाम्—
शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते।
(उत्पलदेवः, ईश्वरप्रत्यभिज्ञाकारिका १.१.२)
दर्शयिष्यते च तत्तच्छक्तिकृतोऽयमाणवाद्युपायविभागः।

२. अभिनवगुप्तः, तन्त्रालोकः १.२०५–६।

३. द्रष्ट., क्षेमराजः, स्पन्दनिर्णयः, पृ० ६।

४. इदमेवोद्दिश्य श्रीतन्त्रालोककृता अङ्गुलिनिर्देशः क्रियते—
परतत्त्वप्रवेशे तु यमेव निकटं यदा।
उपायं वेत्ति स ग्राह्यस्तदा त्याज्योऽथवा क्वचित्॥ (तं० ४.२७२)।
उपलक्षणं चैतत्। सर्वत्र हि खलु उपासान्तिकदूरत एतादृश एवोपदेशः क्रियते। द्रष्ट० अभिनवगुप्तः, ईश्वर-प्रत्यभिज्ञा-विमर्शिनी ३,१,३; तथा च "काश्मीर शैवदर्शन में पदार्थ का स्वरूप" शीर्षकोऽस्मदीयः निबन्धः दार्शनिकत्रैमासिकम्, वर्ष १०, अङ्क २, पृ० ९४।

५. तं० १.२०९; अपि च, जयरथः, तन्त्रालोकविवेकः, १, पृ० २३३।

६. क्षेमराजः, प्रत्यभिज्ञाहृदयम्, सूत्रम् ८, (श्रीजयदेवसिंहसम्पादितसंस्करणम्) काशी।

ज्ञानमेव ज्ञानसत्तां प्रवेष्टुमर्हति। अतोह्युपायो ज्ञानात्मा। ज्ञानसत्तेयं भेदेन, भेदाभेदेन, अभेदेन च त्रिधा स्फुरन्ती आणवशाक्तशाम्भवोपायाख्यां क्रमशोऽर्जयति[1]। स्वरूपतः स्वसंविदेवोपायात्मतां गृह्णाति। अत एवोच्यते—

उपाये नाग्रहः कार्य उपेया भैरवी स्थितिः।
यासौ स्वसंवित् तामेव सर्वोपायां समाविशेत्[2]॥

इह खलु स्वरूपप्रथनाय सर्वेषामेव सृष्ट्याद्युपाधित्रयात्ययो नितरामपेक्षणीयः, तन्निष्पत्तयेऽनुसन्धीयमानस्तत्तत्कार्यक्षम उपायस्त्रैविध्यं भजते, अनुपायात्मिका नाम या चतुर्थी सरणिस्तत्रोपाधयोऽनुल्लसिताः, तत उपाधीनामत्ययस्याप्रासङ्गिकत्वात्[3]। अथ च सर्वमिदमुपायजातं तत्तत्परामर्शकक्ष्याविशेषारुरुक्षुजनापेक्षया पर्यालोचितम्। स्वस्वभावैकपरिशेषतामयी पार्यन्तिकी अवस्थाप्युपायतामेवोपयाति, तद्व्यतिरेके पुनरुपाया एव न। यदुक्तं श्रीतन्त्रवटधानिकायाम्—

उपायैर्न शिवो भाति भान्ति ते तत्प्रसादतः।
स एवाहं स्वप्रकाशो भासे विश्वस्वरूपकः[4]॥

परस्वरूपोपलब्ध्युपायाकाङ्क्षया—

यावस्था भरिताकारा भैरवस्योपलभ्यते।
कैरुपायैर्मुखं तस्य परादेवी कथं भवेत्[5]॥

इत्यत्र प्रश्नितवस्तुनिर्णयाय भूमिकाज्ञानानि तत्रैव क्रमेण प्रकाशितानि—

ऊर्ध्वे प्राणो ह्यधो जीवो विसर्गात्मा परोच्चरेत्।
उत्पत्तिद्वितयस्थाने भरणाद्भरिता स्थितिः[6]॥

---

१. द्रष्ट० तं १,२३०, तं० वि० १, पृ० २४०।

२. अभिनवगुप्तः पर्यन्तपञ्चाशिका ४० (उद्धृतम्, डॉ० पाण्डेयः, अभिनवगुप्तः एन हिस्टोरिकल एण्ड फिलॉसॉफिकल स्टडी, द्वितीयसंस्करणम्, पृ० ९२)।

३. द्रष्ट० तं० वि० २, पृ० २४०।

४. अभिनवगुप्तः, तन्त्रवटधानिका, २.१।

५. वि० भै० २३।

६. तत्रैव २४।

आरुरुक्षुस्तरवैविध्येन सर्वमप्यौपयिकं ज्ञानं बोधक्रमेणात्रैव निविष्टम्, एवं व्याख्यातृभिस्तत्र तत्रोपदर्शितम्[1]। उपायजातं परिशीलयन् स्पन्दसूत्रकृदप्याह—

प्रबुद्धः सर्वदा तिष्ठेज्ज्ञानेनालोक्य गोचरम्।
एकत्रारोपयेत् सर्वं ततोऽन्येन न पीड्यते[2] ॥

अत्रापि वचनभङ्ग्या अनुप्रवेशयुक्तिवैचित्र्यं निखिलमप्यासूत्रितम्। ईदृगाम्नायलब्धप्रेरणः श्रीक्षेमराजोऽपि—'विकल्पक्षय-शक्तिसंकोचविकास-वाहच्छेदाद्यन्तकोटिनिभालनादय इहोपायाः'[3] इत्यभिदधौ। तेन तत्रैवैतदप्यभिहितम्—'प्रागुपदिष्टपञ्चविधकृत्यकारित्वाद्यनुसरणेन सर्वमध्यभूतायाः संविदो विकासो जायत इत्यभिहितप्रायम्[4]।' अखिलैषा उपायराजिरात्मस्वरूपस्यार्थस्य अहन्तेदन्तारूपपार्श्वद्वयस्यान्तर्बहिरवभासनेन न व्यतिरिक्ता विभाव्यते, अपि त्वेतदन्तर्भावेणैवोपलभ्यते[5]। तयोश्च पार्श्वयोः स्थूलदृष्ट्योपकल्पितो भेदविक्षोभस्तत्त्वपर्यालोचनायां न निर्वोढुं शक्यते। अतः सर्वो ह्युपायप्रपञ्चोऽहंज्ञानोन्मेष एव पर्यवस्यति। 'सर्वो ममायं विभवः…'[6], 'यो विकल्पमिदमर्थमण्डलम्…'[7] इति श्रीप्रत्यभिज्ञास्तोत्रावलीयुक्त्यैतदेवालोचितम्।

औपयिकं ज्ञानं मोक्षनिमित्तं बन्धमूलमज्ञानमपहन्तुमुद्यते। अज्ञानं द्विधा मतम्—बौद्धं पौंस्नं च। बौद्धस्य अनिश्चयस्वभावता विपरीतनिश्चयात्मकता च। पौंस्नं तु विकल्पात्म संकुचितप्रथारूपञ्च सत् संसारप्रथाहेतुः। दीक्षाद्युपायावष्टम्भः पौंस्नाज्ञाननिवर्तने प्रभवति, किन्तु तादृगवष्टम्भोऽप्यनध्यवसायस्वभावबौद्धज्ञानापहतिं विना न सम्भवति। अत एव हेयोपादेयाध्यवसायव्यतिरेकिणी तत्त्वशुद्धियोजनात्मिका

---

१. द्रष्ट० वि० भ० वि०, पृ० १७–२०।

२. वसुगुप्तः, स्पन्दकारिका ३,१२ (क्षेमराजकृतनिर्णयसमेता)।

३. प्र० हृ०, सू० १२, द्रष्ट० भूमिका, पृ० १८–१९।

४. तत्रैव, पृ० ८२।

५. द्रष्ट० म० मं० प०, पृ० १६०।

६. ई० प्र० का० ४.१.१२।

७. उत्पलदेवः, शिवस्तोत्रावली १३.१६ (संपा० श्रीराजानकलक्ष्मणः, वाराणसी)।

दीक्षा न कुत्राप्युपदिश्यते[1]। अस्माद् बौद्धज्ञानस्य प्राधान्यं निगमितं भवति, यतोऽभ्यासप्रथारूढं तदेव हि विकल्पस्वभावं प्रथनसङ्कोचमयं पौरुषमप्यज्ञानमपाकरोति। "विकल्पसंविदभ्यासस्य अविकल्पान्ततापर्यवसानात्। विकल्पासङ्कुचितसंवित्प्रकाशरूपो ह्यात्मा शिवस्वभाव इति सर्वथा समस्तवस्तुनिष्ठं सम्यङ्निश्चयात्मकं ज्ञानमुपादेयम्"[2]। एवञ्च शक्तिस्वभावो ज्ञानरूपश्च य उपायः, स आणव-मायीय-कार्ममलभेदेन भिद्यमानः शाम्भव-शाक्ताणवाख्यया व्यपदेशं लभते। तर्ह्युपायत्रयाणां साङ्कर्येणोपायोपदेशः कथं न क्रियते ? सत्यम्, उपायत्रयस्य परस्परं सङ्करः सूक्ष्मेक्षिकया निह्नोतुं न क्षमः, किन्तु प्राधान्यकृतमात्रमेव पृथग् व्यपदेशौचित्यम्। उक्तञ्च—

सा शक्तिराणवैः शाक्तैः शाम्भवैश्च त्रिधोदितैः।
उपायैः शिवमाभास्य स्वसृष्टैर्मोचयत्यमून्[3]॥

श्रीमहेश्वरानन्दादिभिश्च समर्थितमपि—"तेषु च शाक्तशाम्भवत्वादिकं तत्तत्प्रकरणादिना अवगन्तव्यम्"[4]। "यावदाणवशाक्तशाम्भवाख्यप्रकारतयानुविष्टास्तद्देशकालस्वभावानुगुण्याद्यन्तमौचित्यशालिनः सर्वेऽपि तत्प्रकाराः परामृश्यन्ते"[5]।

ननु "संवित्तिफलभेदोऽत्र न प्रकल्प्यं मनीषिभिः"[6] इति श्रीपूर्वशास्त्रकथनं व्याहन्यते, यत उपायभेदादुपेयभेदोऽपि समापतति। संविदेवात्र उपेयतया अभ्युपेयते। इमां विप्रतिपत्तिमाशंसमान आचार्यश्रीवामनदत्तः स्वकीये संवित्प्रकाशे तां निराकरोत्। उपायमात्रविषयमेव संवित्स्वातन्त्र्योल्लसितं वैचित्र्यम्, न तूपेयविषयम्[7]। संवि-

---

१. दीक्षादेर्मुक्त्युपायत्वमाणवाद्युपायान्तर्भावनेन संगच्छते। द्रष्ट० तं० १.२३; त० वि० १, पृ० २४६ दीक्षादिवैचित्र्यस्यैकत्र प्रतिपादनाय, द्रष्ट० म० मं० प०, पृ० ४५,१७६। अपि च० द्रष्ट० म० म० श्रीगोपीनाथकविराजः, (हाराणचन्द्रभट्टाचार्यकृतकालसिद्धान्तदर्शिन्या भूमिका, कलकत्ता) पृ० ६।

२. तं० सा०, पृ० ४।

३. म० मं० पं०, पृ० १४७ (उद्धृतम्)।

४. तत्रैव, पृ० १५२।

५. तत्रैव, पृ० १६८।

६. मालिनीविजयोत्तरतन्त्रम्, २.२५।

७. द्रष्ट० तं० ५ १५५।

चैतन्यरूपमात्मप्रथनमेव मोक्षः, स सर्वैरुपायैर्द्वारद्वारिभावेन प्रथते। इतरथा हि उपायोपेयभावः काल्पनिकस्तत्र ज्ञानात्मा एक एवोपायः प्रगल्भते, तत्फलभूते मोक्षेऽपि न भेदः स्यात्। अत एतदुक्तं भवति—यज्ज्ञानात्मनोपायस्य इच्छाज्ञानक्रिया-शक्तिद्वारेण त्रैविध्येऽप्युपेयायामात्मसंविदि न कश्चिद् भेदः[1]।

सम्प्रदाये उपायशब्दः समावेशव्यपदेशभाग् भवन्नसकृद् दृश्यते। किमुपायसमा-वेशौ परस्परं पर्यायौ ? नैतत्, किन्तु समावेशशब्द उपाये लाक्षणिकः। अतः खलु समावेशो नात्मनि भिन्नोऽभिन्नो वा, उपायभेदादेव त्रैविध्यमुपयाति।[2] स्वरूपसमा-सादनमेव समावेश इति परिभाष्यते। तथा चोक्तम्—

आवेशश्चास्वतन्त्रस्य स्वतद्रूपनिमज्जनात्।
परतद्रूपता शम्भोराद्याच्छक्त्यविभागिनः ॥[3]

अपि च प्रत्यभिज्ञायामपि—

मुख्यत्वं कर्तृतायाश्च बोधस्य च चिदात्मनः।
शून्यादौ तद्गुणे ज्ञानं तत्समावेशलक्षणम् ॥[4]

कर्तृताया मुख्यत्वेन अविनाभूत एवाचिद्रूपस्य गुणीभावः, स च 'स्वातन्त्र्यस्य अबोधता' इति यो मलव्यापारस्तस्योन्मूलनाच्चिदात्मनो बोधस्य चिद्रूपतायां पुनरापन्नाया-मेव सम्भवति। स एष स्वात्मनि सम्यक्प्रवेशलक्षणं ज्ञानं समावेशः, यल्लाभेन ज्ञानी, यदभ्यासेन योगीति संपद्यते।[5] तस्माद् अकृत्रिमस्तन्मयीभावो नाम समावेशः।[6]

---

१. द्रष्ट० तं० वि० १, पृ. १८८,१९३,२००–२०३।
२. द्रष्ट० मा. वि. वा. १.९९६; तं. सा., पृ. ७।
३. तं. १.१७३।
४. ई. प्र. का. ३.२.१२।
५. द्रष्ट० अभिनवगुप्तः, ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, भागः ३, पृ. ३२७। तुल०
तदा द्रष्टुः स्वरूपेऽवस्थानम्। योगसूत्रम् १.३
स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये। व्युत्थानचित्ते तु सति तथापि भवन्ति, न तथा। व्यासभाष्यम् १.३; पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति। यो. सू. ४.३४
६. द्रष्ट० अभिनवगुप्तः, गीतार्थसंग्रहः, पृ. १३१ (संपा. राजानकलक्ष्मणः, श्रीनगरम्); तथा च, रामकण्ठः, सर्वतोभद्रम् (संपा. टी. आर. चिन्तामणिः, मद्राससंस्करणम्), पृ. ३२५,३२९,३४१

तथा चैष एवोत्तमो योगोऽकृत्रिमत्वात्। शास्त्रे जीवन्मुक्तावस्था द्विधा आम्नाता— देहाद्यभिमानस्पर्शरूषिता शुद्धविकल्पमयी तुर्यावस्था, तदभिमानस्पर्शरहिता निर्विकल्पकल्पा तुर्यातीतावस्था। सेयं द्वय्यपि समावेशतया आम्नाता। अयमेव चिदानन्दलाभः, स एव च परमयोगिनः समावेशसमापत्त्यादिपर्यायः समाधिः[1]। सोऽयम् "स्वविकल्पानुसन्धानपूर्वकमविकल्पान्तमभेदविमर्शान्तःक्रोडीकारेण......अशेषवेद्यैकीकारेणोन्मिषत्तावद्वेद्यग्रासीकारिमहाप्रमातृतासमावेशचमत्काररूपं फलम्" इति श्रीमत्क्षेमराजेन शब्दितः[2]। एतस्य समावेशस्य लाभायोपदिश्यमानं सर्वं ज्ञानं तत्तत्कक्ष्याग्रहेण तत्तदुपायतया तत्तदुपायजन्यतन्मयीभवनक्रमबोधकतत्तत्समावेशतया वा आख्यायते। समावेशपल्लवं हि सर्वम्।

वस्तुतः साम्प्रदायिकीयं वाचोयुक्तिः। अत्र मुक्तिप्रक्रिया सृष्टिप्रक्रियाया विलोमतामनुधावति। सृष्टिराभासश्चात्र परासंविद आनन्देच्छाज्ञानक्रियापरया आनुपूर्व्या वहिरुन्मज्जनम्, तथैव स्वरूपलाभे प्रतिलोमन्यायेन इदन्तया आश्यानीभूतायाः संविदः क्रियाज्ञानेच्छानन्दक्रमेण स्वरूपे पुनरभिनिवेशः समावेशस्तत्तन्नामभिः परिगीयते[3]। युक्त्यानया शाम्भवः समावेशः उपायो वा पारमेश्वर्या इच्छाशक्त्या, शाक्तसमावेशः शाक्तोपायो वा ज्ञानशक्त्या, आणवसमावेश आणवोपायो वा क्रियाशक्त्या संबन्धं बिभर्ति।

शम्भुः शक्तिरणुश्च क्रमेण तेषामुद्गमभूमिः। ईदृक्संबन्ध एवामीषामेवं नामकरणनिमित्तम्। उच्यते च—

विभुशक्त्यणुसंबन्धात् समावेशस्त्रिधा मतः।
इच्छाज्ञानक्रियायोगाद् उत्तरोत्तरसंभृतः॥[4]

उपायानां नरशक्तिशिवात्मताकथनमिदमेवोद्दिशति।

---

१. द्रष्ट०, ई. प्र. का. ४.१.१५; ई. प्र. वि. वि. ३, पृ. ३६२; ई. प्र. वि. ३.२.१२; प्र. हृ., पृ. ९०–९१।

२. क्षेमराजः, स्पन्दनिर्णयः, पृ. ६४; स एव, शिवस्तोत्रावलीविवृतिः, पृ. ११८।

३. विवृतं खल्वेतदस्मद्गुरुवर्यैः डा. कान्तिचन्द्रपाण्डेयमहोदयैः स्वीये अभिनवगुप्ताभिधे ग्रन्थे, अतो न विस्तारयामः। द्रष्टव्यम्, अभिनव०, पृ. ३१२–३१३।

४. तं. वि., १, पृ. २४४ (उद्धृतम्); द्रष्ट० तं. १.२४३; तं. वि., १, पृ. २०६।

न केवलं समावेशस्त्रिविधः; अपि तु बहुधा प्रकारायमाणस्यास्योपभेदगतया पञ्चाशद्विधतापि निरूपिता, आम्नायिकत्वात्[1] । मूलतस्तु रुद्रशक्तिसमावेशो भूत-तत्त्व-आत्म-मन्त्र-शक्तिभेदात् पञ्चधा । तत्रापि भूतसमावेशः पञ्चधा, तत्त्वसमावेशः त्रिंशद्धा, आत्मसमावेशस्त्रिविधः, मन्त्रेशसमावेशो दशधा, शक्तिसमावेशश्च द्विविधः । तत्त्वानां मध्ये पुमान्, विद्या, शक्तिश्च क्रमश आत्ममन्त्रेशशक्तिसमावेशवैविध्येन प्रथन्ते[2] । अस्मिन् उपायत्रये पञ्चाशद्भेदात्मता सर्वत्र गाढमनुस्यूता । यथाम्नातमेव—

पञ्चाशद्भेदभिन्नोऽयं समावेशः प्रकीर्तितः ।
आणवोऽयं समाख्यातः शाक्तोऽप्येवंविधः स्मृतः ॥[3]

जाग्रत्स्वप्नादिभेदेनापि सर्वावेशक्रमो बुधैः स्वव्यापारमाश्रित्य पृथक् पृथक् परिकल्पितः; किन्तु नास्त्यत्रावसरस्तद्विवेचनाय, 'अल्पानुषङ्गित्वात्तस्य ।'[4]

ननु कथमत्र पुंविद्याशक्तिसंज्ञकतत्त्वत्रयानुकारी समावेशविभागो निर्दिष्टः । उच्यते, विभागोऽयं व्याप्यं विहाय व्यापकतत्त्वानुजीवी । मायान्तमात्मतत्त्वं गच्छति, सदाशिवान्तं विद्यातत्त्वस्य व्याप्तिः, शिवान्तञ्च शक्तितत्त्वमुज्जृम्भते । इमान्येव क्रमश आणवशाक्तशाम्भवापरपर्यायानुपायसरणितया पर्यवस्यन्ति । तानि न तत्त्वान्तरेभ्य एव भिन्नानि, प्रत्युत परस्परमपि भेदमनुसन्दधति । अणुरशुद्धः,

---

१. मा. वि. तं. २.१७–१९ ।

२. द्रष्ट. तं., १.१८६–८७, तं. वि.,.१, पृ. २१५–१६ । अत्र आत्मसमावेशे सकल-प्रलयाकल-विज्ञानाकल-शुद्धा इति चत्वारः प्रमातृसमावेशाः समाख्याताः, तथैव शक्तिसमावेशेऽपि इच्छाज्ञानक्रियाद्वारेण समावेशत्रयमुत्थाप्यते । मन्त्रेशान्तर्गते समावेशे वर्ण-बिन्दु-अर्धचन्द्र-निरोधिनी-नाद-नादान्त-शक्ति-व्यापिनी-समना-उन्मना-नामभिरावेशस्य दशधात्वं प्रपञ्चितम् । किन्तु एतच्च सुष्ठु स्पष्टितं श्रीजयरथेन स्वकीये विवेके–"एकोऽपि पुंस्तत्त्वरूप आत्ममध्येऽवस्थाप्यः, अन्यथा हि तात्त्व आवेशस्त्रिंशद्धा न स्यात् । विद्यायाश्च समनन्तरोक्तेन सामान्यात्मना मान्त्रेण रूपेण दशधा आवेशः । विशिष्टेन तु मन्त्र-मन्त्रेश-मन्त्रमहेशात्मना रूपेण अस्यास्तत्त्वमध्ये परिगणनम् । एवं शक्तेरप्येकं भेदं तत्त्वमध्ये व्यवस्थाप्य तदीय आवेशो द्विधा । शिवस्तु समावेश्य एवेति न तत्रावेशोऽस्ति, तस्य परमाद्वयस्वभावत्वात्"...... । तं. वि. १, पृ. २२० ।

३. मा. वि. तं. २.२० ।

४. तत्रैव, २.२६ ।

भेदवासनोपश्लिष्टत्वात्। विद्या शुद्ध्यमाना, भेदाभेदास्पदाधिष्ठानत्वात्। शक्तिः शुद्धा, अभेदस्फुरत्ताचमत्कारसारत्वात्।[1]

नन्वागमेष्वनेकत्रोपायजातनिरूपणे दृष्टक्रमापेक्षया क्रमव्यत्यासोऽपि दृश्यते, यदा उपायविधिः[2]ध्यानोच्चारकरणादिक्रमं परित्यज्य उच्चारकरणध्यानेनेति प्रदर्श्यते। तर्हि कः क्रम आश्रयणीयः, ध्यानोच्चारकरणादिक्रमरूप उच्चारकरणध्यानादिरूपो वा ? पाठक्रममपहाय अर्थक्रमेण प्रथमक्रमावलम्बनमेवात्र वरम्, यत आम्नायदृशा यो हि यस्माद् गुणोत्कृष्टः स तस्मादूर्ध्वमिष्यते[3]। अतः शाम्भवशाक्ताणवेषु पूर्वः पूर्वं उत्तरोत्तरमनुप्राणयति। भङ्गिभेदेन आणवशाक्तशाम्भवेषु पूर्वपूर्वस्योत्तरोत्तरत्रोपायकत्वं प्रतिपादितमन्यत्र। किमयमेव क्रम उपेयप्राप्तिकारक इति शङ्कायाः अवकाशलेशोऽपि न, यतो मन्दबुद्धिः पामरो जनोऽनेनैव क्रमेण आत्मसंविद्रूपमुपेयमुपलभते। किन्तु तीव्रशक्तिपातपवित्रितस्य योगिनः कृते न किमपि नैयत्यम्, स तु क्रममिमं तिरस्कृत्य उपेयं प्रत्युद्गन्तुं सुक्षमः। निगमयितुं शक्यते यत् शक्तिपातोपाययोरस्ति किञ्चिदन्तरङ्गत्वम्, यदग्रे स्फुटीभविष्यति।

नन्वाणवस्य शाक्तक्रमेण शाम्भवे विश्रान्तिः; अत एतत्त्रयविरहित आनन्दशक्त्युन्मेषात्मा परमज्ञानरूपः कोऽयमनुपायो नाम चतुर्थोपायः ? उच्यते, यद्यपि इच्छादीनां स्वस्वकार्यनिवृत्तानामेषणीयादिविषयसंभावनागर्भिणी बाह्योन्मुखताऽप्यत्र नास्ति, आनन्दशक्तेश्चित्स्वरूपत्वे उपायकल्पनापि दुरारोहा; तथापि उपायोपेयभावानुरोधेन अनुपायोऽप्युपायकक्ष्यां प्रविशत्येव। [4]उद्घोषितं चेदमेवाभिनवगुप्तपादैः—

> अनुपायेऽपि चैतस्मिन् किञ्चित्सांबन्ध्यवृत्तितः।
> उपायस्योपदेशोऽयं शास्त्रेऽत्र बहुधा कृतः॥[5]

---

१. तं. १. १८८

२. अकिञ्चिच्चिन्तनरूपः शाम्भवः, भावनामयः शाक्तोऽपि ध्यानेऽन्तर्भवति सूक्ष्मेक्षिकया। द्रष्ट. तं. ५.१५५–५७।

३. मा. वि. तं. २–१०; वरदराजः, शिवसूत्रवार्त्तिकम्, ३ ६४–६५; मा. वि. वा. १.९९६–९७।

४. द्रष्ट. तं. १.२४२।

५. मा. वि. वा. २.१२१।

अथोपायानां परस्परानुवेधवैचित्र्यमनुसन्धीयते। यथोक्तमेव पुरा यत् शाम्भवस्योपायः शाक्तः, तस्याप्याणवः, तत्र शाम्भवानुपाययोर्न कश्चिद् भेदः। केवलं पराकाष्ठां प्राप्तः शाम्भव एवानुपाय इत्युदीर्यते, यः पुनः महार्थस्य परा निष्ठेति गीयते। [1]अतो न तस्य पृथगुल्लेखः। भङ्ग्यन्तरेण विकल्पस्य निर्विकल्पताप्राप्तिरेव उपायसारः सकलः। [2]आत्मप्रथनं ह्यविकल्पवृत्त्या स्वात्मसाक्षात्करणम्, तच्च साक्षादुपायेन शाम्भवेन सम्भवति। शुद्धविकल्पात्मकः शाक्तोपायस्तमेवोपस्करोति, स च विकल्पैकशरीरेण आणवेन उपस्क्रियते। इयमेव हि औपायिकी तारतम्यप्रथा। सर्वेऽपि उपाया आत्मीयस्वभावमूलभूतसाम्येनान्योन्यं कथमनुबध्नन्ति, तद्द्रष्टुं सम्प्रत्यास्माकीनः यत्नः।

तारतम्ययोगेन शक्त्युल्लेखः, ज्ञानात्मता, तारतम्येन विकल्पपर्वानुशीलनम्, क्रमेण तदुल्लङ्घनेन चाखण्डवस्त्ववभासः, मध्यत्रुटित्रोटनम्, मध्यविकासः, मध्यविकासे शक्तिसंकोचशक्तिविकासोपायश्चैभिः[3] प्रकारैः सर्वेषामप्युपायानां स्वरूपसाम्यं प्रथते। तत्र प्राणस्पन्दोच्चारणाद्यशुद्धविकल्प आणवः।[4] चित्तमात्रनिर्वर्त्यशुद्धविकल्पात्मा शाक्तः। विकल्पसर्वविलयस्वभावः शाम्भवः। अत्र हि स्थूलसूक्ष्मादितारतम्ययोगेन शक्त्युल्लेखस्य सर्वत्राप्यनुस्यूतिः। शाक्ते तु तस्यौल्बण्यमात्रादुत्कर्षे

---

१. महानयप्रकाशः (कृतिस्वमज्ञातम्, त्रिवेन्द्रं संस्करणम्), १.१२ "महार्थस्य परा निष्ठा गलितस्वपरस्थितेः।"

२. विकल्पोपारोहेण निर्विकल्प एव विश्रान्तिः। शिवाद्वयनयस्य दृष्टिरियं वैभाषिकमतप्रभावगर्भा। तेऽपि विकल्पापेक्षया निर्विकल्पप्रामाण्यमभ्युपगच्छन्ति। अभिनवगुप्तपादा एवात्र प्रमाणम्,

> विकल्पापेक्षया योऽपि प्रामाण्यं प्राह तन्मते।
> तद्विकल्पक्रमोपात्तनिर्विकल्पप्रमाणता ॥
>
> [तं. १.२२८]

३. शक्तिसङ्कोचविकासोपायो न केवलं शाक्तोपायान्तर्भूतः। यथा प्रतिपादितं क्वचित् (द्रष्ट., प्र. हृ. भूमिका, पृ. १९), अपि तु सकलोपायपरः। केवलमुपायभेदेन तस्य तत्र तत्र प्रक्रियाभेदः।

४. तत्र प्राणव्यापाररूप उच्चारः, कायसंस्थानात्मकं करणम्, चित्तोल्लेखस्वभावं ध्यानम्, मूलाधाराद्यनुसन्धानाकारं स्थानकल्पनम्। म. मं. प., पृ. १४४।

इत्यनुसन्धेयम्। ज्ञानसत्ताया एव भेदभेदाभेदाभेदतया क्रमश उपायरूपेण स्फुरणाद् ज्ञानात्मत्वेऽप्युपायेषु मध्ये आणवस्य विकल्पैककक्ष्यारूढिः, शाक्ते विकल्पस्य स्फुरत्तामात्रम्, शाम्भवेऽकिञ्चित्करस्य विकल्पस्य निर्विकल्पत्वासादनमिति सर्वेषामेव विकल्पकक्षानुप्रवेशः। [1]प्रकाशस्फुरत्तैकस्वभावं क्रमाक्रमातीतं परमात्मरूपं वस्त्वाणवशाक्तयोः क्रमेण शाम्भवेऽक्रमेण योगिनः साक्षात्कारानुभवमयीषु भूमिकासु उद्भासते। आणवे प्रमेयप्रमाणरूपवर्णविशेषयोर्मध्यस्था त्रुटिर्विभज्यावस्थानलक्षणलक्षणः कालखण्डः, यन्मात्रमुखत्वान्मध्यदशाविर्भाव उद्वर्तव्यः। शाक्ते तु प्रमाणप्रमेययोर्मध्यभूतस्य प्रमात्रात्मनः स्वात्मानं प्रति संदेहलक्षणस्त्रुटिः संछेद्यः। शाम्भवे प्राणापानयोर्युगपद् बाह्यान्तर्भावोपलभ्यमानस्त्रुटिः परामर्शक्रियात्मा चमत्कारलक्षणो हृदयङ्गमीकरणीयः। [2]एवमेव आणवे 'मध्यम्' ब्रह्मनाडी, शाक्ते भगवती संवित्, शाम्भवे त्वकृत्रिमाहमित्येतद्रूपैः प्रथते। मध्यविकासाच्चिदानन्दलाभपर्याया समावेशमयी जीवन्मुक्तिरास्वाद्यते। [3]मध्यविकासोपकरणभूतः शक्तिसङ्कोचशक्तिविकासोपाय आम्नायिक आणवे शाक्तक्षोभाभिधानम्[4], शाक्ते कुलावेशव्यपदेशम्, शाम्भवे क्षोभप्रलयसंज्ञां च लभमानस्तत्र तत्र शक्तेः सङ्कोचविकासप्रक्रियाया वैविध्यं पुष्णाति। अन्यच्चापि साम्यं यत् प्रक्रियादशा योगिनः सर्वत्र तावदुपायमार्गे समस्तेतरवृत्तिप्रशमपूर्वमेकाग्रीभवन्ति। [5]इतरवृत्तिसामस्त्यप्रशमस्य प्रयोजनमपि निरूप्यते—"न चैवं वक्तव्यम्—विश्वात्मसात्काररूपा समावेशभूः कादाचित्की।...एषा तु सदैव प्रकाशमाना, अन्यथा तद्देहाद्यपि न प्रकाशेत। अत एव हि देहादिप्रमातृताभिमाननिमज्जनाय अभ्यासः, न तु सदा प्रथमानतासारप्रमातृताप्राप्त्यर्थम्" इति श्रीप्रत्यभिज्ञाकाराः[6]।

---

१. द्रष्ट. तत्रैव, पृ० १४७, १६८; तं. वि. १, पृ० १८७।

२. म. मं. प, पृ. १४५–४६; वि. भै. वि, पृ० १८–१९, २४–२५, १३७; तं. वि., ४, पृ० ९६।

३. प्र. हृ., पृ. ८१–८२; (भूमिका, पृ. १९)

४. वि. भै. ६८–६६; वि भै. वि., पृ. ५७, म. मं. प. १५२–१५३; त. ५. ७१; तं. वि. ४, पृ. ३७५–७७।

५. स्प. नि., पृ. ३२।

६. प्र. हृ, पृ. ७८–७९ (उद्धृतम्)। अंशश्चायं प्रकाशितायामुत्पलकृतप्रत्यभिज्ञावृत्तौ नोपलभ्यते।

अस्मिन्नुपायसाकल्ये शाम्भव उपाय एव साक्षादुपायत्वेन परमामुत्कर्षकोटि-मध्यास्ते। अस्मादस्य 'पार्यन्तिक' इत्यप्याख्या। 'विकल्पहानेनैकाग्रयात् क्रमेणेश्वरता-पदम्'[1] इति विकल्पनिर्ह्रासरूपः खल्वयमुपायः 'विकल्पक्षयं' इति संज्ञाय-मानो मूर्धन्यत्वेन गृहीतः श्रीक्षेमराजादिभिः।[2] किन्तु अस्यैतदुत्कर्षेणोपायत्रयस्य प्रातिस्विकं माहात्म्यमुपादेयत्वञ्च न किञ्चिदपि व्याहन्यते। प्रत्येकं स्वस्यां भूमिकायां सुप्रतिष्ठितम्। एषु शाम्भवोपायः शाक्तोपायश्च क्रमेण कुलक्रमदर्शनव्यप-देशमपि भजतः।

अथ पारमेश्वरशक्तिरूपस्य विसर्गस्य त्रैविध्यमुपदिशद्भिस्तन्त्रालोककृद्भिरर्थ-पर्यालोचनया विसर्गसमावेशयोरेकीभावः प्रतिपादितः। तत्राणवश्चित्तविश्रान्तिरूपः, शाक्तः चित्तसंबोधलक्षणः, शाम्भवः चित्तप्रलयरूप इत्युक्तः[3]। चितिचेत्ययोः सङ्घट्टरूपं संकुचितं ज्ञानमेव चित्तं तस्य विश्रान्तिर्भेदौन्मुख्ये परा काष्ठा तत्संज्ञोऽयं भेदप्रथानु-प्राणनतयाप्यणवोऽणुसंबन्धी हकारात्मा स्थूलो विसर्गः सकलात्मा ग्राह्यग्राहकभेदात्मा च। चित्तस्य संकुचितात्मनो ज्ञानस्य स्वात्मसंविद्विश्रान्तेः सम्यक्संबोधस्तदभिधानोऽयं निष्कलात्मा ग्राह्यग्राहकविच्छित्तिसंपूर्णग्रहणात्मकः सूक्ष्मो विसर्जनीयात्मा भेदाभेद-प्रधानः शाक्तो विसर्ग उक्तः। ततश्चित्तस्य प्रकर्षेण लयः संकुचितापासनेन पूर्णता-वलम्बनेन च स्वात्मसंविन्मात्रतया परिस्फुरणम्। तन्नामायमभेदप्रधान आनन्दात्मा एकीभावात्मकः, सूक्ष्मो विज्ञानात्मात्मनिर्वृतः परः शैवो विसर्गः।[4] तदेवं पारमेश्वर्या

१. ई० प्र० का. ४. १. ११।

२. "अयं च (विकल्पक्षयः) उपायो मूर्धन्यत्वात् प्रत्यभिज्ञायां प्रतिपादितत्वादादावुक्तः। शक्तिसंकोचादयस्तु यद्यपि प्रत्यभिज्ञायां न प्रतिपादिताः, तथाप्याम्नायिकत्वादस्माभिः प्रसङ्गात् प्रदर्श्यन्ते, बहुषु हि प्रदर्शितेषु कश्चित् केनचित्प्रवेक्ष्यति" (प्र० हृ०, पृ० ८४) इति। किन्त्वेतदत्रावगन्तव्यं यन्न केवलं शाम्भवोपायः, अपि तु शुद्धविकल्पात्मा शाक्तो-पायोऽपि प्रत्यभिज्ञाकृता "सर्वो ममायं विभवः" (४ : १. १२) इति समारम्भेण नितरां संदृब्धः।

३. तं० सा०, पृ० १७।

४. पूर्वं विसृज्य सकलं कर्तव्यं शून्यतानले।
चित्तविश्रान्तिसंज्ञोऽयमाणवः संप्रकीर्तितः॥
तं. ३.२११

विसर्गशक्तेरेवायं स्फारो यद्विसर्गत्रैविध्येन नरशक्तिशिवयोगतस्तथा तथा प्रथते। सर्वत्रैवेह विसर्गशक्त्युल्लेखोऽन्तरन्वीयमानो वर्तते।

ननु संविदोऽभेदरूपत्वात् कथं भेदपरिकल्पना ? स्वात्मतालाभे आणवमलस्य क्रमिकपरिक्षयकृतेन तारतम्येनेदृशी भेदकल्पना औचित्यपदवीमारोहति।[१] सर्वमपि खलु उपायजातं सततपञ्चकृत्यशालिनः प्रभोरनुग्रहविलासः, स त्वनुग्राह्यानुसारेणैव पर-परापर-अपरतया शाम्भवशाक्ताणवादिभेदेन विलसति[२]। अतिमात्र-मध्य-मृदुसंज्ञस्य[३] तीव्र-मध्य-मन्दस्य उत्कृष्ट-मध्य-निकृष्टभेदात् शक्तिपातस्य नवधात्वम्। निखिलमपि शक्तिपातगतनवधात्वं परापरकोटिद्वितयमेवावलम्बते। तत्र परमः शक्तिपातोऽनवच्छिन्नसंविदेकस्वभावः फलापेक्षाविरहितो झटित्येव स्वात्मीभावमापादयति। अपरस्तु फलापेक्षासंभिन्नः प्रकाशस्वरूपेऽपि भोगांशावच्छिन्नः क्रमेण पर्यन्ते स्वात्मतापादकः। प्रथमकोटिपतिताः परमशक्तिपातभाज एव वस्तुस्थित्या मुमुक्षवः।[४]तानेवाभिप्रेत्य उपायसार्थः प्रवर्तते। परमश्चायमुपायोऽनुपायकाष्ठां गतः शाक्तोपाय आणव-

---

दृष्टश्रुतादितद्वस्तुप्रोन्मुखत्वं स्वसंविदि।
चित्तसंबोधनायोक्तः शाक्तोल्लासभरात्मकः॥

३.२१२

प्राग्वद्वविष्यदौन्मुख्यसम्भाव्यमिततालयात्।
चित्तप्रलयनामासौ विसर्गः शाम्भवः परः॥

३.२१४; द्र० तं. ३.२१७–२१९, तं० वि०,
२, पृ० २०१–२०६; तं० ३,१४१,१४४।

१. संविद्रूपेन भेदोऽस्ति वास्तवो यद्यपि ध्रुवे।
तथाप्यावृत्तिनिर्ह्रासतारतम्यात् स लक्ष्यते॥

तं० १.१३८

२. तत्रैव, २.४४–४५।

३. अतिमात्रमध्यमृदुताभेदेनापि प्रवर्तमानस्य।
सूक्ष्मेक्षिकाप्रकारो विलसति तस्यातिशक्तिपातस्य॥

म० प्र०१.८; द्र० तं० सा०, पृ० ११९–२०।

४. तं० १३.२९५–२६; १३.११८; तं० वि० २, पृ० २५९–२६२; ८, पृ० ७९।

मलस्य तीव्रनिर्ह्रासरीत्या तीव्रतीव्रशक्तिपातभाजां प्रथते।[1] एतान् निर्मलसंविदः प्रति निरुपकरणमेवास्यानुग्राहित्वम्। अनिर्मलसंविदः प्रति पुनरस्य सोऽपकरणमेवानुग्रहशालित्वम्।[2] अत्र आणवादय आणवनिर्ह्रासमान्द्येन भेदप्रथानुप्रवेशाद् मन्दमन्दादिशक्तिपातभाजां प्रथन्ते। कोटयोरनयोर्मध्ये परापरतया शाक्तोपायः प्रवर्तते। स्पन्दनिर्णये योगि-मितयोगितया, महानयप्रकाशे सुप्रबुद्ध-प्रबुद्धतया कोटिद्वयमिदमुक्तम्। सुप्रबुद्धः सर्वावरणनिर्मुक्तः स्वस्वरूपस्य स्थितये किञ्चिदपि नापेक्षते। निर्वैकल्पिकी भूरियम्। अस्य सुप्रबुद्धस्य तु तीव्रशक्तिपातभाजो विकल्पवासनाशून्यस्वात्मसंविदो ज्ञानं साधनमनपेक्ष्य प्रथते।[3] प्रबुद्धस्य तु स्वस्वरूपलाभाय सङ्केतादिकथामात्रं चक्रप्रपूजनञ्च प्रथते। तत्रापि द्विविधः प्रकारः—आदिकोटिपतितस्य सङ्केतादिकथाश्रयाद् विकल्पातिमान्द्याद् उद्रिक्तनिर्विकल्पांशं ज्ञानं प्रगल्भते, द्वितीयकोटिगतस्य तु पूजनादिक्रमापेक्षं विकल्पसामनन्तर्यान्निर्विकल्पं ज्ञानं प्रवर्तते। आदिकोटौ महातीव्रतमस्य, द्वितीयायां तु महातीव्रस्य शक्तिपातस्य प्रकाशनं भवति। गुरुशासनादुभयत्र प्रवृत्तिः[4]। एतदुक्तं भवति—यत् तीव्रस्य उत्कर्ष-मध्यता-निकर्षभेदानामेवात्र अतितीव्र-महातीव्रतम-महातीव्रेतिशब्दैर्नैकट्यं समाश्रियते। कोटिद्वयञ्च शाक्तोपायवर्त्मना शाम्भवे विश्राम्यति। उक्तञ्च—

पौर्वापर्यपरिक्षीणा ये महार्थार्थिनः किल।
अस्ति नान्या गतिस्तेषां विकल्पग्राससाहसात्[5]॥

---

१. अतितीव्रशक्तिपाताद्वारूढे शाम्भवे समावेशे।
स्वानन्दामृतरूपं जीवन्मुक्तेः प्रकल्पते विश्वम्॥

म० प्र० १.७

युक्तिचर्यादिनिक्षेपवासनाक्षोभवर्जितः।
अनुपायक्रमः सोऽयं यस्य रूढः स योगिराट्॥

म० प्र० १.१३

२. तं० २.४३–४५।

३. म० प्र० १.३३,१.१९,१.२४।

४. म० प्र० १.२०–२३।

५. तत्रैव, १.३२।

यस्त्वप्रबुद्धः सोऽपि न शासनबहिष्कृतः; अपि तु शक्तिपातक्रमेण परधारा-समारूढं माहैश्वर्यं पर्यन्ततो विन्दत्येव।[1] अत्रैव आणवाद्युपायाः सर्वे व्याप्रियन्ते। मलापहस्तनेन अनुग्रहावाप्तिरूपः स्वरूपानुप्रवेशश्च अत्रैवोपायानामाग्रहत्वात्। महा-महोपाध्याय-श्रीगोपीनाथकविराजमहोदयैरपि "परमपथ का क्रम" शीर्षके स्वनिबन्धे उपायगताधिकारिणां विषये बहु चर्चितम्। तत्र हि उत्कृष्टतमाधिकारसंपन्नाधि-कारिणोऽनुपायकक्ष्यामधिशेरते। 'संसारोऽस्ति न तत्त्वतः तनुभृतां बन्धस्य वार्तैव का' इत्याद्युक्तयस्तदभिप्रायेण प्रवर्तन्ते। एतस्मादत्यन्ताल्पमात्रन्यूनकक्ष्यावस्थिता उच्चाधिकारिणो विकल्पस्य शमितत्वादविकल्पपरामर्शेणात्मप्रमातृतामनवरतं भाव-यन्ति। तेषां कृते शाम्भवोपायादय उपदिष्टाः। मध्यमाधिकारसम्पन्नानां साधना-पराणां मुमुक्षूणां कृते सत्तर्कसदागमसद्गुरूपदेशमवलम्ब्य भावनाबलेन शुद्ध्यमाना विकल्पान्तरानुदयाद् विकल्पा निर्विकल्पीभवन्ति। तत्र क्रमपरस्य शाक्तोपायस्य सामर्थ्यम्। यदा पुनर्विकल्पस्वशुद्धिसामर्थ्याभावे साधनान्तरसाहित्यमावश्यकम्, तत्राधिकारवान् साधकोऽधम इत्युदीर्येत इत्यलं बहुविस्तरेण, तत्रैव बहुप्रपञ्चितत्वात्।[2]

शाम्भवावेशमयस्य उत्कृष्टतीव्रात् शक्तिपातात् तदैव देहपाते परमेशता, देहधारणे तुर्यातीतावस्था, शाक्तावेशमयस्य मध्यतीव्रात् शक्तिपाताद् आचार्यानपेक्षि स्वप्रत्ययं प्रातिभज्ञानमुदेति। ईदृशस्य योगिनः सांसिद्धिक इति संज्ञा। तत्रापि इच्छा-वैचित्र्याद् गुर्वादेरप्यपेक्षासेवादितारतम्यम् यदधिकृत्य प्रातिभगुरोः सांसिद्धिकस्य निर्भित्तिकः, सर्वगत्वाद् मुख्यामुख्यांशनिष्ठत्वात् त्रिविधः सहभित्तिक इति, तथा च अकल्पितकल्पकस्य च उत्कृष्ट-मध्य-मन्दभेदाद् यद्वर्गीकरणमाश्रितं तत्सर्वम्, मध्य-तीव्रशक्तिपाततारतम्यप्रथितमेव, सर्वत्र तत्र प्रतिभांशस्य बलीयस्त्वात्।[3] इयं शाक्ती भूः। मन्दतीव्रेऽपि शाक्तावेशस्य स्पर्शः। यतो मन्दतीव्रात् शक्तिपाताद् असद्गुरुतः सद्गुरु-गमनम्। मध्यस्य तीव्र-मध्य-मन्दकोटिषु बुभुक्षातारतम्यावच्छिन्ना मुमुक्षा। मन्द-मध्य-तीव्रोऽपि तीव्र-मध्य-मन्दकोटिषु दीक्षादिसव्यपेक्षत्वेऽपि प्रातिभपर्वसन्निकर्षात् शाक्तो-

---

१. तत्रैव, १.२७।

२. म० म० डॉ० गोपीनाथकविराजः, 'भारतीय संस्कृति और साधना' विहार, पृ० ३६७–३६९।

३. तं० सा०, पृ० १२०, तं० ४.४१–४३; १३.१३१।

पाय एव विश्राम्यतीति निश्चेतुं शक्यते। मन्दस्य कोटित्रयेऽपि बुभुक्षुता। मध्यकोटिद्वयमन्दकोटित्रयपतिताश्च सर्वेऽधिकारिण आणवकक्ष्यानुरोधभागिनः। अत एवेदमुच्यते यदाणवे विप्रतिपन्नाविप्रतिपन्नभेदवैधुर्येण सर्वेऽप्यधिकारिणः, शाक्ते तु केवलं दैशिककटाक्षपातचेतसः।[1] अनयैव दृष्ट्या ज्ञानिनो योगिनश्च द्वयोरपि मोक्षाधिकारत्वमाम्नातम्। ज्ञानिनस्तु श्रुतं मन्दस्वभ्यस्तचिन्तामयं स्वभ्यस्तचिन्तामयं भावनामयमिति चतुर्धा ज्ञानम्। तत्रोत्तरोत्तरं पूर्वपूर्वाज्जायमानं क्रमेण पराकाष्ठामधिरोहति। अतो मोक्षैककारणतया सर्वातिशायि भावनामयं ज्ञानं तर्क इत्यभिधीयते।[2] एतज्ज्ञानयोग्यविचित्रता शक्तिपाताल्लभ्यमाना योगिनमपि चतुर्धा विभजते। तत्र प्राप्तयोगोपदेशमात्रः संप्राप्तः, तदभ्यासमात्रनिष्ठो घटमानश्चेति संज्ञायमानो योगे ज्ञाने वा न प्ररूढः। स्वभ्यस्तज्ञानः सिद्धयोग इत्युदीर्यते। तस्य क्रमेण मोक्षः। किन्तु नित्योदितचित्स्वभावः सदैवास्खलितस्वरूपः सिद्धतमो योगी शिवतामापन्न एव, तस्य ज्ञानं भावनामयम्।[3] उपरि प्रपञ्चितेनास्य स्पष्टमेव संवादः। एतत् पर्यवस्यति यद् निखिलेयमुपायरचना शक्तिपातभित्तिलग्ना एव स्फुरति। यथोक्तमस्ति श्रीजयरथेन—"नहि ईश्वरशक्तिपातमन्तरेण तद्विवेकज्ञानमुदियादिति मुक्तेरपि कोऽवसरः"।[4]

अथ शाक्तोपायमेवाधिकृत्य किञ्चित्। शक्तेर्प्रभवोऽयमुपायः, ततः शाक्त इति व्यपदेशं लभते। यद्यप्युक्तमेव यत् शक्त्युल्लेखः सर्वत्रैवोल्लसितः, किन्तु शक्तेरौल्बण्यकृतः प्रकर्षोऽस्य। 'शक्तयोऽस्य जगत्सर्वम्' इति स्थित्या। अयं चोपायो वेद्यवर्गस्य स्फुरत्तापरपर्यायशक्तिस्वभावतयाऽनुभूयमानत्वात् शाक्त इत्युक्तः।[5] शाम्भवे त्वाह्लादोत्कर्षानुभूतिचमत्कारस्य स्वस्वभावात्मकतयाऽनुभूयमानत्वम्। एवञ्च इच्छाज्ञानक्रियासामरस्यात्मा आत्मनः संवित्स्वभाव एव हृदयमिति व्यवह्रियते। तस्य च वास्तवस्वरूपानुसन्धाने स एवाहं परमशिवाख्योऽनवच्छिन्नचैतन्यः शक्तित्रितयशालित्वादिति विमर्शलक्षणा शक्तिराविर्भवति। यदुद्दिश्य 'वितर्क आत्मज्ञानम्'[6] इति

१. तं० १३.२४०–२४६; म० मं० प०, पृ० १४७,१५० ।
२. मा० वि० तं० ४.२८–४०; १७.२० ।
३. तं० १३.३२६–३३१ ।
४. तं० ८, पृ० ५ ।
५. द्रष्ट० म० मं० प०, पृ० १५२ ।
६. शि० सू० १.१७ ।

शिवसूत्रभणितिः, 'शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते'[१] इति प्रत्यभिज्ञोक्तिश्च। शिवोपनिषद्व्याख्यातृभिरियं शाम्भवी भूरित्युपदिश्यमाना शाक्तोपाय एव पर्यवस्यति।[२] अथ च एष वितर्कः सत्तर्कापराभिधेयः परां काष्ठामधिरूढो भावनेत्यभिधीयमानः। आत्मोपलब्धौ चरमोपकरणतयोपयुज्यमानः। अस्य कृते भावनोपायसंज्ञामप्यर्जयति।[३] भेदाभेदमयो हि शक्तेर्व्यापारः, इत्युद्देशेन 'भेदाभेदौ हि शक्तिता' इति श्रीतन्त्रालोककृदुक्तिः।[४] अत्र हि शक्त्युपाये बाह्योच्चाराद्यभावाद् अभेदः, विकल्पात्मकत्वाच्च भेदः; अत एव शक्त्युपाय उभयोपायः, भेदाभेदोपायः, परापरोपायश्चैतैर्नामभिर्व्यपदिष्टः।[५] परापरतयाऽयं प्रमाणोपायोऽपि वक्तुं शक्यते। यत्र परांशे मात्रंशः स्वस्वभावानुभूतिप्रथात्मकः शाम्भवस्तिष्ठति, अपरांशे च मेयांशौल्बण्यमय आणवो जृम्भते। अपरांशगं मेयं तादात्म्याद् अध्यवस्यतः परमं मात्रैकरूपं शाम्भवं प्रत्युन्मुखत्वादस्योपायस्य[६]। स्वसंविद्विकल्पाकारत्वेऽप्युपायस्य 'सर्वो विकल्पः संसारः' इति

---

१. ई० प्र० का० १.१.३।

२. वि० भै० वि०, पृ० ९५–९६; ई० प्र० का०, ४.१.१५; ई० प्र० वि० ४.१.१२।

३. अकिञ्चिच्चिन्तनं शाम्भवः, भावना शाक्तः। द्र० तं० वि० ४, पृ० ४६९; अपि च मा० वि० तं० १७.२०।

४. तं० १.२२०। तु० श्रीक्रमसम्प्रदायः (कृतित्वमज्ञातम्), (काश्मीरराजकीयशोधपुस्तकालये हस्तलिखिता प्रतिः, प्रतिसंख्या १५१) पृ० ५

बाह्यान्तरक्रमेणेमाः संविदुल्लासभूमयः।
या स्फुरन्त्यस्थिरा नित्यं भेदाभेदप्रथात्मिकाः॥

५. द्र० तं० १.२३०, २.४५; तं० वि० १, पृ० ३७,२४२, ४, पृ. ४२४।

६. तु० मा० वि० वा० १.४२९, ४५४–५५; अनुभवसाक्षिकेयं प्रक्रिया (१) "यः कश्चन अर्थक्रियार्थी हि प्रमाता प्रमाणोपारूढमेवार्थजातं प्रथममालोचयेत्, (२) अनन्तरम् 'इदमित्थम्' इति विकल्पयेत्, (३) तदनु 'ज्ञातोऽयं मयार्थः' इति सन्तोषाभिमानादहीरूपताविलापनेन स्वात्मन्येव विश्रमयेत्।" तं० वि० ४, पृ० ३६८; अपि च—

न स्वतन्त्रं स्वतो मानं कुर्यादधिगमं हठात्।
प्रमात्राश्वासपर्यन्तो यतोऽधिगम उच्यते॥
तं० ४.८२।

न्यायेन विकल्पानां भेदनिष्ठता, भेदस्तु मायिकः; अत एव सविकल्पतया मायोपायोऽप्येष उक्तः।[1] शुद्धेऽपि विकल्पे मायाशक्तेः स्पर्शस्य सर्वथा विगलनाभावाद् मायासंस्कारस्पर्शरूषितत्वात् शाक्तोपायस्येदृशी अभिधा सम्भवति। किन्तु मायाशक्तिरत्र नातिप्रभ्वी, यतो हि विकल्पाः स्वसंस्कारक्रमेण आत्मसाक्षात्कारमयीमविकल्पां शाम्भवीं स्थितिं प्राप्नुवन्ति।[2] विकल्प्यमानस्य 'इत्थमेवेदम्, अहमेवेदम्' आत्मस्वरूपपरामर्शस्य क्रमेण संविद्रूपतासादनादयं ज्ञानोपायोऽपि कथ्यते। यतो हि ईदृक्क्रमपरामर्शो ज्ञानशक्तिस्फारात्मको[3] ज्ञानशक्तेर्यदस्य संयोगः पूर्वमाम्नातस्तस्यायमेवाभिप्रायः। तस्य चिदुपायत्वकथनमपि इदमेव स्फुटयति।[4] इदमेवोद्दिश्य वेद्यस्थितिदृशाऽन्यत्राप्युपदिष्टम्—

भावानां यत्प्रतीघाति वपुर्मायात्मिकं हि तत्।
तेषामेवास्ति सद्विद्यामयं त्वप्रतिघातकम्॥[5]

एतन्निष्पद्यते यद् आणवे यद्भावानां वपुस्तत्प्रतिहन्तृस्वभावत्वात् प्रतिबिम्बात्मकमात्रमेव। यतः क्रियाशक्तिस्फारतया भेदमयत्वाद् वेद्यतोत्कर्षात् तत्र नैर्मल्यविरहः, ततोऽस्य बिम्बग्रहेऽसामर्थ्यम्, प्रतिबिम्बात्मकमेव वपुरवशिष्यते भावस्य। पुनरत्र वेद्यशरीरमप्रतिहन्तृस्वभावमतः प्रतिबिम्बग्राहि, यतो ह्यत्र ज्ञानशक्तिस्फारतया सद्विद्यात्मकस्य भावस्य तदपेक्षाकृतं नैर्मल्यं तत्कृतं प्रतिबिम्ब-

---

१. सविकल्पकतया मायामयम्, शाक्तः स मायोपायोऽपि। तं० १.२१४–१५।

२. नाहं देहात्मको नाहं कर्माधीनो न मे मलः।
नान्येन प्रेरितोऽस्मीति किं त्वेतद्विपरीतकम्॥
इत्थं विकल्पं संस्कृत्य स्पष्टविद्यात्मतां नयन्।
कश्चिद्याति समावेशं.............................॥

तन्त्र० व० धा० २.६–७

३. भूयो भूयो विकल्पांशनिश्चयक्रमचर्चनात्।
यत्परामर्शमभ्येति ज्ञानोपायं तु तद्विदुः॥

तं० १. १४८।

४. मा० वि० वा० १. ९९७; अत्र खलु मन्त्रशक्तेर्विजृम्भणात् प्रातिभज्ञानोदयः, द्र० प्र० हृ०, भूमिका, पृ० १८।

५. तं० ३. १०।

ग्रहणे सामर्थ्यम्। पार्यन्तिके शाम्भवे तु संविदः पूर्णनैर्मल्याद् दर्पणप्रतिबिम्बन्यायेन संवित्संलग्नमेव विश्वं संवेद्यते।

ज्ञानात्मकत्वादेव शाक्तस्य शुद्धविकल्परूपता सर्वत्रैव चर्चिता।

उच्चाररहितं वस्तु चेतसैव विचिन्तयन्।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते॥[१]

इति श्रीमालिनीविजयोक्तनीत्या चिन्तात्मकत्वं शाक्तस्य प्रतिपादितम्। तथा च—

स्वपरस्थेषु भूतेषु जगत्यस्मिन् समानधीः।
शिवोऽहमद्वितीयोऽहं समाधिः सः परः स्मृतः॥[२]

इति श्रीनेत्रतन्त्रस्थामुक्तिं व्याकुर्वाणः श्रीक्षेमराजोऽपि शाक्तं विकल्पोपायतया प्रतिपादयामास। स च सर्वमिदमहमेव—इत्यहंतेदन्तासामानाधिकरण्यात्मशुद्धविद्योत्थाध्यवसायरूपः।[३] शुद्धविकल्परूपत्वादुपायान्तरानपेक्षतया विकल्पसंस्काररूपस्यास्य अशुद्धविकल्परूपत्वादुपायान्तरसाचिव्येन विकल्पसंस्कारं प्रथयत आणवाद्भेदः।

शाक्तोपायमधिकृत्य कृत्स्नमपि नवसंख्याकं प्रमेयं श्रीमताभिनवगुप्ताचार्येणैकत्रैव संग्रहन्यायेनोक्तम्। तथाहि—

विकल्पसंस्क्रिया तर्कतत्त्वं गुरुसतत्त्वकम्।
योगाङ्गानुपयोगित्वं कल्पितार्चाद्यनादरः॥
संविच्चक्रोदयो मन्त्रवीर्यं जप्यादि वास्तवम्।
निषेधविधितुल्यत्वं शाक्तोपायेऽत्र चर्च्यते॥[४]

---

१. मा० वि० तं०, २. २२।

२–३. क्षेमराजः, नेत्रतन्त्रविवृतिः, भा० १, पृ० १८६ ( ने० तं० ८. १८ )

४. तं० १. २८९–२९०; अत्र जयरथेन—"शाक्तस्य च विकल्पकमेव रूपम्" इति (१) प्रथमं विकल्पस्यैव संस्कार उक्तः, ( २ ) स च हेयाद्यालोचनद्वारेण तर्केणाभिधीयत इति। तदनन्तरं तत्तत्त्वम्, ( ३ ) अन्यच्च शुद्धविद्यात्मनस्तर्कस्यैव विस्फूर्जितं यत् तद्वशादेव सद्गुरुप्राप्तिर्भवेदिति तत्सतत्त्वमुक्तम्, ( ४ ) तर्क एव च साक्षाद्योगस्याङ्गमित्यन्येषां

एषां मध्ये गुरुतत्त्वं प्रति शक्तिपाताधिकारिण्याजेनास्माभिर्दिङ्मात्रनिर्देशः कृत एव। इह तु 'शाक्ताख्यो वैकल्पिकपथक्रमः' ईदृगुक्तीः संभावयन् यः खलु विकल्पसंस्क्रियाव्यापारस्तं तदनुषङ्गितया तर्कतत्त्वञ्चाधिकृत्य किञ्चित् प्रस्तूयते। अन्येषामपि प्रमेयाणां समावेशो यत्र तत्र भविष्यति, किन्तु नैष क्रमः परिपालयिष्यते।

सर्वाहंभावभावनात्मकशुद्धविकल्पावमर्शरूपः शाक्तोपाय इत्युक्तमेव। शुद्धैर्विकल्पैः शाक्तः प्रशमितैस्तु शाम्भव इति तयोर्भेदः। "इदमेव हि तद्योगिनो ज्ञानस्य शुद्धत्वं यदिदन्तोपश्लेषि अवैयाकुल्यम्"[1] इति श्रीमहेश्वरानन्दपादानामुक्तेः कोऽर्थः, यतः विकल्पो हि नाम द्वयापेक्षी विनिश्चयः (स्वं स्वकीयप्रतियोगिनं चापेक्षमाणः) भेदकोटिमध्यास्ते। तर्हि का नाम शुद्धिः विकल्पस्य ? नास्ति शङ्कावकाशः ; विकल्पस्य द्वयी गतिः। भेदसन्धायकत्वाद् मायीयो नैशो वा प्रथमः, अभेदसंधायकत्वात् शुद्ध इति द्वितीयः। वक्ष्यमाणविकल्पसंस्कारक्रमेण स्वात्मीभावमागतो विकल्पः शुद्धः, तस्यापि कोटिद्वयम्—तत्रेन्द्रियार्थाद्युपायनिरपेक्षतया अन्तरुल्लिखितसंविदाकारमात्रनिष्ठः प्रथमः, इन्द्रियार्थाद्युपायको निर्विकल्पपृष्ठभावी द्वितीयः। उभयत्र संवित्स्वातन्त्र्योल्लासः[2]। शाक्तोपाय उभयरूपं शुद्धमधिश्रित्य प्रवर्तते, आणवश्च मायीयम्। कस्यचिदुपायान्तरनिरपेक्षतया स्वस्वातन्त्र्यादेव विकल्पः संस्कृतः स्यात्, कस्यचित्तु इतरथा बाह्योपायजातसाचिव्यपुरस्सरमेव तथा। तत्र प्रथमः प्रकारः शाक्तोपाये प्रथते, इतरः खलु आणवे।[3]

---

योगाङ्गानामनुपयोगित्वम्, (५) तर्कस्य च शुद्धविद्यात्मतया भेदभावकमायीयविकल्पप्रतिघातित्वात् कल्पितस्य अर्चादेरनादरः, (६) तत एवाविकल्पकसंस्कारस्य दार्ढ्यात् संविच्चक्रोदयः, (७) तदुदय एव च मन्त्राणां परं वीर्यम्, (८) तथामर्श एव च वास्तवं जप्यादि, (९) अत एव च संविदि भेदाभावाद् निषेधविधितुल्यत्वम्। इत्येतन्नवसंख्याकं प्रमेयमुपक्षिप्तम्। (तं० वि० १, पृ० २९९.)

अत्र संख्याचिह्नान्यस्मत्कृतानि मूले नोपलभ्यन्ते। इदं प्रमेयजातं चतुर्थाह्निकेऽतिविस्तरेण दर्शितम्।

१. म० मं० प०, पृ० ६९।

२. द्र० तं० वि० ३, पृ० ११५

३. तं० ५. ३–४।

केवलान्वयिनोऽहंपदस्य तादृक्प्रतियोगिसद्भावादयं शुद्धः। अस्मादेव शुद्ध-विकल्पः सोऽहमित्याकारवान्। अतो विकल्पसृष्टिरपि मम स्वातन्त्र्यलक्षणो विभव इत्येवं विमर्शे दार्ढ्यमापन्ने विकल्पनिर्ह्रासाभावेऽपि जीवन्नेव महेशभावमासादयति जनः। यथोक्तं श्रीप्रत्यभिज्ञायाम्—

सर्वो ममायं विभव इत्येवं परिजानतः।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता॥[१]

कारिकामिमां विवृण्वन्तः श्री-अभिनवगुप्तपादाः "ततो विकल्पसृष्टिरपि मम स्वातन्त्र्यात्मा विभव इत्येवं विमर्शे दृढीभूते विकल्पा अप्यस्य महाविमर्शपतिता अविकल्पीभवन्ति"[२] शाक्तोपायप्रक्रियामेवानुवदन्ति। एवं रीत्या शाक्ते शुद्धपरामर्श-शेषीकरणमुपदिष्टम्, शाम्भवे तु विकल्पस्य प्रशमनमिति शुद्धविकल्परूपपारमैश्वर्य-प्रत्यभिज्ञापनेन ईश्वरप्रत्यभिज्ञा स्फुरत्येवेत्यभिप्रायः।

शरीरिषु विषये पारमेश्वरीं संविदमपेक्ष्य या विकल्पनशक्तिः, सा भेददृष्ट्या तत्त्वरूपतामापतन्ती मनोऽन्तःकरणतयाविर्भवति। तन्मनोऽन्तःकरणादिप्रतियोग्य-पोहनपूर्वकमर्थाविमर्शनव्यापाररूपं प्रथते। तत्रैव संसारबीजप्ररोहः। तत एवं

---

१. ई० प्र० का० ४. १. १२। तत्रभवान् श्रीशिवोपाध्यायमहानुभावः 'सर्वोऽयं ममायं विभव इति परिजानतः' इत्यस्य स्थाने 'सोऽहं ममायं विभव इति प्रत्यभिजानतः' इति पाठ-मङ्गीकुर्वन् सोऽहं शुद्धबोधस्वरूपः; जगच्च इदं मदीयः स्फार इति प्रत्यभिज्ञाद्वैधं सूचयन् 'सर्वज्ञः सर्वकर्ता च···', 'जलस्येवोर्मयो···' (वि० भै० १०९–१०) इति विज्ञानोप-निषदुक्तप्रक्रियया प्रतीकद्वयं विवृण्वन् शाक्तीभूनिदर्शनमित्याह। स्वभावत इयं शाक्तोपायकक्ष्यायां विश्राम्यति। सेयं शाक्तीभूः श्रीतन्त्रालोककृच्छब्देषु 'व्याप्तिः'इत्यभि-धीयमाना (तं० ५. ७१) विकाससमाधिकक्षामध्यास्ते। एतेन शाक्तोपायस्य बहुधोक्तं प्रत्यभिज्ञोपायत्वम्, शाक्तज्ञानस्य प्रत्यभिज्ञानरूपत्वं कामं स्थिरं भवति। वस्तुस्थित्या प्रत्यभिज्ञानस्य इयमेव कोटिः सोऽहमित्याकारवती, शाम्भवे त्वविकल्पवृत्तित्वात् 'अहम्' इत्यवशिष्यते, तत्तु यद्यपि प्रत्यभिज्ञानस्य परं फलम्, परन्तु प्रत्यभिज्ञानरूपं न तत्। द्र० "प्रत्यभिज्ञादर्शन में प्रत्यभिज्ञा का स्वरूप" शीर्षकोऽस्मदीयो निबन्धः, दार्शनिक-त्रैमासिकम्, वर्षम् ११, अङ्कः १, पृ० ४६।

२. ई० प्र० वि० वि० ३, पृ० २६४। अत्रैव तैर्भर्तृहरिपठितागमग्रन्थसंवादोऽपि दर्शितः।

शक्तिस्पर्शस्य अपोहनान्तं यावत् प्रसरात् पर एव प्रधानतया उद्भवतीति भेदाभेदमयो बोधाबोधात्मा प्रमाता चिद्घने परमार्थप्रमातरि पर्यन्ततो विश्रममासादयति, सा विकल्पनशक्तिरेव 'शब्दनशक्तिवैविध्येन आभासते। ताः शब्दनशक्तयो निखिलप्राणिषु सर्वावस्थासु च लोकशास्त्रानुजीविनो ग्राह्यग्राहकविषयस्य विकल्पनव्यापारस्योत्थापनेन मलत्रितयमनुप्राणयन्ति। ता एव विकल्पनमपि शुद्धविमर्शविशेषतां नयन्त्यो मुक्तिं ददति। यतः खलु मूलपरामर्शस्पर्शाभावे हि विकल्पवैचित्र्यम्, मूलपरामर्शभूमिस्पर्शे हि सत्यपि विकल्पे न तस्य बन्धरूपता[1]।

इदमभिप्रेत्यैव "चेतसैव विचिन्तयन् यं समावेशमाप्नोति शाक्तः सः' इत्यभिहितप्रायम्। आणवाद्युपाये उपयुज्यमानेन्द्रियमनःप्राणमनोव्यतिरेकेणेह शाक्ते चेतसो व्यापारता। चेतोऽत्र न मनोमात्रं यथा कैश्चिद् गृह्यते;[2] अपितु साक्षादभिव्यक्तस्वरूपं धीमनोऽहङ्कृतिरूपमन्तःकरणमत्र व्याप्रियते। यथा खलु इच्छादिशक्तिद्वारेण पञ्चकृत्यशालित्वं भगवतः, तथैव बुद्ध्याद्यन्तःकरणत्रयेण विकल्पनमणोः। अस्माद्धेतोः स्वेन्द्रियव्यापारद्वारेण भगवतः पञ्चकृत्यकारित्वानुशीलनमुपदिश्यते। तदग्रे वयं द्रक्ष्यामः। एवं विकल्पस्तु बुद्धिनिर्माणः, स च अन्तःकरणाधीन एव। ततः स्वात्मनि अहङ्कारेण कर्तृत्वाभिमानः, मनसा एषणीयविषयादेस्तत्तदाकारसङ्कल्पः, तद्विषयो बुद्ध्या अन्यापोहेन निश्चय इति क्रमेण सर्वाहम्भावभावनात्मनः 'अहमेव सर्वत्र स्थितः, सर्वं च मय्येव स्थितम्' इत्याकाराभ्यामभिव्यज्यमानस्य यच्छाक्तस्य वैकल्पिकप्रत्ययस्य उद्भवः, तस्यैव अभ्यासातिशयतारतम्येन क्रमजन्यमानसातिशयविकल्पपरम्परामुखेनान्ततोऽविकल्पात्मस्वस्वभावाधिगतिरपि[4]।

---

१. द्र० स्प० का० ३. १३,१५; मा० वि० वा० ३.३१,३३ इत्यादि।

२. द्र० ई० प्र० वि० वि० ३, पृ० ३७९–८०। तत्र व्याख्यानाद् अधिकांशेऽनुवादोऽत्र विभाव्यते।

३. द्र० प्र० हृ०, भूमिका, पृ० १८।

४. शाक्तोऽथ भण्यते चेतोधीमनोऽहङ्कृति स्फुटम्।
सविकल्पतया मायामयमिच्छादि वस्तुतः॥
अभिमानेन संकल्पाध्यवसायक्रमेण यः।
शाक्तः स मायोपायोऽपि तदन्ते निर्विकल्पकः॥

(तं० १, २१४–२१५)

अथात्र शाक्तोपायस्य सविकल्पकतया प्रमातुरणुभावाच्चास्य ज्ञानक्रिये सङ्कुचिते सत्यौ प्रयत्नाभ्यासादिकमपेक्षेते, येनाविकल्पात्मकसंवित्तिमभ्युपेतुमियं वैकल्पिकी भूमिः प्रगल्भेत[1]। इदमेव शाक्तोपायस्य उपायोपायत्वं यदाणवाद्युपेतः शाक्तः शाम्भवमुपयाति। एतदर्थं विकल्पः स्वसंस्कारं कुरुते, यतो हि विकल्पे क्रमेण चिन्मयरूपमात्मनः प्रथते, अविकल्पे शाम्भवेऽक्रमेण। सहजं ह्येतद् विकल्पो नाम किं तत्तत्कल्पनाबलान्नियतः सामान्यात्मा धर्मस्तन्मुखादेव धर्मिणोऽवबोधः स्यात्[2]। इत्ययं क्रमः शाक्तोपाये संस्कारस्य क्रमरूपतां निर्वक्ति। एतेन शाक्ते क्रममुक्तिः, शाम्भवे त्वक्रममुक्तिरप्यनुरणनन्यायेन ध्वनिता।

अध्यवसायात्मकः खलु विकल्पः, स तु 'इदमित्थं न, इत्थमेवेदम्' इति भङ्ग्या प्रवर्तते[3]। तत्राध्यवसाये प्रतियोग्यपोहनपूर्वक एव निश्चयः। अत्र तु सोपानद्वयमालिको निश्चयः। किन्त्वात्मविषये क्रमपरम्परा सुदीर्घा, 'सर्वमिदं भावजातं मत्स्वरूपम्'। इहानात्मांशतिरस्कारेण आत्मांशख्यापनमित्यपोहनमूलाध्यवसायनिष्पादिनी। विकल्पस्य स्वात्माभेदेन परामर्श एवाविकल्पनम्। अत एव विकल्पक्रमोपारोहः। विकल्पक्रमारोह आणवेऽप्यस्ति, किन्तु तत्र बाह्यं किञ्चिदुच्चारादिकमवलम्ब्य, अत्र तु तद्रहिता एव वैकल्पिकी बुद्धिरिति भेदः।

---

१. एवं वैकल्पिकी भूमिः शाक्ते कर्तृस्ववेदने।
यस्यां स्फुटे परं त्वस्यां सङ्कोचः पूर्वनीतितः॥
तथा सङ्कोचसंभारविलापनपरस्य तु।
सा यथेष्टान्तराभासकारिणी शक्तिरुज्ज्वला॥
(तं० १. २१७–१८; द्र० वं० वि० १, पृ० १८७, २३३–३४)

२. वस्तुतो धर्मी त्वनेकधर्मविशिष्टः, तत्र यदि कश्चिदपि धर्मविशेषोऽपूर्वतया ज्ञातस्तदा तद्द्वारेणैव धर्मिणोऽप्यधिगतिः, परप्रमातृभावासादनञ्च अनेनैवोपत्रिधिनोपदिश्यते। द्र० तं० वि० ३, पृ० ८८।

३. भेदितस्यैव प्रमातृप्रमेयादेरर्थस्यापोहनात् 'इदमिदं नानिदम्' इति प्रतिनियततयाऽवस्थानात् संख्यानं विकल्पः। तत्रैव, ३. पृ० २०४।

आत्मस्वरूपे निर्विकल्पे प्रवेष्टुं विकल्पसंविदेव तत्तत्संस्कारबलाद् विकल्पसंविद्रूपतया परिस्फुरणाद् हेतोः 'अहमिति' विकल्पः संस्क्रियते। विश्वरूपतयाऽवभासनमेव द्वैतम्, तदपहस्तनायैव चायं परामर्शः। तत्र पौनःपुन्येन श्रुतचिन्ताद्यभ्यासवशाद् अस्फुटादारभ्य स्फुटतमपर्यन्तं विकल्पः संस्क्रियते गुणान्तरमाधीयते, यतः स्वरूपलाभः स्यात्। अस्मिन् विकल्पसंस्कारवादे बौद्धक्षणिकवादाभ्युपगमः सिद्धान्तिभिः सहर्षं क्रियते। उभयत्र विकल्पो ज्ञानरूपः क्षणिक इत्यभ्युपगम्यते। तत्र यथा ज्ञानं स्वसदृशमन्यं ज्ञानं जनयति, तथैवात्र संस्कृतो विकल्प आत्मसदृशं संस्कृतमेवान्यद्विकल्पं जनयति। विसदृशस्य प्रत्ययान्तरस्योत्पादो यतो न जायते, ततः सदृशविकल्पमालायाः सुदीर्घत्वे न क्वापि क्षतिर्भवति। अभ्यासातिशयतारतम्याद् विकल्पसंस्कारस्य षट्स्तरकल्पना। तत्र [1]अस्फुटः, [2]स्फुटताभावी (स्फुटनयोग्यः), [3]प्रस्फुटन् (उद्गच्छत्स्फुटत्वः), [4]स्फुटितात्मकः (सिद्धस्फुटत्वः), [5]स्फुटतरः, [6]स्फुटतमश्चेति षट्पर्वत्वं विकल्पारोहस्य। अत्रापि अस्फुटस्फुटताभाविनोरन्तराले पुनः [1]अदृश्यदस्फुटत्वः, [2]ईषत्स्फुटत्वः, [3]अङ्कुरितस्फुटत्वः, [4]आसूत्रितस्फुटतरत्वः, [5]उद्गच्छत्स्फुटतमश्चेत्यान्तरालिकसोपानपञ्चकस्थितिः। [1]अत्र स्फुटतमो विकल्पः स्वसंस्कारान्तरापेक्षाविरहाद् विरोधिप्रत्ययान्तरस्यानुत्पादाद् निर्विकल्पवदुत्कृष्टः। अतस्तेन तदात्मीभूता शुद्धविकल्पात्मिका शुद्धविद्यामयी संवित् स्वरूपदार्ढ्यात् नैराकाङ्क्ष्यात् शाम्भवावेशवशेनाविकल्पां शाम्भवीभुवमधितिष्ठति। उक्तञ्च—

> ततः स्फुटतमोदारताद्रूप्यपरिबृंहिता।
> संविदभ्येति विमलामविकल्पस्वरूपताम्॥
> अतश्च भैरवीयं यत्तेजः संवित्स्वभावकम्।
> भूयो भूयो विमृशतो जायते तत्स्फुटात्मता॥[2]

स च विकल्पसंस्कारो हेयोपादेयालोचनद्वारेण तर्केण संपाद्यत इत्यस्ति तर्कस्योपयोगो द्वैतनिर्मूलनाय। तथा च शिवसूत्रम्—'वितर्क आत्मज्ञानम्' (१.१७) इति। शुद्धतत्त्वस्य तन्मयताभावनेन बन्धोत्तीर्णस्य योगिनः 'शिव एवाहमस्मि' इत्यर्थ-

---

१. तं० ४.२-५।

२. तत्रैव, ४.६-७।

विचिन्तनमेव वितर्करूपमात्मज्ञानम्[१]। अनुषक्तविषययोगेनाहंप्रत्ययो वैकल्पिकः। तद्विषयतोन्मूलनाय तथा प्रतिपाद्यते यथा नित्योदितं संवित्तत्त्वं हृदयङ्गमीभवेत्। तथाविधद्वैतविकल्पप्रतिरोधी अख्यातिहतक एव सत्तर्क इति निरूपितः—

दुर्भेदपादपस्यास्य मूलं कृन्तन्ति कोविदाः।
धारारूढेन सत्तर्ककुठारेणेति निश्चयः॥
तामेवं भावनामाहुः सर्वकामदुघां बुधाः।[२]

तर्कस्तु शुद्धविद्यांशपवित्रिताया बुद्धेरुदीयमानः स्वात्मप्रत्यभिज्ञापनपररूपः[३]। स एव पराकाष्ठामुपागतो भावनेत्याम्नायते।[४]

इदं हेयम्, इदमुपादेयमिति परिशीलयतः तर्कस्य सपद्येव तत्त्वज्ञापनाद् ऊहेत्यपराभिधा। अयं षडङ्गयोगस्य[५] उत्कृष्टमन्तरङ्गं चाङ्गम्। यस्मादयश्च संविदि साक्षान्नोपयोगिनः, अपि तु तर्कस्यैव पल्लवभूता उपायाः, स च स्वसाक्षात्कारस्य। अन्यथा ह्यतिशयरूपः संस्कारः संविदि कथं संभवेत्। उक्तमत्र यद्यथा शिष्यबुद्धौ स्वविमर्शं विना पाठ्यमानस्याप्यर्थस्य न प्ररोहः, तथैव शुद्धविद्यात्मा आत्मपरामर्शरूपो बोधोऽपि स्वविमर्शनपूर्वकमेवोदियादिति बोधे विमर्शनक्रमस्तद्गतः संस्कारोऽस्त्येव।[६]

द्विविधस्तु तर्कः—जल्पप्रायः, वस्तुनिर्णायकश्च। शास्त्रान्तरसंभावितो मार्गः प्रथमः, अयं तु द्वितीयः सत्तर्कनामा। असद्गुरुतः सद्गुरुगमनमप्यमुष्मात् सत्तर्कादेव। सद्गुरुपर्यवसायिनी अनुग्रहाभिधा पारमेश्वरी इच्छा, शुद्धविद्या सत्तर्कश्च परस्परं पर्यायाः। व्याप्रियमाणस्य सत्तर्कस्य स्थितिरेवं निरूपिता श्रीजयरथेन—

---

१. शि० सू० वा० (वरदे०) १.८५।

२. तं० ४.१३-१४।

३. तं० वि० ३.पृ० १२।

४. तदेव परमं ज्ञानं भावनामयमिष्यते। मा० वि० तं०, १३.२०।

५. प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते॥ तं० वि०,३. पृ० १५ (उद्धृतम्)

६. द्रष्ट० तं० ४.११०-१११।

"सत्तर्कात्मशुद्धविद्यामाहात्म्याद् ज्येष्ठाशक्त्यधिष्ठानपवित्रीभूतः सन् निर्विघ्नमेव सन्मार्गमारोहति····तेनास्य मोक्षः" ।[१]

सत्तर्कोदये निमित्तद्वैविध्यम्—स्वतः पारमेश्वरशक्तिपातात्, परतो गुरुतः शास्त्रतो वा। अत्र पूर्वं पूर्वं मुख्यमुत्तरोत्तरमुपायकम्। स्वतः प्रवृत्ततर्कस्य 'यौगिकम्' इत्यपि साम्प्रदायिकाभिधानम्। तच्च सांसिद्धिके संसिद्धया स्फुरति। स च सांसिद्धिकः साधकः इन्द्रियवृत्तिरूपाभिर्देवीभिर्दीक्षितोऽभिषिक्तश्च मध्यतीव्रशक्तिपातभाजां पूर्वोक्तानामकल्पितकल्पकादीनां मुख्यः। तस्य सर्वविषयं प्रातिभं महाज्ञानमुदेतीत्यत्र पातञ्जलशास्त्रसंवादोऽपि—

> इत्थं प्रातिभविज्ञानं किं किं कस्य न साधयेत्।
> यत्प्रातिभाद्वा सर्वं चेत्यूचे शेषमहामुनिः ॥[२]

शुद्धविद्यासमुल्लासात्मकं सत्तर्काख्यं प्रातिभं महाज्ञानं विश्रामधामतया प्रधानतयैव सर्वत्राम्नातम्। तत्सम्पन्नस्य तु व्युत्थानकालेऽपि परमेश्वरसमापत्तिः। शुद्धविद्यात्मनः सत्तर्कस्य तरतमभावाद् गुर्वधिकारिवैचित्र्यम्। सर्वत्र सत्तर्को नैशस्य हेयतां शुद्धस्योपादेयतां निश्चित्य शुद्धविकल्परूढिं सम्पादयति। स एव भावना, या मध्यदिशाविश्रान्तिसंस्कारतया रहस्यनयेषु गीयते।[३]

यद्यपि शुद्धविद्यात्मा सत्तर्क एव साक्षादुपायः, तथापि सोऽनेकशः संक्रियते। तद्यथा—यागो होमो जपो व्रतं योग इत्येभिः।[४] संविदवष्टम्भेनावस्थानं पूजा।

---

१. तं० वि० ३. पृ० ४४।

२. तं० १३, १४८; तुल. प्रातिभाद्वा सर्वम् (यो. सू. ३.३२) प्रातिभं नाम तारकं तद्विवेकजस्य ज्ञानस्य पूर्वरूपकम्।···सर्वमेव जानाति योगी प्रातिभस्य ज्ञानस्योत्पत्ताविति (यो. भा. ३ ३२), तारकमिति स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः, (तत्रैव, ३.५३)

३. वि. भै. वि., पृ. ५१; सत्तर्करूपा भावना। सा च—

> तेनात्रध्यानप्राणस्य भावनाद्रेः परे पथि।
> भैरवीये कथंकारे भवेद् साक्षादुपायता ॥ तं. २.१३

इहोल्लिखिताया भावनाया भिन्ना एव। द्रष्ट० तं० ५.४१; वि. भै. वि०, पृ. १४०।

४. तं. सा., पृ० २५; तं० ४.११४–१५

एवमन्यत्राप्यवगन्तव्यम्। संविच्चक्रानुविद्धत्वेन मन्त्रवीर्यमपि संवित्क्रमद्वारेण प्रकाशितं भवति। यतो हि संवित्प्रत्यवमर्शिनी सर्वमामृशति। पूर्णतायाः पराकोटि-रियम्। इयमेव स्वात्मनः फलम्। तन्मयीभवनमेव तत्र सम्यक् प्रवेशद्वारः। इह हि संविदैकात्म्यं नामोपेयम्, तत्र च यदेव यदा सन्निकृष्टं तदेव तदा ग्राह्यम्, इतरत् तु त्याज्यमिति। कस्यापि विधिरस्तु निषेधो वा। किमनेन नः प्रयोजनम्, अतो विधिनिषेधतुल्यत्वमपि प्रमेयतयोपक्षिप्यते शाक्तोपायमीमांसायाम्।[1]

एवंभूतैर्विचित्रैः शुद्धविद्यांशमयैर्विकल्पैरविकल्पात्मकं स्वसंविद्रूपं यथा प्रथते तथा तत्र चिरन्तनदार्ढ्याय यतमानस्तदैकात्म्यमापन्नो विकल्पविशेषो योगः। पूर्णतासंविदनुप्रवेश एव फलम्। शक्तिसाकल्येन स्फुरणे पूर्णताभिव्यक्तिः। इयमेव चास्य पूर्णता यद् विश्वरूपतया स्फुरेत्। पूर्णता संविद्रूपा सर्वशक्तिक्रोडीकारमयी काल-कर्षिणी परप्रमातृरूपा द्वादशधा समुल्लसति, प्रमातरि प्रमाणे प्रमेये च सृष्टिस्थिति-संहारानाख्यत्वेन चतुर्धा स्फुरणात्।[2] एता एव क्रमेणाऽक्रमेण उद्भासमानाश्चक्रेश्वर-स्वातन्त्र्यं पुष्णन्त्यः कालिका इति निरुच्यते। इत्थं संविच्चक्रोदयोऽप्युपक्रान्तः। अत्रैव शाक्तोपायस्य क्रमदर्शनात्मकता सहजमेव आविर्भवति। यथोक्तं श्रीक्षेमराजा-दिभिः—"एता हि देव्यः श्रीमन्मन्थानभैरवं चक्रेश्वरमालिङ्ग्य सर्वदैव जगत्सर्गादि-क्रीडां संपादयन्तीत्याम्नायः।"[3] अस्मादेव शक्तिचक्रविकासस्तत्प्राप्तौ उपाय उक्त इति दृष्टपूर्वम्। एवं पूर्णाहन्तात्मनि यदा रूढस्तदा चक्रैश्वर्यं तस्य स्वयमेव जायते।[4] महार्थसम्प्रदायो ह्येषः।[5]

वस्तुतो विकल्पसंस्क्रियादीनामसंख्यातत्वात् चतुर्थाह्निकप्रारम्भ एव शाक्त-मुपायमण्डलं प्रतिपादनायोपक्रान्तम्। वस्तुस्थित्या त्वनुग्राह्यभेदात् शक्तिपातवैचित्र्याद् भावनादीनां निमित्तानामानन्त्यम्।[6] पूर्णज्ञानावाप्ताविदमुपायवैचित्र्यमत्र

१. द्र० तं० ४.२७१।

२. तं. ४. १२२–१७९।

३. स्पं० नि., पृ. ६।

४. स्प० का. ३.१९।

५. अनयैव दिशा परसंविदात्मिकायां वामेश्वर्याम् आत्मानुप्रवेशः शाक्तौपायिकी गतिरिति प्रतिपादितं पर्यन्तपञ्चाशिकायाम्। द्रष्ट. अभिनव०, पृ. ९१

६. द्रष्ट० तं. वि. ३, पृ० ६१

शाक्तोपाये दरीदृश्यते। तेषां कतिपयान् उपायप्रमुखान् आश्रित्य किञ्चिद् वक्तुमुद्यमोऽत्र।[१]

शक्त्याविष्करणेन प्रत्यभिज्ञासिद्धिरिति सामान्यसिद्धान्तमनुसरन्तः श्रीक्षेमराजा आत्मीयपञ्चविधकृत्यकारित्वदृढानुशीलनं भक्तिभाजां माहैश्वर्यापादकमिति आमनन्ति। सततमेतत्प्रतिपत्तिपरायणस्तत्क्षणमेव जीवन्मुक्तिरलामनिर्वचनीयाह्लादमयीं कामपि दशां सेवते। एतदनुशीलनेन सर्वमध्यभूता संविद् विकसति।[२] अस्य पञ्चविधकृत्यकारित्वस्य रहस्यरूपोऽपि खल्वेकः प्रकारः, यः क्रमदर्शनसन्दर्भे उपदिष्टः। इन्द्रियादिसंविद्देव्यां व्याप्रियमाणायां यस्य यस्याभासस्तस्य तस्यैव सृष्टिः। आभासितस्य यावत्कालं ग्रहणाख्य आस्वादस्तस्य सा स्थितिः। 'ज्ञातो मयार्थः' इति यः प्रमातुराश्वासः सा तस्य संहृतिः। संहृतोऽपि शङ्कादिसंस्कारं यदा धारयति, तत्रैव भाविसृष्टिबीजतया तदा तस्य तिरोधानम्। यदा तस्य अनुभवभूमावेव हठपाकक्रमेणालंग्रासयुक्त्या वा स्वात्मीभावेन प्रथनं तदानुग्रहः। ईदृशमात्मीयं पञ्चविधकृत्यकारित्वं सदा आत्मनिष्ठमपि प्रकाशनाय गुरुकृपामपेक्षते। इमानि रहस्यभाषायाम्—आभासन-शक्ति-विमर्शन-बीजावस्थापन-विलापनानि[३] सृष्टि-स्थिति-लय-अनाख्य-भासा[४] वा इत्याख्यां लभन्ते। अत एवान्यत्र करणेश्वरीणां वृत्तिरूपतापरिहारेण शक्तितया, तथा च संवेद्यस्य चिद्भूमिविश्रामदायितया परिज्ञानेन तदधिष्ठातृतया निजमरीचिचक्रं विभावयतो योगिनः सहजस्वातन्त्र्याविर्भावोऽप्युपदिष्टः।[५]

---

१. डॉ० पाण्डेयमहोदयैस्तु क्रमापरपर्यायशाक्तोपायान्तर्गताश्चत्वार उपायाः परिशीलिताः। इन्द्रियाणां शक्तिरूपतया ज्ञानम्, संविदभेदेन मायिकवेद्यस्वात्मस्फुरत्तासारपरिशीलनम्, सूक्ष्मशक्तिचक्रक्रमपरामर्शः, संविदवष्टम्भेन पूजादिकञ्च। द्र० अभिनव०, पृ० ५३९–५४१। अमीषां द्वितीयस्तु निबन्धस्य आदावेव निरूपितः, चतुर्थश्च साम्प्रतमेवाभिहितः। प्रथमतृतीययोर्यथावसरं विमर्शो भविष्यति।

२. प्र. हृ. पृ० ६३,८२

३. आभासन–शक्ति–विमर्शन–बीजावस्थापन–विलापनतस्तानि। प्र० हृ० ११

४. सृष्टिस्थितिलयानाख्याभासाशक्तिप्रसारणात्।
प्रपञ्चविषयं यच्चत्पञ्चकृत्यं प्रपञ्चितम्॥
तया प्रसारितस्यास्य शक्तिचक्रस्य यत्पुनः।
सन्धानमान्तराम्नायाम्नातक्रमविमर्शनम्॥ शि० सू० वा० (वरद) १.४०–४१

५. तं० वि० ३, पृ० ६४; ३ स्तो० ८.५,१३.८,१७.३६,१७.४४. तदुपरि स्वविवृत्तौ क्षेमराजः (पृ० ३००) "रश्मिचक्रस्य…स्वसंवित्सात्मिका लक्ष्मी…विजृम्भते…इति महार्थपरिपूर्णस्य अस्य सारोपदेशवर्षिणीमानि सूक्तान्युज्ज्वलन्ति।"

एतत्पञ्चकृत्यकारित्वमधिकृत्य किञ्चिदन्यदपि प्रतिपादितं श्रीमहेश्वरानन्देन। परमेश्वरोऽलातचक्रच्छायया सूचिकाविद्धोत्पलदलशतवद्वा अतिशीघ्रं चक्रवदावर्तमानानि पञ्चकृत्यानि करोति। सत्त्वेऽपि क्रमस्य तत्र असंलक्ष्यत्वम्। तत्क्रमं यः गाढाभ्यासबलेन परामष्टुं समर्थः स जीवन्नेव मुक्तः[1]।

मध्यविकासकारणत्वेन शक्ति-सङ्कोचशक्तिविकासोऽप्युपायतया परिकल्पितः।[2] अयं चोपायः उपायत्रयेषूपदिश्यते; किन्तु वत्तदुपायकृतवैशिष्ट्यविच्छुरित एव प्रवर्तत इत्यस्य वैलक्षण्यं सर्वत्रापि। इन्द्रियमार्गेण प्रसरन्त्याः शक्तेः संहारक्रमेण स्वात्माभिमुखीकरणमिति शक्तिसङ्कोचः। तथा चान्तरुल्लिखन्त्याः शक्तेर्यौगपद्येन बहिः प्रसार इति शक्तेर्विकाशः। अयं चोपायो निमीलनोन्मीलनसमाधिरित्यपि व्यपदिश्यते, तस्यामारूढायां परभैरवताप्राप्तिः।[3] अयमुपायतत्त्वपर्यालोचनया आणवे बाह्यशक्तिसंभोगरूपशाक्तक्षोभतया, शाक्ते तु बाह्यशक्त्यभावेऽपि शाक्ताख्यकुलस्वरूपस्य भावनावशेन तन्मयीभावरूपः कुलावेशतया, पुनः शाम्भवे विकल्पहानरूपः क्षोभप्रलयतया प्रथते।[4] एतत्प्रसङ्गेनैव श्रीतन्त्रालोककृद्भिर्यदुक्तम्—

शाक्ते क्षोभे कुलावेशे सर्वनाड्यग्रगोचरे।
व्याप्तौ सर्वात्मसङ्कोचे हृदयं प्रविशेत् सुधीः॥[5]

तत्कुलावेशातिरिक्तं व्याप्तिः सर्वात्मसङ्कोचश्चेत्युपायद्वयमपि शाक्तोपाये विज्ञानभैरवप्रक्रियया[6] अन्तर्भावयति। तेनैव न्यायेन शाक्तक्षोभ आणवे, सर्वनाड्यग्रगोचरत्वं शाम्भवे पर्यवस्यतः। तत्र सर्वाल्यप्रतिपत्त्या सर्वाक्षेपी विकाससमाधिः

---

१. इत्थमेतत्क्रमपरामर्श एव स्वात्मविमर्शरूपो जीवन्मोक्षः। म० म० प०, पृ० १०९

२. वि० भै० वि०, पृ० ६७; पृ० हृ०, पृ० ८५–८६

३. प्र० हृ०, पृ० १००, स्पं० नि० १२;२५ अत्र विज्ञानभैरवकक्ष्यास्तोत्राभ्यां प्रत्यभिज्ञाहृदयस्तोक्तीरेवोदाहरन् क्षेमराजः प्रतिपादयति स्म—"निमीलनोन्मीलनसमाधिना युगपद् व्यापकमध्यभूम्यवष्टम्भादध्यासितैतदुभयविसर्गारणिविगलितसकलविकल्पोऽक्रमस्फारितकरणचक्रः।........भगवद्भैरवमुद्रानुप्रविष्टो।"

४. तं० वि० ३,२३३,२७७–८१, वि० भै० २६,६९–७१,१३८, वि०, भै० त्रि०, पृ० २४, ६०; स्पं० नि०, पृ० २३, २५; म० मं० प०, पृ० १५२–५३; मा० वि० वा०, पृ० ८९६; प्र०, हृ०, पृ० ८६।

५. तं० ५.७३।

६. वि० भै० १०६,११० एवं ९९,१०२।

व्याप्तिः,[1] सर्वात्मना बाह्यस्य सङ्कोचे 'नैतद्वस्तु सत् किञ्चित्' इति भावना सर्वात्मसङ्कोचः। अमीषु समापन्नो जनः शाक्तीभुवमधितिष्ठति[2]।

'आदिपदादुन्मेषदशानिषेवणम्' भणता श्रीक्षेमराजेन उन्मेषदशापरिशीलनस्यापि शाक्तोपायतया ग्रहणं कृतमिति प्रतीयते।[3] एकचिन्ताप्रसक्तस्य योगिनः प्रारब्धचिन्तासंहरणमेव परस्वरूपोदयहेतुरुन्मेषः, स तु एकाग्रताप्रकर्षात् स्वरूपचमत्कारात्मा अपर एवोदय उन्मेषसंज्ञः स्वरूपप्रत्यभिज्ञानोन्मेषकत्वात्।[4] तद्दशानिभालनं स्वरूपप्राप्तिकरमिति। क्षोभप्रलयात्मा निमेषोऽपि परपदोन्मेषात्मा। उभयरूपतया आभासमाना एकैव शक्तिरुन्मेषप्रधानतया व्यवह्रियमाणा शाक्तीभूः, निमेषप्रधानतया च शाम्भवी इत्यनुसंधेयम्।

भावनामयज्ञानस्य सर्वत्रापि शाक्तत्वमासूत्र्यते, अत आनन्दपूर्णस्वात्मभावनादिकं[5] यदुपायजातमुट्टङ्कितम्, तदपि शाक्तानुजीवि। यतोऽतिसूक्ष्मात्मविमर्शा-

---

१. व्याप्तिरूपोऽयं चोपायः श्रीशिवोपाध्यायेनापि शाक्तोपायतया "ऊर्ध्वे प्राणो ह्यधो जीवो···" अस्याः कारिकाया व्याख्यानावसरे प्रदर्शितः। तथाहि—"अन्यच्च ऊर्ध्वं इति मायान्ताध्वोपरि प्राणोऽनुप्राणकं शुद्धाशुद्धाध्वव्यापि शिवशक्तितत्त्वम्, तस्यैव चाधो जीवः, स्वीकृतमायादितत्त्वग्रामं नरशब्दवाच्यमात्मतत्त्वं यावत्, सैवेत्थं परा उच्चरेत्—शैवी स्वातन्त्र्यशक्तिरेवेत्थं जृम्भते। तेन उत्पत्तिद्वितयस्थाने उत्पद्यमानशुद्धाशुद्धाध्वद्वये भरणात्, पराशक्तिव्याप्त्या सर्वसर्वमयत्वभावनया तत्सामरस्यापादनाद्भरिता स्थितिः।" वि० भै० वि०, पृ० १८

२. तं० ४, पृ० ३१८–३७९।

३. प्र० हृ० पृ० ८६, अस्य च शाक्तेऽन्तर्भावः शाम्भवे वा, महतीह खलु विप्रतिपत्तिः। "एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः। उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत्" (स्पं० का० ३.९) कारिकामिमां व्याकुर्वता श्रीक्षेमराजेन शाक्तोपायपद्धतिमाश्रिता (स्पं० नि०, पृ० ६२) 'अन्ये' इति शब्देन द्वितीयव्याख्यायां कल्लट-रामकण्ठानुसारिण्याम् (तु० स्पं० का० वि०, पृ० ११७ (राम०) तथा कल्लटस्य वृत्तिः, पृ० ३३) स्वकीयमस्वारस्यमभ्यनेन प्रदर्शितम्। तथा च उपजीव्यतया उदाहृतायाः श्रीविज्ञानभैरवोक्तेरपि (वि० भै०, पृ० ६२) स्वयं श्रीक्षेमराजेन शाम्भवोपायविषयता परिहृता स्वोपज्ञनेत्रतन्त्रविवृत्तौ (ई० प्र० २०१)। अत एवात्र अस्य शाक्तोपायाङ्गत्वमुररीकृतम्, तथैव च प्रतिपाद्यते। शाम्भवोपायदशा इत्थं व्याख्यातः—"इति योऽनुसन्धत्ते, यश्चासौ अनपह्नवनीयोऽनुसन्धाता सोऽनुसन्धेयचिन्ताद्वयव्यापकविशुद्धचिन्मात्रस्वरूपः सर्वकारणमात्मैवोन्मेष इत्युक्तः" रामकण्ठः, स्पन्दकारिकाविवृतिः, पृ० ११७।

४. स्पं० नि० पृ० ५,६२।

५. प्र० हृ० ४।

ह्लादचमत्कारसिद्धिरिति शाक्ते। एनयैव दृशा पराभट्टारिकात्मा तुर्यानन्दपल्लवोऽपि स्वतादात्म्यानुसन्धाने शाक्तोपायतयोपस्थापितः।[1]

शुद्धविकल्पमयत्वादस्योपायस्यायमतिशयो यद् विकल्पसृष्टेरपि मत्स्वातन्त्र्य-विभवत्वाद् व्युत्थानमपि समाधिरसार्द्रमेव।[2] अस्माद्धेतोरभेदमयो शैवीभक्तिरत्रैव विलसति। यथोक्तं स्तोत्रावल्यां श्रीमतोत्पलदेवेन—

यद्यथास्थितपदार्थदर्शनं युष्मदर्चनमहोत्सवश्च यः।
युग्ममेतदितरेतराश्रयं भक्तिशालिषु सदा विजृम्भते॥[3]
स्फारयस्यखिलमात्मना स्फुरन् विश्वमामृशसि रूपमामृशन्।
यत् स्वयं निजरसेन घूर्णसे तत्समुल्लसति भावमण्डलम्॥[4]
ईहितं न बत पारमेश्वरं शक्यते गणयितुं तथा च मे।
दत्तमप्यमृतनिर्भरं वपुः स्वं न पातुमनुमन्यते तथा॥[5]
इह तु पुरोक्ताद्युक्तिकलापाद्यः प्रविशेत् सद्यो नाशक्तः।
तं प्रति शाक्तोपायपथेन प्रकटीक्रियते हृदयस्पन्दः॥
(मा० वि० वा० २.२६)



---

१. 'अपि च, ऊर्ध्वं इत्युत्कृष्टतया प्राणो विश्वानुप्राणक इच्छाज्ञानक्रियाप्रसरः, अध इति इदन्ताविमृश्यतया निकृष्ट ईषणीयज्ञेयकार्यात्मा जीवः; सोमरूपतया संसारिणां जीवित-स्थितिहेतुः, सैषा भगवती परा शक्तित्रयात्मना परापरेणापरेण च रूपेणोच्चरेत्—उत्कृष्टतयैव चरन्ती विश्वाभेदस्फुरत्तया प्रसरन्ती सदा स्थितेति कृत्वा उत्पत्तौ मेयपदे, द्वितयशब्दवाच्ये प्रकाश्यप्रकाशकसंघट्टरूपे प्रमाणपदे, स्थान इति तदुभयविश्रान्तिधाम्नि प्रमातृपदे, भरणात् 'त्रिषु चतुर्थं तैलवदासेच्यम्' (शि० सू० ३-२०) इति दृष्टव्य। पराभट्टारिकात्मतुर्यानन्दाप्लावनाद् भरिता स्थितिः (वि० भै० वि०, पृ० १८) उभयत्र (टिप्पणी संख्या १४१ एवं १४६)। शाक्तोपायत्वे किं प्रमाणम्? स्वयं टीकाकृ-देव, येन "चतुर्थपञ्चमयोः (व्याख्यानयोः) सर्वाहंभावभावनात्मकशुद्धविकल्पावमर्शरूपः शाक्तः" उपनिबद्धः।
२. स्त० चि० वि०, पृ० ४७
३. स्तो० १३.७
४. स्तो० १३.१५
५. स्तो० १३.१९

# शिवाभासवादः

डा० श्रीरामचन्द्रद्विवेदी, दिल्लीविश्वविद्यालयस्थः।

परं तत्त्वं प्रपञ्चात्मना कथं स्फुरति ? कश्च प्रपञ्चस्य परतत्त्वेन सह संबन्धः ? परतत्त्वस्य सत्यत्वेऽपि प्रपञ्चस्य किं रूपमित्यादीन् प्रश्नान् समाधातुं भारतीयदर्शनेषु विविधा वादा विद्यन्ते। तत्र सांख्याः सुखदुःखमोहात्मकं सर्वं वस्तु सत्त्वरजस्तमोगुणानां साम्यावस्थायास्त्रिगुणात्मिकायाः प्रधानकारणभूतायाः प्रकृतेर्विकृतिरिति प्रतिपद्यन्ते, सा च प्रकृतिरचेतनापि कर्त्री चेतनपुरुषसान्निध्याद् जगदात्मना परिणमते। सोऽयं परिणामो वास्तवः समनुगतश्च ( Synthetie )। सती प्रकृतिः सदात्मना परिणमत इति प्रकृतिवद् विकृतेरपि वस्तुसत्यत्वम्, अन्योन्याभिभवाश्रयजननमिथुनवृत्तीनां त्रयाणां गुणानां परस्परोपमर्दकत्वेऽपि सहावस्थानाद् मानवस्वभावस्य वैचित्र्यम्, वस्तूनां च बहुरूपत्वम्, समनुगतत्वम् ( Synthesis ) सुखदुःखमोहात्मकतया प्रपञ्चस्य पार्यन्तिकं वस्तुभिन्नं गुणरूपत्वं च कापिलैराश्रीयते साध्यते च। प्रपञ्चः प्रकृतेः परिणाम इति, कार्यं च सदिति व्यवस्थापनात् सांख्यानां पक्षः प्रकृतिपरिणामवाद इति सत्कार्यवाद इति च भण्यते। अथेयं प्रकृतिः प्रपञ्चसृष्ट्यर्थं केन हेतुना प्रवर्तते ? विवेकज्ञानेन करणेन प्रतिपुरुषविमोक्षार्थमिति चेत् ? किमिदं विवेकज्ञानं पूर्वतः सदसद्वेति प्रतिप्रश्नः परिस्फुरति। सच्चेत् ? प्रवृत्तेर्वैयर्थ्यापत्तिः, असच्चेन्मूलहानिः। नहि भवतां पक्षे किञ्चिदसद्भवति; सच्चात्मानं जहातीति सर्वार्थानां सम्भवात् प्रधानं किमर्थं प्रवर्तत इति वक्तव्यम्। प्रवृत्तेर्निमित्तमभिव्यक्तिरिति चेत् ? साऽप्यभिव्यक्तिः प्राक् प्रवृत्तेः सती आहोस्विदसतीति पूर्ववत् पङ्कप्रसङ्गः।

अचेतना च प्रकृतिः सविवेकं निर्विवेकं वा प्रवर्तते। आद्ये पक्षे प्रयोजनचिन्तायाश्चेतनधर्मत्वात् प्रकृतौ तन्न सङ्गच्छते, द्वितीये पक्षे "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य"[1] इत्युक्तदिशा प्रवृत्तेः सांसिद्धिकत्वस्वीकारे प्रकृतेः परिणामे सर्वसंविद्गोचरः क्रमः कस्मादाविर्भवति, व्युत्क्रमश्च कथं नोदेतीति समाधेयम्। कस्माच्च

---

१. सांख्यकारिका, ५७

सृष्टिः प्रयोजनवतीत्याश्रीयते ? सर्वं चेदं स्वभावसिद्धमिति स्वीकारे कथं न स्वभाव-वादः शरणीक्रियते ? कस्मादिदं निर्हेतुकं निष्कामं च प्रकृतिसमालिङ्गनं विधीयत इति प्रतिब्रूमः । ततश्च "स्वार्थ इव परार्थ आरम्भः[1]", "या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य[2]" इत्यादिवाचोयुक्तिरपि न क्षोदक्षमतां सहते । पुरुषमोक्ष-विचारस्तदर्थं प्रवृत्तिर्दर्शनगोचरतावबोधे च सति प्रपञ्चोपरतिरित्यादिकं सर्वं चेतनेनैव नियम्यते, न पुनरचेतनेन । अचेतनस्य प्रधानस्य अचेतनोऽयं प्रपञ्चात्मा परिणामश्चेतनाचेतनात्मिकामुभयां कोटिमाटीकत इत्यप्यसमञ्जसमेव ।

कणभुगक्षपादानुयायिनः सतः कारणादसत् पूर्वमविद्यमानं प्रागभावप्रति-बन्धकाभावावच्छिन्नमेव कार्यमुत्पद्यत इत्यसतः सञ्जायत इत्याचक्षते । सर्वोऽर्थश्च तेषां मतेन आरम्भः ।

न्यायवैशेषिकमते च परमाण्वादीनि सन्ति कारणानि कार्याण्यसन्ति आरभन्ते । अचेतनानि हि कारणानि परमाण्वादीनि कार्यं च चेतनाचेतनोभय-विशिष्टं भवति । विशेषश्च गुणात्मा । चैतन्यमचैतन्यं वा गुणस्तस्मिंश्च द्रव्ये समवेते सति द्रव्यं चैतन्यवदित्युच्यते । सत्कारणमचेतनम्, कार्यं च स्वभावतोऽचेतनं समवायिभिर्गुणैः संयुक्तं सच्चेतनं व्यपदिश्यते । पृथिव्यप्तेजोवाय्वाकाशादिद्रव्याणां मध्यान्तःपातित्वाद्[3] द्रव्यत्वसामान्यधर्मावच्छेदकत्वाच्च न्यायवैशेषिकमते आत्मापि स्वतोऽचेतनः, केवलं चैतन्यस्य ज्ञानस्य वा अधिकरणत्वात्[4] तेन गुणेन सहायुत-सिद्धयवस्थानाच्चेतन इति व्यवह्रियते । चैतन्येन समवेतश्चात्मा बद्धावस्थायां व्यव-हारदशा सर्वदैव चेतनो भवति, यथा हि न्यायनयेन वह्निरनुष्णः सन्नप्युष्ण इति । सोऽयं गुणसमवायो मुक्तावस्थायामेव व्यपगच्छति, तदानीमात्मनः स्वस्वरूपलाभात् । स्वरूपलाभे च गुणेभ्यो वियोगे सति ज्ञानाधिकरणतां हित्वा पाषाणवदात्मा भवतीत्या-स्थेयमेव । अत एव कश्चन परमभागवतो वैशेषिकीं मुक्तिं प्रयच्छमानामपि न कामयते, दूरतो जहाति । श्रूते च—

---

१. तत्रैव, ५६

२. तत्रैव, ६१

३. द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । ( तर्कसंग्रहे ) ।

४. ज्ञानाधिकरणमात्मा । ( तत्रैव ) ।

वरं वृन्दावनारण्ये शृगालत्वं भजाम्यहम्।
न तु वैशेषिकीं मुक्तिं प्रार्थयामि कदाचन ॥

पदार्थोत्पत्तेर्द्वितीय एव क्षणे गुणेन योगो विनश्यदवस्थायां च तद्वियोग इति चेतनतया व्यपदिश्यमानः पदार्थ आद्ये क्षणे निर्गुण एव तिष्ठतीत्यचेतनं सत् पूर्वतोऽविद्यमानमचेतनान्तरमसज्जनयति, आरभते वेति न्यायवैशेषिकवाचां विवेकः। एतेन फलितं यन्नैयायिका अपि सांख्या इव अचेतनं कारणमचेतनं च कार्यं व्यवस्थापयन्ति। अयमेव तु तेषां सांख्येभ्यो विशेषो यदत्राचेतनस्याचेतनत्वेन परिमाणो नाङ्गीक्रियते, अपि त्वारम्भ एव। अतो यदि सांख्यानां मतमचेतनपरिणामवादो विद्यते, तर्हि न्यायवैशेषिकानां मतमचेतनारम्भवाद इत्याख्यातुं प्रभूयते। परं वस्तुदृशा सूक्ष्मपर्यालोचनया वाऽनयोः कियान् भेदः ? किमारम्भवादं स्वीकुर्वन्तो नैयायिका वन्ध्यायाः पुत्रोत्सवमिव मन्यन्ते ? किं शून्यादेव यस्माद् कस्माच्चित् यत्किमपि प्रादुर्भवति ? तर्हि किमर्थमुपादानापेक्षा, किमर्थं च शक्तस्यैव शक्यकरणम्, किमर्थं च नासतो विद्यते भावः ? तदत्र ते ब्रुवते, कार्यस्योत्पत्तेः प्राग् तत्प्रागभावो भवति।

यथाहि घटस्योत्पत्तेः पूर्वं तत्प्रागभावः, अभावश्च तदनुयोगि-प्रतियोगि-चिन्तामन्तरा किं सम्भवतीति प्रश्ने, नेति नेति नैयायिकाः सावष्टम्भं सिद्धान्तयन्ति। घटप्रागभावप्रतियोगिनो घटस्य सत्त्वमादायैव स्वप्रतियोगिनं कुक्षौ कृत्वैव घटप्रागभाव आत्मपदं लभते। एवं च यदि कार्यस्य प्रतियोगिरूपेण चिन्तात्मिका सत्ताऽस्त्येव तर्हि को वा आरम्भ आरम्भ इति जुघुष्यते ? कथं न परिणाम एव किञ्चिद्भेदेनोरीक्रियते ? आरम्भः कारणात् कार्यं विशिनष्टि, कार्यं च पदार्थान्तरम्। अभिधेयत्वं ज्ञेयत्वं प्रमितिविषयत्वं च पदार्थसामान्यलक्षणमित्यभ्युपगमादिति चेत् ? भवतु अवान्तरः कश्चन भेदो व्यवहारप्रतिपादने, न त्वैतावता "अचेतनमचेतनत्वेनैव संपद्य प्रपञ्च इत्यभिधीयते, अचेतनपरिणामवादस्यैव किञ्चिद्भेदेनाचेतनारम्भवादो नामान्तरम्" इत्यसन्मतं प्रत्यवस्थेयम्। परिणाम आरम्भश्च कारणस्य कार्यतापादसम्बन्धिनीं प्रक्रियामेव विशेषयतो न पुनस्तयोः समानमचेतनरूपत्वम्। प्रतियोगिनश्चाभावे स्मरणादन्वितत्वाद्वा आरम्भवादोऽपि सर्वथाऽसन्तमर्थं न लक्षयति, किन्तु प्रागभावप्रतिबन्धकाभावयोरवश्यं स्वीकर्तव्यत्वादर्थस्य स्फुरणमभिप्रैति। अर्थस्य

स्वोत्पत्तिपूर्वक्षणे विजृम्भणमेव सत्तानुबन्धित्वम्, न्यायदृशापि सत्तासामान्ययोगस्य व्यवहारकालेऽविघटितत्वात् सर्वथाऽसन्नर्थ इति वक्तुं न पार्येत। इत्येवं स्वरूपतोऽ-अचेतनोऽयं प्रपञ्चोऽचेतनस्यैव कारणस्य क्रमेण प्रकृतेः परमाण्वादेर्वा परिणाम आरम्भो वेति सांख्यानां न्यायविदां चालोचनलभ्यः सिद्धान्तः फलति, कारणमचेतनं कार्यमपि तथैवाचेतनमिति व्यवस्थायां उभयत्र तुल्यत्वात्।

"सत्यं ज्ञानमनन्तं ब्रह्म"[1], "एकमेवाद्वितीयम्"[2], "सर्वं खल्विदं ब्रह्म", "नेह नानास्ति किञ्चन" इत्यादिवेदान्तवाक्यकुसुमलक्ष्म्यावर्जितहृदया वेदान्तिनस्तावदत्र विषये किं ब्रुवते? ब्रह्म ज्ञानमर्थाच्चेतनम्, स्वरूपतश्चेतनम्, न पुनः केनचिदागन्तुकेन धर्मेण चैतन्यात्मना तथा भवति; न वा कस्यचिच्चेतनस्य सान्निध्येन चेतनवदिव प्रति-भाति। तदेव च चेतनं ब्रह्म परमं कारणमतो वेदान्तिनामध्वनि चेतनं कारणं व्यवस्थितम्। किं रूपं च विषयविषय्यात्मकं कार्यम्? तद्रूपं तद्भिन्नं वा? तद्रूपत्वे तदात्मकत्वे वा जगतश्चेतनत्वं पर्यवस्येत्। तद्भिन्नत्वे च ब्रह्मणि द्वैतकक्ष्याधिरोहः। अक्षिणी निमील्य कार्यं जगन्नास्ति, नास्तीति शङ्करोऽपि न ब्रूयात्। यतो हि स स्वयमेव प्रपञ्चस्य सर्वलोकप्रत्यक्षत्वं स्वकण्ठत एव प्रत्यपीपदत्—"एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः"। अद्वितीयमेकं च ब्रह्म चेतनाचेतनव्यपदेशपतितस्यानन्तकर्तृभोक्तृसंयुक्तस्य विचित्ररचनाप्रपञ्चस्य संसारस्य मध्ये कथमात्मानं पातयति? कथं तदात्मना परिणमते? इति प्रश्नेऽविद्या-कृतोऽयं कर्तृत्वभोक्तृत्वभेदो मायीयश्चायं विचित्ररचनाप्रपञ्चः सत्यासत्य-विलक्षणां मिथ्यारूपां कोटिं स्पृशतीति शाङ्करा जगदुः। किन्त्वेकस्यैवानन्तत्वम्, "सर्वं खल्विदं ब्रह्म" इति च प्रतिश्रुतवत्य उपनिषदः सर्वस्य प्रपञ्चस्य ब्रह्मरूपत्वमेवोद्घोष-यन्ति। 'नेह नानास्ति' श्रुतिरपि न पूर्वां श्रुतिं विरुणद्धि। ब्रह्मात्मकतया ज्ञातस्य प्रपञ्चस्य "सर्वं खल्विदं ब्रह्म" इति चिन्तनया तदात्मकत्वेन व्यवस्थापितस्य सर्वस्य ब्रह्माभिन्नत्वाद् नानात्वरूपेण नानात्वपर्यवसायिना स्वरूपेण, अर्थाद् ब्रह्मभिन्नतया प्रपञ्चस्य सत्त्वं नास्तीत्येतावदेव "नेह नानास्ति किञ्चन" इत्यादीनां श्रुतिवाक्यानां स्वारस्यम्। तत एव नेतिनेतिश्रुतीनामुत्तरत्वम्, अन्यासां च ब्रह्मात्मत्वप्रतिपादनपराणां पूर्वत्वम्।

---

१. तै० २.१।

२. छान्दो० ६. २. १।

अपवादोऽप्यध्यारोपं पुरस्कृत्यैव प्रवर्तते। पुनश्च एकमनन्तमव्ययं ब्रह्म जगदात्मना भ्राजमानं कथं विकृतमिति दोषेण दूष्येत। अनन्तस्य अनन्तत्वेन स्थितौ नैकत्वं न वाखण्डितत्वं परिभूयेते। नानारूपत्वेऽप्येकत्वमित्येतावानेवाद्वितीयशब्दस्याभिप्रायः।

एतेन नानारूपस्य नामरूपात्मकतया विभक्तस्य प्रपञ्चस्य ब्रह्मरूपत्वं साधितं भवति, तस्यानन्तत्वात् पूर्णत्वादव्ययत्वाच्च। पूर्णमनन्तमेकं सदपि नानात्वेन परिस्फुरतीति स्वीकारे का वो हानिः? कथं वा ब्रह्मणि विकारप्रसङ्गः? पूर्णस्य पूर्णत्वग्रहणेऽपि पूर्णत्वं तु तदवस्थमेव,

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

पूर्णं ब्रह्म प्रपञ्चात्मना सन्न खल्वपूर्णतामेतीति कथमपार्थकमेव मायावादमाश्रित्य सहजसुभगमद्वैतं द्वैताभासतां नीयते। द्वैतकक्ष्याधिरोहाद्धि मूलस्यैव नाशः। उपनिषदामेवंविधमभिप्रायं प्रायेणान्यथा व्याचिख्यासन्तो वेदान्तकेसरिणः स्वमायाकान्तार एव विप्रलब्धाः सन्तो द्विविधं कार्यकारणवादं व्यवस्थापयन्ति। एकस्तु विवर्तवादः, अपरश्च परिणामवादो विकारवादो वा। तत्र "सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः; अतत्त्वतोन्यथा प्रथा विवर्त इत्युदीरितः"। अथवा "कारणसलक्षणोऽन्यथाभावः परिणामस्तद्विलक्षणश्च विवर्तः" इति हि प्रसिद्धे लक्षणे विवर्तपरिणामयोः। ब्रह्मणश्च विवर्तोऽयं प्रपञ्चो मायायाश्च परिणाम इति खलु ते संगिरन्ते। सेयं माया सती, असती, तदुभया, तदनुभया वेति नेदं वयमंत्र विवेचयामहे, किन्तु पारमार्थिकं सत्यत्वं ब्रह्मण इव मायाया नास्तीत्युभयवादिसम्भवमेवाचक्ष्महे। इत्येवं परं कारणं ब्रह्म, तच्च चेतनम्; जगच्च चेतनमचेतनं च। चेतनं कारणं कार्यं चांशतश्चेतनमित्युभयत्राप्येकदेशे समानलक्षणत्वात् कारणत्वलक्षणोऽन्यथाभावोऽस्तीति चेतनस्य चेतनः परिणाम उपनिषद्विद्यायाः स्वीकर्तव्यत्वात् चेतनपरिणामवादो वेदान्तनय आश्रितव्यः। अथाचेतनः प्रपञ्चः कथं व्याख्येयः? विवर्तवाद आस्थीयताम्। कारणविलक्षणश्चाचेतनोऽन्यथाभावो ब्रह्मण इति विवर्तवादस्तथैव सुकरः। प्रपञ्चस्य नानात्वदृशि विवर्तवादः, एकत्वदृशि च परिणामवादः प्रत्येय एव।

सर्वत्रैव दर्शनेषु परतत्त्वेन सह प्रपञ्चस्य यथावद्भाज्यमानस्य किञ्चिद्भेद आसाक्षात्कारं परिस्फुरत्येव। पार्यन्तिकाद्वैतदृष्टयभ्युपगमेऽपि व्यवहारे ब्रह्मणो भिन्नतया परिस्फुरन् प्रपञ्चः कथं वा ? कोऽपि तथा नास्तीति निवार्येत। यथा हि कश्चन चन्द्रमेकं जानानोऽपि दोषवशाद् द्विचन्द्रप्रतीतिं पारवश्यादभ्युपयाति, तथैवाधिगतार्थोऽपि तत्त्वज्ञो व्यवहारस्य परतत्त्वेन सहाभेदाभ्युपगमेऽपि प्रत्यक्षे प्रपञ्चस्य भिन्नतया प्रतीतेः स्खलद्गतिर्भवति।

ज्ञानेन साधितापि प्रतीतिः परिस्फुरता व्यवहारेण परिबाध्यते। स्खलन्ती चेयं ज्ञानगतिरद्वैतेऽपि द्वैतमवभासयतीति विवर्तवादो ह्यनधिगतसाक्षात्काराणामेव कारणवैलक्षण्यप्रतिपादकः सिद्धान्तः। वैलक्षण्याभ्युपगमे हि संसारस्य किं नाम क्षीयते, एतेन हि परतत्त्वस्यैव परमाद्वैतं विकलीक्रियते। अथ ब्रह्मणः परिणामस्वीकारे न तथा दोषावकाशः। कामं किमप्याश्रीयताम्—ब्रह्मापेक्ष्यैव प्रपञ्चः परिणामो विवर्तो वेति व्याख्येयम्, अन्यथा द्वैतं महता प्रयत्नेन निवारितमपि गृहान्नापैति। अथ वन्ध्यापुत्रवत् प्रपञ्चस्य सर्वथाऽसत्यत्वं तदंशे च मायापरिणामित्वं तु न कोऽपि प्रत्येति। तथा चोक्तं माण्डूक्ये—

असतो मायया जन्म तत्त्वतो नैव युज्यते।
वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते॥

एतेन मायापरिणामवादस्तु सर्वथा निराकृतो भवति। 'सर्वं खल्विदं ब्रह्म' इति श्रुतिवाक्यं श्रद्दधानैरस्माभिः प्रपञ्चस्य यदा ब्रह्मरूपत्वमास्थीयते तदा परिणामवादः, यदा च तद्भिन्नत्वमास्थीयते तदा विवर्तवाद इत्युभयथापि कारणं चेतनमेव, तस्य च प्रपञ्चेन सलक्षणविलक्षणात्मकश्च संबन्धः। वेदान्तिनां चेतनपरिणामवादश्चेतनविवर्तवादो वा सांख्याचार्याणामचेतनपरिणामवादात्, नैयायिकानां चाचेतनारम्भवादाभिकामं भिन्न इत्यत्रैवास्माकमधुना हृदयम्।

वेदान्तेषु चेतनं कारणं कथं चेतनाचेतनत्वेन प्रतिभातीति प्रश्नपरिणामशङ्कितधिय आचार्या उभयथापि प्रतिपद्यन्ते। तद्रूपं तद्भिन्नं च, कारणसलक्षणं कारणविलक्षणं च जगदिति। कारणं तु प्रायेण एकमेवामनन्ति। द्वैतवासनावासितहृदयास्तु वेदान्तैकदेशिनो मायायाः ससम्भ्रमालिङ्गनसुखेनाद्वैतं विस्मारयन्ति। माया कारणं जगच्च तत्कार्यमिति स्वीकारे ब्रह्मणः परमकारणता किञ्चित् परिहीयते। किं कारणमिति प्रश्ने ब्रह्मेति ब्रह्मविदां श्वेताश्वतरोपनिषदि सम्यगाम्नातमुत्तरम्।

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" (तैत्ति० ३।१), "तज्जलानिति शान्त उपासीत", "आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमांल्लोकानसृजत" (ऐत० १।१।१) इत्यादीनि श्रुतिवाक्यानि, "जन्माद्यस्य यतः" (१।१।२), "तत्तु समन्वयात्" (१।१।४), "आत्मनि चैवं विचित्राश्च हि" (२।१।२८), तदनन्यत्वमारम्भणशब्दादिभ्यः" (२।१।१४), "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः" (१।४।१४), "योनिश्च हि गीयते" (१।४।२७) इत्यादीनि वेदान्तवाक्यकुसुमग्रथनार्थानि ब्रह्मसूत्राणि च ब्रह्मण एव कारणतां प्रतिष्ठापयन्ति। प्रतिपक्षाभ्युपगतानि प्रकृत्यादीनां कारणताप्रख्यापकानि मतानि निराकुर्वद्भिश्च सूत्रैः सर्वथा तदेव ब्रह्म कारणान्तरनिरासेन समर्थ्यते। नैतत्सर्वं मतं शास्त्रार्थं कलुषीकर्तुं प्रत्यवस्थेयम्। जगतो हि कारणविलक्षणत्वस्वीकारे भेदबुद्धिर्दुरुद्धारतया उत्तानधियं वेदान्तिनं भ्रमयतीत्यपि प्रेक्षावतां न विशिष्य निवेदनीयं भवेत्, विदितवेदितव्या हि ते भवन्ति। अत एवाहुरभिनवगुप्तपादाः—"मायापदं हि सर्वं भ्रान्तिस्तत्रापि तु स्वप्ने स्वप्न इव गण्डे स्फोट इवापरेयं भ्रान्तिः।"

कुल-क्रम-प्रत्यभिज्ञात्मकेषु त्रिषु मार्गेषु समासादितप्रसरं काश्मीरशैवदर्शनं रहस्याध्वनि कुले क्रमे चानुत्तरं परं तत्त्वमिति, प्रत्यभिज्ञा-प्रक्रियायां च प्रकाशविमर्शात्मकं शिवं परं तत्त्वमिति व्यवस्थापयति। असौ शिव एव परा संविदिति, स्वतन्त्रा चितिरित्यादिनामभेदैर्दर्शनदिशा स्मर्यते। अन्तःकृतानन्तविश्वरूपः शिव एव सृष्टिसंहाराडम्बरस्य प्रकाशकः।

अतोऽसौ परमेशानः स्वात्मव्योमन्यनर्गलः।
इयतः सृष्टिसंहाराडम्बरस्य प्रकाशकः॥
(तन्त्रालोके, २.३)

कुत्र केन वा हेतुना शिवो ग्राह्य-ग्राहक-ग्रहणभेदभिन्नं नानारूपं विश्वं प्रकाशयतीति प्रश्ने—

स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति।
(प्रत्यभिज्ञाहृदये, सू. २)

इत्याचार्याः सूत्रयामासुः। व्याख्यां चक्रुश्च तत्रैव वृत्तौ—

स्वेच्छया न तु ब्रह्मादिवदन्येच्छया। तयैव च, न तूपादानाद्यपेक्षया। एवं हि प्रागुक्तस्वातन्त्र्यहान्या चित्त्वमेव न घटेत। स्वभित्तौ, न तु अन्यत्र क्वापि। प्राग् निर्णीतं विश्वं दर्पणे नगरवद् अभिन्नमपि भिन्नमिवोन्मीलयति। उन्मीलनं चावस्थितस्यैव प्रकटीकरणमित्यनेन जगतः प्रकाशैकात्म्येनावस्थानमुक्तम्।

शिवेन प्रकाशितं जगदिदं तस्मिन्नेवामिश्रं सत् सर्वदा स्थितमित्यपि शैवाः सम्प्रतिपद्यन्ते। तथा चोक्तम्—

निर्मले मुकुरे यद्वद् भान्ति भूमिजलादयः।
अमिश्रास्तद्वदेकस्मिंश्चिन्नाथे विश्ववृत्तयः॥

(तन्त्रालोके, २.४)

सर्वोऽयं विश्वः शिवैक्येन स्थित इति शिवः सर्वाकृतिर्विश्वमयो वाऽभिधीयते। निराकृतिर्विश्वोत्तीर्णश्च शिवो विश्वावभासनवेलायां सर्वाकृतिर्भवति—

सर्वाकृतिर्विश्वमयो निराकृतिर्विश्वोत्तीर्णः।

(तन्त्रालोकविवेके, १.१०५)

अन्तः स्थितस्य विश्वस्य बाह्यत्वेनावभासः प्रकाशनमुन्मीलनमाभास उन्मेषो वेति शैवाः, विश्वस्योत्पत्तिरिति नैयायिकाः, परिणाम इति सांख्याः, विकार इति वेदान्तिनो जगदुः। प्रपञ्चस्य प्रमेयादिना प्रकाशने शिवस्यानुपहितं स्वातन्त्र्यं चकास्ति। विश्वस्य प्रकाशः प्रकाशितस्य च तस्य स्वात्माभेदेन सर्वदा स्थितिस्तत्परामर्शश्च प्रकाशविमर्शात्मके कर्तरि ज्ञातरि च शिवे सर्वथा निर्दोषम्। स्वतन्त्रो हि कर्ता। स्वातन्त्र्यमेव मुख्यं कर्तृत्वम्। सर्वक्रियासु स्वातन्त्र्ये च सति जगत् केन हेतुना प्रकाश्यते, कथं च लीयते? इत्यादीनां प्रश्नानामपि समाधानं भवति। स्वातन्त्र्याभावे कर्तृत्वस्याभावस्तदभावे च कारणताया अभाव इति स्वातन्त्र्यमेव मुख्यो धर्मः। अत एवाहुः—

सर्वाः शक्तीः कर्तृत्वशक्तिरैश्वर्यात्मा समाक्षिपति, सा च विमर्शरूपेति युक्तमस्या एव प्राधान्यम् (ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्, १.२१४)

तथा च तत्रैव—

चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमेशितुः ॥

इयमेव शक्तिः शक्त्यन्तराणि सर्वाणि समाक्षिपतीति प्रामुख्यमस्या एव । तथा चोक्तम्—

एक एवास्य धर्मोऽसौ सर्वाक्षेपेण विद्यते ।
तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः ॥

( तन्त्रालोके, १.६०७ )

इत्येवं सर्वोऽयं प्रपञ्चः प्रकाशः परमेशितुः । अन्तःस्थितस्यैव च बाह्यत्वेनाभासप्रपञ्च इत्यभिधीयते । प्रकाशात्मना प्रपञ्चेन सह सर्वदा शिव एकात्मा । षट्त्रिंशत्तत्त्वात्मना प्रविभक्तं जगत् शिवरूपेण सदा स्फुरति । शैवशासनये प्रपञ्चस्य शिवैकरूपत्वात् चेतनत्वं वास्तवत्वं च सिद्ध्यतः । जडवस्तुषु घटपटादिषु हि स्वातन्त्र्यं कर्तृत्वपर्यायं न भवति । तत एव तेषां तेन रूपेण सर्वदाऽवस्थानं भवति । किन्तु शिवस्तु महेश्वरत्वादनन्तरूपेण प्रकाशितुं सर्वथा समर्थः, न चानेन तस्मिन् विकारत्वं शङ्क्यम्; इदं तु तस्य स्वातन्त्र्यमेव प्रख्यापयतितमाम् । अत एवाहुः—

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्वं[1] संवित्त्वं तदत्यक्ष्यद्घटादिवत् ॥

( भास्कर्यामुद्धृतम्, पृ० १.१४५ )

अतो घटपटादय एव जडस्वभावाः स्वात्मानं रूपान्तरेणावभासयितुं न शक्नुवन्ति ।

वेदान्तिनां ब्रह्मणोऽपि जगदात्मना प्रकाशास्वीकारात् स्फटिकादिसन्निभं जडत्वमेव फलति । मायापरिणामवादस्वीकारे हि ब्रह्मणः स्वातन्त्र्यं परिहीयते । स्वतन्त्रश्च शिवो महेश्वरसारतामेव प्रख्यापयति । अत एवाहुः प्रत्यभिज्ञाहृदयकाराः—

"स्वतन्त्रशब्दो ब्रह्मवादवैलक्षण्यमाचक्षाणश्चितो माहैश्वर्यसारतां ब्रूते"

( प्रत्यभिज्ञाहृदये, पृ० २५ )

---

१. संविदेवाभ्युपगतस्वातन्त्र्यलक्षणादिच्छाविशेषादन्तःस्थितमेव भवजातमिदमित्येवं बाह्यत्वेनाभासयति, ( ईश्वरप्रत्यभिज्ञाविमर्शिन्याम् १.१८२-५ ) ।

प्रपञ्चस्य प्रकाशात्मतास्वीकारे सर्वेषामर्थानां चेतनत्वं पर्यवस्यति[1]। कथं न घटपटादयश्चेतनत्वेनाभासन्त इति परिप्रश्ने परमार्थवश्चेतना अपि भावा अचेतनया शिवेच्छया स्फुरन्तीति समाधानम्। गूढमव्यक्तं च चैतन्यं सर्वेषु जडत्वेन व्यपदिष्टेषु भावेषु वर्तते, तच्च चैतन्यं समाहितचेतसां योगिनामेव परिस्फुरति, न मितदृशामस्मादृशां वेति समाधानम्। तथाहि लोके जडत्वेन परिचायितानि पत्रपुष्पाणि विज्ञानस्फारवता वैज्ञानिकेन विदुषा चेतनानीति वैज्ञानिकोपकरणोपस्कृतया सूक्ष्मेक्षिकया दृश्यन्त एव। पुनश्च योऽयं दुर्घटो विषयविषयविभागः शाङ्करैराश्रीयते स द्वैतमेव पुष्णाति। यदि तमःप्रकाशवद् विरुद्धस्वभावौ विषयविषयिणौ तर्हि तौ समन्वयं कथमुपयातः? विरोधश्च तयोर्दुष्परिहरः स्यात्।

नहि पृथक् पृथक् परिक्षीणेषु स्रोतस्सु तदुह्यमानास्तृणोपलादयः समन्वयं कञ्चिद् यान्ति।

(भास्करी)

पाश्चात्त्यदर्शनजगति विषयविषयिणोरेकप्रवृत्तिः परस्परसम्बन्धश्च कथं भवतः? इति समस्याऽद्यापि समाधानं न प्राप्नोति। जडचेतनरूपेण भेदस्वीकारे अस्या समस्यायाः समाधानं कथञ्चिदपि न सुशकम्। जडचेतनयोरात्मानात्मनो-रिदमहमयोर्विषयविषयिणोर्वा तमःप्रकाशवद्विरुद्धस्वभावस्वीकारे तयोः सम्बन्धस्य समन्वयस्य च समस्या कदापि नापेयात्, भेदवादश्च पतेदिति कोऽयं मोह उभयोर्भेदाग्रहे?

परतत्त्वं चेतनं द्वैतं च तस्मिन्नस्तीति सिद्धान्तितेऽपि कथं व्यामुह्यते? विषय-विषयिणोर्विरुद्धो विभागश्चास्थीयते? शैवास्तु सर्वं प्रकाश्यं प्रकाशरूपमिति किञ्चि-दपि नाप्रकाशमिति[2] स्वीकुर्वाणा व्यवहारेऽपि परमाद्वैतमेव प्रतिष्ठापयन्ति।

---

१. संविदः स्वरूपं सर्वत्र वर्तते। पाषाणादयोऽपि चेतनास्तत एव ते वृद्धिमुपयान्ति। तथाहि भास्करः—पाषाणादिष्वपि तस्याः स्थितिरनिवार्यैव, शक्तियुक्तचैतन्ययुक्तत्वात्। अन्यथा वृद्ध्याद्यसम्भवात्। अत्र तरूणां चैतन्ये स्वकीयं केशादि, पाषाणादीनां चैतन्ये स्वकीय-मस्थिजातं साक्षितया स्थितम्...। भास्करी भा० १, पृ० २८७।

२. प्रकाशात्मा प्रकाशोऽर्थो नाप्रकाशश्च सिद्ध्यति।

नीलं पीतं सुखमिति प्रकाशः केवलः शिवः।
अमुस्मिन् परमाद्वैतप्रकाशात्मनि कोऽपरः॥
(भास्कर्यां भा० १, पृ० ५२)

सर्वेषां वस्तूनां विमर्शात्मकप्रमातृस्वभावेन सह तादात्म्याच्चैतन्यमेव भवति। तदेवाहुः—

"सर्वत्र वस्तुतो विमर्शात्मकप्रमातृस्वभावतादात्म्याहंपरामर्शविश्रान्ते-रजडत्वमेव पूर्वापरकोट्योः।" संविदा सह तादात्म्यापत्तिरेव हि चैतन्यव्यपदेशं लभते। इत्येवं देहसुखनीलपीतात्मकः सर्वोऽयं प्रपञ्चः प्रकाशमानत्वात्, अध्यवसायविषयत्वात्, स्मर्यमाणत्वात्, सङ्कल्पित्वात् संविद एव भित्तिभूततां प्रख्यापयति[1]। संविदः स्फुरणे एव सर्वं स्फुरति, तदस्फुरणे च न किमपि स्फुरतीति संविदा सह शिवेन सह सर्वदा एकीभावः प्रकाशितो भवति। प्रकाशविमर्शात्मकस्य शिवस्य प्रकाशः, परासंविदः आभासः, रहस्यदशा वा वामेश्वर्या एव वमनं सर्वोऽयं प्रपञ्चः—

"चितिशक्तिरेव भगवती विश्ववमनात् संसारवामाचारत्वाच्च वामेश्वर्याख्या सती...." (प्रत्यभिज्ञाहृदये, पृ० ६०)

आस्तां तावदतिप्रसक्तानुप्रसक्तेन। शिवाभासवादः, चिदाभासवादो वा शैवानामित्येतदेव वयं प्रतिपिपादयिषामः।

आभासश्च न खल्वन्यथाभावः, प्रत्युत अन्तःस्थितस्यैव बहिः प्रकाशनम्, उन्मेषः, उन्मीलनं वा। उन्मेषश्च सांख्यानां विकृतिलक्षणात् परिणामात्, योजन-वियोजनजन्याच्च नैयायिकानामारम्भात्, वेदान्तिनां चान्यथाप्रथनरूपाद् विवर्तात् सर्वथा भिद्यते। प्रकाशो ह्यत्र स्वतन्त्रायाः संविदः स्वीकृतो न पुनरचेतनायाः प्रकृतेः। पुनश्च परिणामे गुणानां साम्यं वैषम्यमुपैति, किन्तु शैवशासननये स्वतन्त्रः शिवः स्वस्वातन्त्र्येणाविकृतः सन् तत्तद्रूपेण स्वात्मानं प्रकाशयतीत्यत्र न वैषम्यावकाशः।

---

१. देहसुखनीलादि यत् किञ्चित् प्रथते, अध्यवसीयते, स्मर्यते, सङ्कल्प्यते वा; तत्र सर्वत्रैव भगवती चितिशक्तिमयी प्रथा भित्तिभूतैव स्फुरति। तदस्फुरणे कस्याप्यस्फुरणात्।
(प्रत्यभिज्ञाहृदये, पृ० ९४)

शिवप्रकाशश्च अचेतनारम्भात् सर्वथा विभिद्यते, नायं प्रपञ्चोऽचेतनोऽचेतनकृतो वा। जन्योऽपि नास्ति। अन्तःस्थितस्यैव बाह्यत्वापादनं हि प्रकाशः। वेदान्तिनां ब्रह्म चेतनं सदपि न स्वेच्छया स्वात्मानं जगदात्मना प्रकाशयति, तस्मिन् स्वातन्त्र्या-स्वीकारात् कर्तृत्वं नास्ति। शिवस्तु स्वतन्त्रः कर्ता। तस्य प्रकाशश्च न खल्वन्यथाभावः, न वा भ्रमः, न वा परमार्थतो विरुद्धधर्माक्रान्तिः। चेतनस्य चेतन एवायमवभासः। अवभासश्च सत्ता। स हि स्वभावः परमेशितुः। यदि शिवस्तत्तद्रूपेण स्वातन्त्र्येण न प्रकाशेत् तर्हि स्फटिकादिजडोपम एव स्यात्[1]। सत्येऽपि ज्ञानेऽपि ब्रह्मणि कर्तुमकर्तु-मन्यथाकर्तुं च स्वातन्त्र्यस्यानभ्युपगमाद् वस्तुदृशा जडत्वमेव सिद्ध्यति। तस्य 'सर्वज्ञं सर्वशक्ति' इति वचनमपि न प्रतिष्ठं भवति। यदि सर्वं नास्ति तर्हि कस्य ज्ञाता? यदि धर्मा न सन्ति तर्हि कथङ्कारं तत् सर्वशक्तीत्यभिधीयते? यत्र सर्वं कर्तुं स्वातन्त्र्यं नास्ति तस्य कुतो हि सर्वं स्यात्; मायाविजृम्भितमिति स्वीकारे तु महान् विप्लव इति पूर्वमेवावोचाम। चेतनं चेतनत्वेन स्वस्वातन्त्र्येण सर्वदा सर्वात्मनाऽऽ-भासते। न च तच्चेतनं पुंवद् व्यवहारयन्त्या ब्रह्मणि वास्तवं नापुंसकं संस्कारं विदधत्याः सर्वं प्रपञ्चं भ्रान्तपदे पातयन्त्या मायायाः परोक्षमपरोक्षं वा पारतन्त्र्यं भजत इति वादिनः शैवाः प्रपञ्चस्य शिवानतिरिक्तत्वं संविदेकात्मत्वं वा सिद्धान्तयन्त-श्चेतनाभासवादिनः सन्ति। एवमस्माभिरालोचिताः काश्चन दर्शनदिशः। तत्र अचेतनपरिणामवादः कापिलानाम्, स एव च नामभेदेन 'अचेतनारम्भवादः' नैयायिक-वैशेषिकाणाम्, चेतन-परिणाम-विवर्त-वादो वेदान्तिनाम्, चेतनाभास-वादश्च महाद्वैतवादिनां काश्मीरशैवानाम्।

सांख्य-वेदान्त-शैव-शाक्तमतानां कार्यकारणवादेषु समन्वयं प्रतिपिपादयिषुः सौभाग्यभास्करसेतुबन्धादीनां प्रणेता श्रीमान् भास्करराय: शक्तिपरिणामवादं निरूपयति। सांख्यानां प्रकृतिरचेतनापि सती परात्मिका, वेदान्तिनां शक्तिरपि ब्रह्म-कोटिप्रविष्टा, क्रमदर्शने शक्तिरेव परं तत्त्वम्, तस्मादेवैतद्दर्शनं देवीनयः कालीनय इत्यप्युच्यते। तन्त्रालोकटीकाकृता[2] जयरथेन क्रमदर्शनं महानयोऽतिनयश्चोच्येते स्मेत्यपि सूच्यते। अतः काश्मीरदर्शनस्य रहस्यसम्प्रदायेषु तान्त्रिकेषु च शक्तेरेवायं प्रपञ्चस्फारः,

---

१. "अहमेव प्रकाशात्मा प्रकाशे' इति हि विमर्शोदये स्वसंविदेव प्रमातृप्रमेयप्रमाणादिकृतार्थ-मभिमन्यते, न स्वतिरिक्तं काङ्क्षति" (भास्करी, भा० १, पृ० २४३)।

२. तन्त्रालोकविवेके, तृतीयभागे, पृ० १९५

शाक्तास्तु शक्तिमेव परतत्त्वेन निरूपयन्ति। प्रत्यभिज्ञादर्शने शिवस्य षट्त्रिंशत्-तत्त्वोत्तीर्णत्वस्वीकारेऽपि शिवशक्त्योस्तादात्म्यं स्वीक्रियते। शिवो यदा विश्वं स्रष्टुमुन्मुखो भवति तदा शक्तिरूपतां प्राप्नोति। विश्ववैचित्र्यावभासनोन्मुखस्य शिवस्यैव शक्तिरिति व्यपदेशः। इत्येवं सांख्ये, वेदान्ते, काश्मीरशैवदर्शने (विशेषतः क्रमदर्शने कुलदर्शने च), शाक्तमते[1] च सर्वत्रैव शक्तिः स्वीक्रियते। स्त्रीतत्त्वे च सृष्टिप्रक्रियाया व्याख्यानं सुलभम्। सैव च सर्वत्र 'स्त्रीरूपेण संस्थिता' परात्परा जगदुदय-स्थिति-संहृति-नियामिकेति शाक्ताः कथयन्ति।

श्रीमान् भास्करराय: सर्वेषां दर्शनानां शक्तेः परिणामवादस्वीकारे समन्वयं सम्भवं मनुते। तदनुसारं च एतत्सिद्धान्तस्वीकरणेन शिवस्याप्यपेक्षा नास्ति। शक्ति-रेव परं तत्त्वम्। तदेव धर्मो धर्मी च। तथा चोक्तं तेनैव सप्रमाणं यथा—"देवात्म-शक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतिभिः। शक्तिशक्तिमतोरभेदाच्च न ब्रह्मणो निर्धर्मक-त्वभङ्गः। तदुक्तं श्रीपद्मपादाचार्यैः—"आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः, अपृथक्त्वेऽपि पृथगिवावभासन्ते" इति। अत एव तादृशशक्तिविशिष्टमेव परं ब्रह्मेति तान्त्रिकसिद्धान्तः। तेन शक्तेरपि ब्रह्मकोटावेव प्रवेशः। संक्षेपशारीरकेऽपि—

"चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते" इति।

ततश्च शुद्धपटस्येव लाञ्छनाद्यसम्भवात् सान्द्रत्वापादिकाया अन्नरसस्थानी-यायाः शक्तेरेव सृष्टिजनकत्वम्। परशिवस्य सान्निध्यमात्रेणैव कारणत्वम्। तत्तु कारणता-वच्छेदकतायाः पर्याय एव। ततश्च शिवनिष्ठा शक्तिरेव सृष्ट्यात्मना परिणमते" (सेतुबन्धे, पृ० १३३) शिवनिष्ठा शक्तिस्तत्सान्निध्येन सृष्टिं निर्मिमीत इति प्रतिपादनेन हि भास्कररायः सांख्यानामेव पदाङ्कमनुधावति। इयानेव हि तस्य विशेषो यदचेतन-प्रकृतिस्थाने स चेतनां शक्तिं प्रतिष्ठापयति। प्रकृतौ पुरुषसान्निध्येन चेतना समुद्भवति, समुद्भवन्तीव वा प्रतिभासत इति सांख्यैः प्रतिपाद्यते। अत्र तत्सान्निध्यं शक्ते-श्चेतनतयाऽनपेक्षं भवति, अतो भास्कररायः शक्तेः शिवनिष्ठतां सहजसामरस्यसुभगां परिजिहीते। शक्तिमतः शिवस्यैव यदि परत्वं तर्हि किमनेन शक्तिपरिणामप्रतिपादनेन

१. शक्तिः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम्।
इच्छया संहरत्येषा जगदेतच्चराचरम्॥ (देवीभागवते)।

लब्धं स्यादिति वितर्क्यैव भास्करः परशिवस्य कल्पनमेवापार्थकं मनुते; सामरस्य-संमिश्रं परमाद्वैतं च वेदान्तिनां मायाद्वैते पातयति। शक्तेः परिणामवादः केनापि रूपेण सर्वत्रैव दर्शनेषु स्वीकृतः, कथं विभिन्ना दर्शनस्थितयो दिग्भेदेन मनाग् भिन्नाः, कथं च तासां समन्वयः सर्वथा सम्भवीति प्रतिपिपादयिषुर्भास्करराय उल्लिखति—

"औपनिषदानां पक्षस्तु परस्य चिद्रूपस्य ब्रह्मणः शक्तिर्मायाख्या। परं ब्रह्म तु विवर्तोपादानम्। अत एव जगतोऽपि मायिकत्वाज्जडत्वं मिथ्यात्वं च। अद्वैतश्रुतयस्तु पारमार्थिकव्यक्तिरेकैवेत्येवंपराः। सर्वं ब्रह्मेति सामानाधिकरण्यं तु बाधायामित्यादिः। तान्त्रिकाणां पक्षस्तु—परिचिन्निष्ठा या चिच्छक्तिरौपनिषदानामपि सम्मता, सैवानन्तरूपत्वान्मायेत्युच्यते। "परास्य शक्तिर्विविधैव श्रूयते", "माया चाविद्या च स्वयमेव भवति" इत्यादिश्रुतेः। तत्परिणाम एव प्रपञ्चः। अत एव च चिद्रूपः। चिद्विलासः प्रपञ्चोऽयमिति ज्ञानवासिष्ठात्। अत एव च सत्योऽपि सर्वं ब्रह्मेति सामानाधिकरण्यस्यात्यन्ताभेद एव स्वारस्यात्। न चाद्वैतश्रुतिविरोधः। विरोधापादकस्यैकस्य भेदस्यैव मिथ्यात्वाङ्गीकारादित्यादिः। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्, आत्मकृतेः परिणामात्, तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिवैयासिकसूत्राणामप्यस्मिन्नेवार्थे स्वरस इति स्पष्टमेव। एवं च पक्षद्वयेऽपि प्रपञ्चकारणतया शक्तेरावश्यकत्वे परशिव एवान्तर्गडुत्वान्नौपनिषदैः कल्प्यः, नहि घटं प्रति परिणामिमृत्तिकापेक्षया विवर्तरूपं किञ्चित्कारणान्तरमुपलभामहे। अत एवैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'यथा सौम्य एकेन मृत्पिण्डेन विज्ञातेन' इत्यादिदृष्टान्तप्रदर्शनं श्रुतिषूपपद्यत इति" (तत्रैव, पृ० १३५)

अथ शक्तेः परिणामस्वीकारे सा शक्तिर्धर्मः कुत्राऽवतिष्ठते ? धर्मिणमन्तरा शक्तेः किं कुत्र स्थितिरिति प्रश्नः स्वभावतो विजृम्भते। किन्तु शिवे धर्मिणि स्वीकृतेऽपि स धर्मात्मिकां शक्तिमन्तरा किमपि कर्तुं न प्रभवति। इकारः शक्तिः, शक्तिरहितश्च शिवः शव एव।

> परो हि शक्तिरहितः शक्तः कर्तुं न किञ्चन।
> शक्तस्तु परमेशानि शक्त्या युक्तो यदा भवेत्॥

एवं च क्षित्यादिकस्य कार्यस्य कारणमन्तरेणासम्भवात् कार्यत्वान्यथानुपपत्त्या कल्प्यमानोऽपि शिवः शक्तिहीनश्चेत् कारणं भवितुं नार्हति; शक्तिरेव हि

तस्मिन् कारणतां विजृम्भयति। यतः कारणं तदेव भवितुमर्हति यत्र 'उपादानागोचरापरोक्षचिकीर्षाकृतिमत्त्वम्' भवति, तच्चेच्छाज्ञानक्रियात्रितयशक्तिसंघटितं भवति। शिवकल्पनायामप्यनया दिशा शक्तिकल्पनाया आवश्यकत्वात् किमनेनान्तर्गडुना शिवेन, शक्तिरेव परं कारणमिति स्वीक्रियताम्। धर्मो धर्मिणमन्तरा नावतिष्ठत इति प्रश्नस्तु धर्मधर्मिणोरेकत्वकल्पनया सुपरिहरः। तथाहि भास्करराय:—

"शक्तिकारणतावादिनामस्माकं परशिवस्याकल्पने कार्यत्वानुपपत्तेरपरिक्षयोऽस्ति। धर्मत्वानुपपत्तिस्त्वेकस्यैव वस्तुतो धर्मधर्म्युभयात्मकत्वकल्पनयाऽपि सुपरिहरा।"

( तत्रैव, पृ० १३६ )

वस्तुतः शिवस्य शक्तेर्वा परिणामस्वीकारे कश्चिद्भेदो नास्ति। शैवदर्शने शिवशक्त्योरद्वयस्यायमेवाभिप्रायो यद्यथा शिवः शक्तिमन्तरा न किञ्चिदपि कर्तुं प्रभवति, तथैव शक्तिरपि शिवमन्तरा नावतिष्ठते। वह्निदाहकयोरिव, चन्द्रचन्द्रिकयोरिव, वागर्थयोरिव वा उभयोरपि नित्यं सामरस्यं परा संपृक्तिर्वा सर्वथैव विजृम्भते। केवलं "स्त्रीलिङ्गस्य पुलिङ्गविशेषरूपत्वम्" इति वैयाकरणानां मतमनुसरद्भिः शिवः परतत्त्वं प्रतिपाद्यते। शिवः कदापि शक्तिविमुक्तो न भवति। शिवस्यैव च किञ्चिदुच्छूनतावस्था शक्तिरिति व्यपदिश्यते। अतः शिवशक्त्योर्भेदमाश्रित्य शिवपरिहारोऽशिवायैव सम्पत्स्यते, सिद्धान्तश्च भज्यते। इत्येवं शक्त्यभिन्नः शिव एव परं कारणं भवतु। किं वा शक्तिमतां पराहतं भवति, शिवस्यैवावस्थान्तरा शक्तिर्जगन्निर्मात्री कल्प्यतां परं न तेन शिवतत्त्वं प्रत्यवस्थेयम्। चेतनं कारणं चिद्रूपत्वाच्चेतनश्चायं प्रपञ्च इत्युभयत्रापि शैवे शाक्ते च दर्शने समानम्। औपनिषदपक्षेऽपि ब्रह्मणश्चेतनत्वाद् जगतश्च तत्परिणामत्वेनात्र सिद्धान्तितत्वात् तत्रापि प्रपञ्चश्चेतनः सेत्स्यति। मायापरिणामवाददुराग्रहे तु सति प्रपञ्चस्याचेतनत्वं परमार्थस्य च चेतनत्वमिति चेतनाचेतनात्मको विरोधो दुष्परिहर एव भविष्यति। शैव-शाक्त-दर्शनयोरेतां समन्वयसरणिमनाश्रिताः शक्तिदृढाग्रहग्रहिला अस्माभिः पृच्छयन्ते, शक्तेः परिणामः कीदृशो भवति ? किं पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरूपः ? शक्तिवादिनां च मते शक्तिरेव धर्मः, सैव च धर्मिणी, तर्हि किं सृष्टिकाले शक्तिनिवृत्तौ शक्त्यन्तरोदयः स्वीक्रियते ? नो चेत् कोऽयं परिणामः ? "सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरोत्पत्तिः" अपि परिणाम इत्यभिधीयते, किन्तु शक्तिपरिणामवादिनां मतेन पूर्ववदेव शक्तेर्धर्मधर्मिरूपत्वाद् धर्मनिवृत्त्या सह धर्मिणोऽपि विनाश आपतेत्। तेन मूलस्यैव विनाशः।

शक्तावेकांशे धर्मत्वमपरांशे च धर्मित्वमिति खण्डबुद्धिस्तु विनाशायैव सेत्स्यति। नानाकारप्रतिभासो हि परिणाम इति तल्लक्षणस्वीकारे मायावाद आपतति, जगतश्चैतन्यं सत्यत्वं च सावष्टम्भं प्रतिपादितचरं नश्यतः। तदेवं धर्मलक्षणावस्थाभेदरूपस्त्रिविधोऽपि परिणामः शिववर्जितशक्तिपरिणामवादे न घटते। परिणामे च पुनर्यत्किञ्चिद्रूपोऽन्यथाभावो भवत्येव। सति चान्यथाभावेऽनिच्छतोऽपि वैषम्यं प्रकाममापतति। सति च वैषम्ये चैतन्यसत्यत्वस्वरूपभेदः प्रसज्यते, स च न तान्त्रिकाणामभिमतः। चिद्विलासोऽयं प्रपञ्चश्चितेः स्फारः, प्रकाशः, आभास एवेति वा स्वीकारे न कश्चिदप्यन्यथाभावरूपो विकारः सिद्धान्तं कलुषीकर्तुं क्षमत इति त्रिकदर्शनविदां शिवाभासवाद एव सुदर्शनानां दर्शनधियं प्रकाशयतुतमाम्। तत्रैव चास्माकं हृदयम्, तत्रैव च सर्वासां दर्शनविपदां समाधानम्। अन्यथावादे हि परतत्त्वेन सह सन्ततमैक्यमावहन् सम्बन्धो दुरुपपादो भवति, नहि दधिरूपेण स्वलक्षणविकारेण परिणतं दुग्धं कोऽपि दधिभावेन परिचिनुयात्। चेतनशक्तेः परिणामः, अचेतनप्रकृतेर्वा विकारः, अचेतनानामारम्भश्चेतनस्य वा ब्रह्मणः कारणविलक्षणो मिथ्याप्रत्ययरूपः प्रतिभास इत्यादिवादस्वीकारे सहजसुभगः परतत्त्वात्मा सम्बन्धो विघटते, कारणस्य कार्येण सह वैरूप्यापत्तिश्च भवति। सर्वोऽयं प्रपञ्चो यथावस्थित एव शिवप्रकाशस्तत्स्वातन्त्र्येण परिस्फुरतीति सिद्धान्तिते तु शिवोऽयं शिवोऽहमिति प्रत्यभिज्ञानं सुकरं सूपपादं च भवति, परतत्त्वेन सह द्वैतापादिकां भ्रान्तिं व्यवहारकालेऽपि निरस्य परमाद्वैतं सार्वत्रिकं प्रतिष्ठापयति। शिवस्य जीवजगतोश्च वस्तुतो कश्चिदपि भेदो नास्तीति नः सिद्धान्तः। यथा शिवो विश्वमयः सर्वाकृतिश्च तथैव 'चितिसङ्कोचात्मा चेतनोऽपि सङ्कुचितविश्वमयः'[1]। यथा शिवः षट्त्रिंशत्तत्त्वात्मनाऽऽत्मानं विभज्य विश्वं व्याप्य स्थितस्तथैव प्रमातापि सङ्कुचितचिद्रूपः सङ्कुचिताशेषविश्वात्मना भाति। यथाहुः प्रत्यभिज्ञाहृदयकाराः—

यथा च एवं भगवान् विश्वशरीरस्तथा चितिसङ्कोचात्मा सङ्कुचितचिद्रूपश्चेतनो ग्राहकोऽपि वटधानिकावत् सङ्कुचिताशेषविश्वरूपः, तथा च सिद्धान्तवचनम्– 'विग्रहो विग्रही चैव सर्वविग्रहविग्रही।' अतः शिव इव जीवोऽपि विश्वात्मको विश्ववपुश्च विद्यते। यथा समष्टिस्तथा व्यष्टिः। समष्टिव्यष्ट्योरात्मपरमात्मनोः, परतत्त्वतत्प्रकाशयोस्त्रिविधमलोद्भूतचितिसङ्कोचमन्तरा कश्चिदन्यो भेदो नास्ति।

---

१. प्रत्यभिज्ञासूत्रम्, ४

ग्राहकोऽप्ययं प्रकाशैकात्म्येन उक्तागमयुक्त्या च विश्वशरीरशिवैकरूप एव केवलं तन्मायाशक्त्याऽनभिव्यक्तस्वरूपत्वात् सङ्कुचित इवाभाति। सङ्कोचोऽपि विचार्यमाणश्चिदैकात्म्येन प्रथमानत्वाच्चिन्मय एव, अन्यथा तु न किञ्चिदिति सर्वो ग्राहको विश्वशरीरः शिवभट्टारकः। (प्रत्यभिज्ञाहृदये)

शिवः कारणं जीवश्च तदाभासत्वात् कार्यं तयोश्चाभेदाभ्युपगमात् कार्यकारणवाद एव व्याहतो भवतीति न वाच्यम्; वस्तुतः कार्यकारणयोरभेदविचार एव दर्शनप्रवृत्तेर्मूलम्, ऐकान्तिकात्यन्तिकाभेदसिद्धान्त एव सर्वेषां सद्दर्शनानां स्वारस्यात्। शैवशासननये च कार्यकारणयोरभेदसिद्धान्तेन तयोः सहावस्थानेन च व्यावहारिकं पारमार्थिकं चाद्वैतमेव साध्यते, तदेव च सिषाधयिषितम्। कार्यकारणवादश्च विश्वोत्तीर्णस्यैव विश्वमयत्वं व्याख्यातुं प्रवर्तते, न तदन्यथाकर्तुम्। चितेः स्वातन्त्र्यविजृम्भितश्चायं कार्यकारणभाव इति स्वातन्त्र्यशक्तेः पारमार्थिकत्वेन कार्यकारणभावोऽपि पारमार्थिकश्चेतनः सद्रूपश्च।

ननु जगदपि चितो भिन्नं नैव किञ्चित्। अभेदे च कथं हेतुहेतुमद्भावः? उच्यते—चिदेव भगवती स्वच्छस्वतन्त्ररूपा तत्तदनन्तजगदात्मना स्फुरतीत्येतावत् परमार्थोऽयं कार्यकारणभावः। (प्रत्यभिज्ञाहृदये, पृ० २२)।

अतः परमस्वतन्त्रस्य शिवभट्टारकस्य स्वातन्त्र्यविजृम्भितोऽयमाभासः प्रपञ्च इत्यभिधीयते, स एव संविद्विलासः, चिद्विलासः, चिदाभासः, चित्सत्ता, चित्स्फुरणमिति नामान्तरैर्व्यपदिश्यते। स चायमाभास उपादानसहकारिकारणादिपारतन्त्र्यं निरस्य शिवस्य स्वेच्छया स्वभित्तौ स्फुरति। शिव एव च तत्तन्नामभेदेन शक्त्यादिकमपृथग्भूतमुपादानं परिकल्प्य षट्त्रिंशत्तत्त्वात्मना चकास्ति। स एव परं कारणम्, स एव च जगदात्मना कार्यमप्युच्यताम्, तदतिरिक्तो न कश्चन कार्यकारणभावोऽपीत्येकस्यैव चेतनस्य चेतनरूपं कार्यमिति प्रतिपादनेन पारमार्थिकं परमाद्वैतं व्यवहारेऽपि प्रतिष्ठितम्।

शिवाभासवादिनश्च शिवस्वातन्त्र्यमेव जगत उपादानादिकारणसम्भारं मन्यन्ते। स्वातन्त्र्ये कर्तृत्वं प्रतिष्ठितम्, कर्तृत्वमेव च कारणत्वम्। यथा हि 'योगिनामिच्छामात्रेण पुरसेनादिवैचित्र्यनिर्माणम्' दृश्यते, तत्र उपादानं प्रसिद्धमृत्काष्ठ-शुक्रशोणितादिवैचित्र्यमयं न सम्भवति; पुनश्च 'योगी कुम्भं निर्मिमाणः कुम्भकारप्रसिद्धसमस्तसामग्रीसमर्जनपुरस्सरं घटं घटयन् कुम्भकार एव स्यात्' इत्युपादानकारणान्तरचिन्तया स्वातन्त्र्यं व्याहतं भवेत्। अतो योगिसंविदस्तादृशी शक्तिः स्वीकार्या, यया प्रसिद्धोपादानादिकारणचिन्तां विनैव योगिनिर्माणं भवति। योगीव च शिवो वर्तमानावभासानां भावानामवभासनमन्तःस्थितवतामेव बाह्यरूपतया घटयति[1]। अत एवाहुरुत्पलाचार्याः—

१. वर्तमानावभासानां भावानामवभासनम्।
अन्तःस्थितवतामेव घटते बहिरात्मना॥ (ई० प्र० का० १.५.१)

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ।।
( ई० प्र० का० १,५,७ )

शिवस्य कवेरिव योगिन इव वा निरुपादानक एव जगत्सर्गस्तत्तदात्मनाऽवभासमानश्च स शिवस्वरूपादनतिरिक्तः । तथा चाहुः—

निरुपादानसम्भारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ।।
( स्तवचिन्तामणौ ९ श्लो० )

देश-काल-क्रिया-मूर्तिवैचित्र्यकृता अपि भेदाः शिवेनैवाभास्यन्ते, न पुनः काल-स्वभाव-नियति-यदृच्छारूपाणि' शिवमतिरिच्य वर्तमानानि कानिचिदन्यानि तत्त्वान्तराणि सन्तीत्यपि स्पष्टमेव । कार्यकारणभावश्च कालादिकृतो भवति, तेषां च शिवरूपत्वात् स शिव एव कारणं कार्यं तद्भावघटकश्च । तत एवाहुरभियुक्ताः—

मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ ।
क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ।।
सर्वत्राभासभेदोऽपि भवेत् कालक्रमाकरः ।
विच्छिन्नभासः शून्यादेर्मातुर्भातस्य नो सकृत् ।।
देशक्रमोऽपि भावेषु भाति मातुर्मितात्मनः ।
स्वात्मेव स्वात्मना पूर्णा भावा भान्त्यमितस्य तु ।।
( ई० प्र० का० २.१.५-७ )

सर्वे भावाश्च शिवात्मकाः, अतस्ते चेतनाः, सद्रूपाः, नित्याश्च । शिवस्य प्रपञ्चस्य च महार्थविमर्शेन कश्चिदपि भेदो नास्ति । यदिदं यद्रूपेण यत्र येन यदोपलभ्यते, तत्सर्वं तद्रूपेण शिवस्वरूपम्, शिवस्वातन्त्र्यविजृम्भितमिति । एकस्यैवानन्तस्यानन्तरूपोऽयं चेतनः सत्यश्च विलासस्तस्मान्न भिद्यते—

यस्मादेतत् समुत्पन्नं महादेवाच्चराचरम् ।
तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः ।।
शिवतत्त्वात् समुत्पन्नं जगदस्मान्न भिद्यते ।
फेनोर्मिबुद्बुदाकारो यथा सिन्धोर्न भिद्यते ।।
यथा पुष्पपलाशादि वृक्षरूपान्न भिद्यते ।
तथा शिवात् पराकाशाज्जगतो नास्ति भिन्नता ।
( सि० शि० परि० १० )



# आम्नायस्वरूपम्

श्रीकृष्णमूर्तिशर्मा, मुम्बापुरीस्थः

अथास्मद्गुरुवर्यपादरेणुमकरन्दालङ्कृतनिजशीर्षप्रसूनसुगन्धो वासयति युष्माभिर्महत्प्रयत्नेन श्रद्धया दिव्यशक्तिनियन्त्रितभारतीयतन्त्रसम्मेलनस्यायोजनम्। इदानीन्तनमानुष्येऽखिलभूमण्डलरत्नतेजोत्पन्नद्युत्यालङ्कृतधाम्ना विराजमानेऽस्मिन् कर्मभूम्याख्यभारते विशेषजन्मप्राप्त्या वयं सर्वे सर्वशक्तिमन्तः पुरा आस्म। परन्त्वधुना अधर्मस्य सम्पूर्णताण्डवयुक्तस्य लीलाविनोददर्शनेनानवाप्तसमस्तदिव्य-कामाः स्मः। प्राक्तनसमये—

पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना केन तपः प्रपेदिरे।
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन् दधावधर्मोऽपि कृशस्तपस्विताम्॥

इति पद्यस्यावलोकनं सत्यमभूत्। किन्तु साम्प्रतं कालस्य कुटिला गतिः, पाश्चा-त्यकलासु पारतन्त्र्याद् (केषाञ्चिद्विषये स्वातन्त्र्यादपि) लब्धप्रतिष्ठा, एतत्पूर्वं स्ववैदिकधर्मकर्मत्यागः, श्रुतिविरुद्धदर्शनार्पितसर्वस्वमित्येतैश्चतुर्भिः पदैरधर्मः "अन्धेनैव नीयमाना यथान्धाः" इति प्रकारेण स्वनृत्याकर्षणेन भारतीयानस्मान् सर्वानज्ञातकूपे पातयिष्यतीति सुदृढा शङ्का सञ्जाता।

अस्मिन्नवसरेऽस्माभिः किं कर्तव्यमित्यालोचनायाम्, जगदानन्ददोग्ध्र्या गुर्व-भिन्नाया आनन्दोल्लासकमलवदनात् कटाक्षरूपेण महदनुग्रहाय निर्गता श्रुत्यभिन्ना वेदमन्त्रैस्तन्त्रितोज्जीवनकारकजागरणप्राप्त्यैव सञ्जातसकलदुरितक्षयद्वारा अग्निं सदैवेच्छन्, वेदतान्त्रिकप्रोक्तमार्गावलम्बनेन सद्गुरुदिव्यदृष्ट्यवलोकनसंप्राप्त-दीक्षाऽभिषेकाख्यनित्यकल्याणप्रसूतसर्वसौभाग्यमाङ्गल्यनाथा भूत्वा महतीगर्भित-त्रिजन्मनाथित-आनन्दवृष्ट्या सुसंरक्षितोऽस्मद्भारतो नित्यकुसुमितचिरन्तनफलितः पुनरतिशीघ्रं भवेदित्यस्मच्छ्रीगुरुवर्याणामाशासनमस्मच्चिरन्तनवैभवायात्र प्रकटीकुर्मः।

सुप्रसिद्धमिदं श्रुतिवाक्यम्—"अग्निमिन्धध्वं भारताः", "उत्तिष्ठत, मा स्वप्त", "पृथिवीदीक्षा" इत्यारभ्य "सवितृप्रसूतामादिशो दीक्षयन्तु", "वेदानां माताऽ-मृतस्य नाभिः''''हविषा वर्धयामसि", "केवलाघो भवति केवलादी। अग्निमुखा एव

देवताः प्रीणाति । अग्निं देवतानां प्रथमं यजेत् ।" एतादृशा असंख्याकाः श्रुतयो ज्ञाताः खलु भवादृशैः प्रकाण्डपण्डितैः । सर्वाः श्रुतयोऽग्नीषोमात्मकमखिलमानन्दभवं विश्वम्, यस्य प्रादुर्भावेऽग्निर्नादः सोमो बिन्दुरित्येतयोर्योगस्फुरितकलां भजत इत्युद्घोषयन्ति । हिरण्यकेशिसूत्रव्याख्याने--"यज्ञं व्याख्यास्यामः" इति वैजयन्तीकृतवृत्त्यारम्भः ।

गच्छता महता कालेन सृष्टिशक्तिप्रदिष्टस्वविकासबुद्ध्याऽस्माभिर्जगदवलोकनं न कृतम् । तदन्तर्विद्यमानायास्तस्याः शिवशक्तिस्वरूपरसानुभवं नावगतम्, न विज्ञातञ्च । महता प्रयासेन भण्डशक्तेरुद्दण्डानर्थक्यवशमुपागम्य कलियुगगतिप्रसारितस्यास्य विश्वस्य पराकाष्ठारूढा दिव्यानन्दजनितबुद्धिशक्तिः पाश्चात्त्यैरिति चेति निर्दिष्टविधिभिरुदरनिमित्ताय वञ्चिता भूत्वा विक्रयं कृताः सन्तः शक्तिमन्तोऽपि तात्कालिकनिर्बलत्वेन क्लैव्येन वा परेषां चक्षुर्विषये आत्मविषयेष्वपि प्रकाशमुपगताः स्मः ।

हन्त ! धिक् । यदि महर्षिभिर्गोत्रोत्पादकमहनीयैर्येषां लोहितमेकैकस्य भारतीयस्य धमनीचक्रे बहुजन्मतपोबलादद्यापि प्रवहति, प्रवहेच्चानुष्ठितश्रुत्यान्वित आर्षधर्मस्याखण्डामृताम्नायस्वरूपप्रतिष्ठानन्दवर्षः पूर्वगतसप्तशतैः किं वा सहस्रवर्षैः प्रतिष्ठितदृश्यमानश्रूयमाणश्रुतिस्मृतीतिहासपुराणालयेषु लब्धो विद्यते, तर्ह्यस्मिन् प्रत्यक्षनिजब्रह्माण्डेऽनेकशो नानाप्रकारैरनुभूयमानविविधाध्यात्मिक-आधिभौतिक-आधिदैविकोपाधीनां कथमुद्गमः स्यात् ? किं बहुना स्थितिः ?

यद्यपि मेरुशिखरोपमा विविधदर्शनग्रन्था बहुभाषासु भारते तथान्यदेशेष्वप्युपलभ्यन्ते, वाराणस्यामिदानीं श्रीमतां तत्रभवतां विद्वद्भूयिष्ठसभामण्डपे उपर्युक्तप्रश्नस्योपरि पारस्परिकविचारविनिमय आवश्यको भवति; विलम्बो न कार्यः । वेदानामागमानां तथैवाम्नायानां रसोक्तिराशयश्च "द्विपदे चतुष्पदे शंभव तु" इति अस्मद्धृदयगतं खलु । वेदमन्त्रैरग्निम्, अग्निमुखात् त्रयस्त्रिंशत्कोटिदेवताः, तेषां स्वरूपिणीं सृष्टिकर्त्रीं च संतर्प्य को मनुष्यः सुखी, आनन्दी च न भवेत् ?

दृग्दृश्ययोरन्तरभूत आकाश एवास्मद्भारतदेशः । आम्नायानामयोगेन विद्यां प्रशिथिलामिवेति भवादृशानां विदुषां विदितमेव महाकविश्रीकालिदासस्यामृतपद्यम् । तस्मादेवाद्यप्रभृति निरन्तरविधिना श्रुत्याम्नायानामध्ययन-मनन-निदिध्यासनोपासनादिकर्मकुशलसमुद्रावगाहन जनितविचित्रवीर्यजृम्भितशक्त्यनुग्रहपात्रभूताः सन्तो भारतं सर्वैरप्यप्रतिद्वन्द्वभूषाभूषितं द्रष्टुं योग्यतां प्राप्नुमः ।

एतावतेदानीमलमुपर्युक्तोपोद्घातेन। इदानीमाम्नायस्वरूपं वक्ष्यामः। मन्त्रास्त्रिविधाः—आम्नायोदिताः, स्मृतिसूचिताः, पुराणप्रदर्शिताश्चेति। उत्तमादिभेदेन तत्राप्याम्नायमन्त्राणां श्रैष्ठ्यम्। तत्राप्याम्नायाश्चत्वारः—ऋग्यजुस्सामाथर्वनामभिः, पूर्वदक्षिणपश्चिमोत्तरभेदेन। पूर्वाम्नाय ऋग्वेदः, दक्षिणाम्नायो यजुर्वेदः, पश्चिमाम्नायः सामवेदः, उत्तराम्नायोऽथर्ववेदः। आम्नायः, श्रुतिः, वेद इति पर्यायवाचकाः। परमेश्वर्यास्तस्या द्वारा परमेश्वरस्य निश्वासरूपो वेदः (अत्राथर्वश्रुतिर्द्रष्टव्या)। "यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्" इति च। आम्नायस्तु श्रीपरमेश्वरेण तदर्थभूतः श्रीप्रियां प्रति प्रव्यक्तमुक्तः। श्रीपरमेश्वरस्य स्पष्टवचनमाम्नायनिश्वासरूपो वेद इति स्पष्टार्थः। "मम पञ्चमुखेभ्यश्च पञ्चाम्नाया विनिर्गताः" इति परमशिवकण्ठोक्तिः। पञ्चदश्युपासकेभ्यः प्रदिष्टाम्नायाश्चत्वारः। एतेषु चतुर्ष्वाम्नायेषु पृथक्कृतानेकदेवतातृप्ति-सिद्धि-फलप्रदमन्त्राः संख्यागुणिताः सन्ति। तदुपरि विद्यमानषोडश्युपासकैरितरौ द्वौ आम्नायौ ऊर्ध्वाऽनुत्तराख्यौ अवश्यमेवानुष्ठातव्यौ यष्टव्यौ च। पूर्वोक्तपञ्चाम्नायाः सिद्धान्तान्तर्गताः शिवोदितत्वेन प्रतिपादितत्वेन च श्रुत्यभिन्नाः स्वयं प्रमाणभूताः। दीक्षायां तदङ्गत्वेन त्रैपुरसिद्धान्तं शिष्यैः स्वगुरुवर्येभ्यः श्रवणीयम्। उपरि प्रोक्तसिद्धान्तवाचकः पदस्त्रैपुरसिद्धान्तवाचकः। सम्यगवगतं खल्वस्माभिः षट्त्रिंशत्तत्त्वैरोतःप्रोतमिदं विश्वं प्रकृत्यारभ्य शुद्धविद्याख्यानि षट्त्रिंशत्तत्त्वानि, येषां विवेचनं सृष्टि-स्थिति-लयस्वरूपं च भार्गवकल्पसूत्रे विशदीकृतम्, अन्यतान्त्रिकग्रन्थेष्वप्युपलभ्यन्ते। ऊर्ध्वाम्नायः सिद्धान्तचरमसोपाने तिष्ठन् यद्यपि कौलात् पूर्वं विद्यते; तथापि शाम्भवपीठद्योतकः परशिवस्वरूपप्रवेशानुग्रहकरोऽस्माभिर्मण्डनीयोपासनीयो भवति। अत्रेदं बोध्यम्—कलौ युगे तन्त्रेणैव पूजा कर्तव्या, श्रीललिता यष्टव्या च।

> मन्त्रान् तान्त्रिकवैदिकान् परिपठन् सानन्दमत्यादरात्
> पूजां ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु।

इति कल्पने तान्त्रिकवैदिकयोः समुच्चयलेखनेन तान्त्रिकत्वं वैदिकत्वमविरुद्धमभिप्रेतं स्पष्टं च। एतस्मिन्नवसरे निम्नलिखितश्रुतिगुप्ततेजःपुञ्जे यद्यन्तर्यागः कृतो भवेत्, तदा सुदृढं विश्वसिमो युष्मदायोजिततन्त्रसम्मेलनसार्थक्यम्।

> श्रीचक्रे ब्रह्मणि श्रीशिवमिथुनमये केवलेऽस्मिन् परे च
> कामेशस्याङ्कदेशे विलसति ललिता केवलानन्दवल्ली।
> नित्यं वो दिव्यकौलक्रमविहितरहोयागसन्तर्पिता सा
> वेदानां लक्ष्यभूता वितरतु परमा मङ्गलं ब्रह्मयोनिः॥

"अन्तर्हितो हि देवलोको मनुष्यलोकात्", "प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट् छन्दसां ज्योतिर्विराट् वाचोऽग्नौ संतिष्ठते, विराजमभिसंपद्यते, तस्मात् तज्ज्योतिरुच्यते", "प्रजामनु प्रजायसे", "तदु ते मर्त्यामृतम्।"

आम्नायाः षट्, तेषां बाहुल्ये प्रमुखतया विलसन्ति वैदिकमन्त्रा एव विशदीकृतविविधविविधार्थाः। श्रीपरमेश्वरेण स्वाम्नायेषु दयितामुपदिष्टाः, श्रीमदूर्ध्वाम्नायवर्णनेन श्रीवरवर्णिनीवदनमाह्लादितम्। इत्थं विभूत्यालङ्कृतभारतस्वर्णभूमौ विरलैः श्रीविद्यामार्गानुयायिभिर्दीक्षितैरप्यवगताश्चत्वार आम्नाया एव तेषां सपर्यायां गृह्यन्त इत्यस्मच्छ्रुतिपथमानीतः। बहूपासकैः पञ्चमाम्नायः संपूर्णतयानवगत इत्यस्मदभिप्रायः। यद्येवं नास्ति चेत्? अहं कृतार्थो भवेयम्। लिखिताः प्रकाशिता ग्रन्था यद्यपि बह्वोऽस्मिन् सुगूढविषये नोपलभ्यन्ते; तथाप्यवाप्तप्रकाशग्रन्थेपूर्ध्वाम्नायो यथाश्रुतविस्तरतां न प्राप्तः, किं बहुनानुत्तराम्नायेन। समुच्चितोर्ध्वाऽनुत्तराम्नायौ विना न कदापि ललितानित्ययागः संपूर्णतां याति, पूर्णसिद्धिं च प्रसौति।

भगवान् परमशिवभट्टारकः श्रुत्याद्यष्टादशविद्याः सर्वाणि दर्शनानि लीलया तत्तदवस्थापन्नः प्रणीय संविन्मय्या भगवत्या भैरव्या स्वात्माभिन्नया पृष्टः पञ्चभिर्मुखैः पञ्चाम्नायान् परमार्थसारभूतान् प्रणिनाय।

तत्पुरुषाख्यश्रीमुखेन प्रणीतपूर्वाम्नायस्त्रैलोक्यमोहनादिसर्वसंक्षोभणान्तचक्रत्रितयस्य सृष्टिचक्राह्वयस्य वर्णनमित्थं करोति—पूर्वाम्नायस्य दिक् प्राची ऋग्वेदेनोज्ज्वलिता। एतत् सृष्टिचक्रं पूर्वाम्नायाधिदेव्या समयिन्या उन्मोदिन्या (उन्मन्या वा) मण्डितम्। अस्मिन् सृष्टिचक्रे पूर्वाम्नाययजनं कार्यम्। भूपुरत्रयषोडशदल-अष्टदलाख्यचक्रत्रये पूर्वाम्नायदेवतां मुक्तातपत्रच्छायोपविष्टाम्, पद्मरागारुणाम्, रक्ताभरणवस्त्रानुलेपनाम्, पाशाङ्कुशवराभयकराम्, रत्नमुकुटार्पितचन्द्रलेखां ध्यात्वा, वाग्भवत्रितारीयुक्तपूर्वाम्नायबीजेन गुरुत्रयगणपतिपीठत्रयसहितशुद्धाविद्यादिसमयदेवतान्तश्चतुर्विंशतिसहस्रदेवतापरिसेवितकामगिरिपीठतर्पणं पूजनं च कार्यम्। इह गुरुत्रयं स्पष्टं संप्रदायोपदेशावलम्बनेन। गणपति-गिरिगणपति-क्षिप्रगणपति-सिद्धिगणपति-नवनीतगणपति-शक्तिगणपति-उच्छिष्टगणपति - एकाक्षरीगणपत्यादिमन्त्रोपास्तिफलप्रदः सन्नस्मिन् पीठे विराजते। पीठत्रयं तावद् ब्रह्मात्मशक्तिसहितकामगिरिपीठः, विष्णवात्मशक्तिसहितपूर्णगिरिपीठः, रुद्रात्मशक्तिसहितजालन्धरपीठ इति। शुद्धाविद्यादिसमयदेवतान्तान्तराले शुद्धविद्या-त्र्यक्षरीबाला-बालाहृदयविद्या-द्वादशार्धा-राजमातङ्गी-लघुश्यामला-हसन्तीश्यामला-शुकश्यामला-शारिका - श्यामला-वीणाश्यामला-वेणुश्यामला-कर्णमातङ्गिका-गायत्री- पूर्वोक्तगणपतिमन्त्रैर्लसितमहागणपतिः, कुमार-सुब्रह्मण्य-स्कन्द-मृत्युञ्जय-रुद्र-अमृतमृत्युञ्जय-नीलकण्ठ-समस्तविषनाशननीलकण्ठ-नीलकण्ठरुद्र-त्र्यम्बक-मृतसञ्जीविनीरुद्र-मृतसञ्जीविनी-जातवेदाः - प्रत्यङ्गिरा-ब्राह्मीप्रत्यङ्गिरा-नारायणीप्रत्यङ्गिरा - रौद्रप्रत्यङ्गिरा-भद्रकालीप्रत्यङ्गिरा - तत्पुरुषश्री-अकाररूपसृष्टिकर्ता ब्रह्मेत्यादिसहितकामगिरिपीठालङ्कृतसमयदेवतोन्मोदिनी मोदमाविष्करोति यष्टॄणाम्।

भगवान् परशिवभट्टारकः स्वेनाघोराख्यकमलवदनेन जगतः स्थितिजिघृक्षया दक्षिणाम्नायं प्रासूत। सर्वसौभाग्यकरादिसर्वरक्षाकरान्तं चक्रत्रयं स्थितिचक्रम्। एतद्दक्षिणाम्नायसेव्यम्। तत्र दक्षिणाम्नाययजनं कर्तव्यम्। दक्षिणाम्नायस्याशा दक्षिणा यजुर्वेदेन पुष्पिता। चतुर्दशकोणान्तर्दशारबहिर्दशाराख्यस्थितिचक्रे दक्षिणाम्नायाधिदेवतानां समयाधिष्ठात्री भोगिनीदेवी उद्यत्सूर्यसहस्राभा नानालङ्कारभूषिता रक्तवस्त्रानुलेपना वामाद्यूर्ध्वयोस्तदाद्यधःस्थयोः करयोः पाशाङ्कुशपुस्तकाक्षमालाधरेति सादरं ध्येया। एतद्दक्षिणाम्नायपीठः पूर्णगिर्याख्यः। भैरवसिद्धौघवटुकत्रयपदयुगसहितसौभाग्यविद्यादिसमयदेवतात्रिंशत्सहस्रदेवतापरिसेवितः। अत्र महादुर्मनाम्बा सुन्दर्यम्बा विश्वदलनाम्बा कपालिकाम्बा वडवाम्बा भीमाम्बा करालयम्बा खराननाम्बा विधिशालिन्यम्बा चेति सिद्धौघतर्पणप्रीताः। स्कन्दचित्रविरिञ्चयो वटुकाः प्रकाशविमर्शाख्यं चरणं पदयुगम्। सौभाग्या बगला महावाराही आपदुद्धारणं वटुकस्तिरस्करिणी अघोरः शरभो भेतालः खङ्गरावणो वीरभद्रो रौद्रमनुः शास्ता पाशुपतास्त्र-ब्रह्मास्त्र-वायव्यास्त्रदेवताभिः समुज्ज्वलितमिदं स्थितिचक्रम्। उग्रभैरव-अङ्गभैरव-अघोरभैरव-भीमभैरव-विजयभैरव-रक्तभैरव-स्वर्णाकर्षणभैरवादिभिः सुरक्षितम्। अखिललोकोपास्यमौलिस्रक्च्युतमकरन्दरेणुगौरश्रीविद्योपासकानां विशेषतो विस्मयफलप्रदप्रासाद-दक्षिणामूर्त्तिमेधा-लक्ष्मी - कीर्त्ति - ज्ञान-साम्ब - वीर-संहार - अपस्मारनिवर्तकेत्याद्यसं - ख्याकैः कल्याणनामरूपसिद्धिफलवितरणदक्षत्वेन स्वयं प्रकाशेन विश्वं सुस्थित्या विकासयति, कैरवचक्रवालं चन्द्र इव।

ततः पश्चिमाम्नायो विवक्ष्यते। एतदाम्नायः श्रीसंहारावस्थापन्नस्य श्रीपरमेश्वरस्य सद्योजाताख्यतृतीयमुखारविन्दाद्विनिस्सृतः। संहारो नाम व्यक्तसृष्टेः परिणमयित्र्यां शक्तौ लयः। परिणमयित्री शक्तिर्न केवलं संहरति; सृजत्यपि। पूर्वपूर्वावस्थासंहार एवोत्तरोत्तरावस्थासर्गो भूतानाम्। एकैव क्रिया द्व्यर्थकरीत्युक्तं भवति। "अहमेव" "विश्वा" इत्यथर्वमन्त्रोऽत्र सूचीक्रियतेऽस्माभिः। सर्वरोगहरादि-सर्वानन्दमयान्तं चक्रत्रितयं संहृतिचक्रम्। एतत् पश्चिमाम्नायसेव्यम्, यजनं कार्यं च। सामवेदोऽस्याम्नायस्य मूलत्वेन गण्यते, अस्मिन्नेवास्य प्रतिष्ठा विद्यते। पश्चिमदिशि सर्वालङ्कारसंयुक्तो निजरश्मीन् प्रसौति। नवयोनिसंज्ञके अष्टकोण-त्रिकोण-बिन्द्वाख्ये संहृतिचक्रे पश्चिमाम्नायाधिदेवतां पञ्चमुण्डासनां बालार्कसहस्रप्रभां मुण्डमालां रक्तवस्त्राभरणानुलेपनां वामाद्यूर्ध्वतदाद्यधः पाशाङ्कुशाभयवरकरां त्रिनेत्रां ध्यात्वा पुनर्योन्याम्बा योनिसिद्धनाथाम्बा महायोन्यम्बा महायोनिसिद्धनाथाम्बा दिव्ययोन्यम्बा दिव्ययोनिसिद्धनाथाम्बा शङ्खयोन्यम्बा शङ्खयोनिसिद्धनाथाम्बा पद्मयोन्यम्बा पद्मयोनिसिद्धनाथाम्बा चेति दूत्यः, वह्निसूर्यसोममण्डलत्रितयानि सृष्टिवीरस्थिति-वीरसंहारवीररक्तवीरयमवीरमृत्युवीरभद्रवीरपरमार्कवीरमार्तण्डवीरकालाग्निरुद्रभैरवे - ति वीरभैरावाष्टकं (वीरद्रव्याष्टकम्), मङ्गला-चौण्डिका-ज्येष्ठाकन्तुकिपटहा-कूर्मा-धनदा-

गन्धा-गगना-मतङ्गा चम्पका-कैवर्ता-मावङ्गगमना-सूर्यभक्षा-नभोभक्षा-स्रौतिका-रूपिका-दंष्ट्रा-धूम्राक्षा-ज्वाला-गान्धारा-गगनेश्वरा-माया-महामाया-नित्या-शान्ता-विश्वा-कामो - माश्रिया-सुभगा-विद्या-महाविद्या-अमृता-चन्द्रान्तरिक्षा-सिद्धा-श्रद्धानन्ता - शम्बरोल्का - त्रैलोक्या मलिना-प्रचण्डानङ्गा-त्रिविधाऽनभिहिता-नन्दिमहामनासुन्दरा-विश्वेश्वरा-काला-महा-भीमा-राक्षसीकाला-भयाविकारा-महाविकारा-सर्वगा-शृगाला-पूतना-शर्वरी-व्योमा-पूर्णा-नाथसिद्धाः, लोपामुद्रा-भुवनेश्वरी-अन्नपूर्णा-मातृका-कामकला - सुदर्शन - गरुड-कार्तवीर्य-नृसिंह-नामत्रयरामसीताराजगोपालराधाकृष्ण - गोपालविद्याप्रदकृष्ण - सन्तानगोपाल-गोपाल-सौरधन्वन्तरीन्द्रजालिमाया-महादेवी-इन्द्रजालित्रिया-इन्द्राग्नि - यमनिर्ऋतिवरुण -वायु-कुबेरेशानेन्द्राक्षी-सर्ववादिनीन्द्रा-दत्तात्रेयवासुदेवनारायणदेवताः पृथक् पृथगिष्ट्वा, सद्योजातमन्त्रेण सद्योजातं सन्तर्प्य, सशक्तिकं त्रितारीमुच्चार्य मकाररूप-संहारकर्त्रे रुद्राय हुत्वा, पूर्ववच्च शक्तियुक्तत्रितारीं पूर्वमुच्चार्य, दूतीदशकमण्डलत्रयवीर-दशकचतुष्षष्टिसिद्धनाथसहितलोपामुद्रादिसमयदेवतान्तत्रिसहस्रदेवतापरिसेवितजाल - न्धरपीठं युगपत्पूजनतर्पणेनाराध्य, पश्चिमाम्नायं समयदेवतां कुब्जिकां च यजेत ।

अथोत्तराम्नायस्य निम्नलिखित–यथासमयोचितविस्तृतविवक्षा युष्मदग्रत आभाति। भगवता स्वतुरीयमुखेन प्रणीताम्नायोऽसौ। एतस्याशोत्तरा, अथर्ववेदेन सकलीकृतम् । त्रैलोक्यमोहनादिसर्वानन्दमयान्तचक्रनवकात्मकं समष्टिचक्रम्। एतदुत्तराम्नायसेव्यम्। अत्रैवोत्तराम्नाययजनं कर्तव्यम्।

समष्टिचक्रे भूपुरादिबिन्द्वन्तचक्रनवके उत्तराम्नायाधिदेवतां पञ्चमुण्डासनां बन्धूककुसुमारुणदेहवस्त्राभरणानुलेपनां चन्द्रचूडां मुण्डमालाधरां त्रिनेत्रां वामोर्ध्वादि-तदधोऽन्तं पुस्तकाक्षमालां वराभयकरां सन्ध्यात्वा, ततः सर्वसंक्षोभिण्यादिसर्व-योन्यन्तनवमुद्राः, ब्रह्म-विष्णु-रुद्र-ईश्वर-सदाशिवाख्यपञ्चवीरावलयः, तुरीयाम्बा-महाधर्म्बाऽश्वारूढा-मिश्राम्बा-वाग्वादिनी-वनदुर्गा-शूलिनीदुर्गा-शूलिनीजातवेदोदुर्गा - शान्तिदुर्गा-शबरिदुर्गा-ज्वलदुर्गा - लवणदुर्गा-दीपदुर्गा-सुरदुर्गा-विद्याराज्ञी-महाकाली - चण्डिका-नकुली-पुलिन्दिनी-रेणुका-लक्ष्मी-वागीशा-मातृका-स्वयम्वरा-ब्राह्मी-माहेश्वरी - कौमारी-वैष्णवी-वाराही-माहेन्द्री-चामुण्डा-महालक्ष्मीत्याख्याः शक्तयोऽष्टावेकैकेन यष्ट्वा, महावाक्यचतुष्टयं चाराध्य ( यथाविधि ) वामदेवेति मन्त्रेण वामदेवम् , अर्धमात्रा-कारं तिरोधानकर्तारमीश्वरं च सन्तर्प्य, मायाबीजयुक्तया त्रितार्या सह नवमुद्रा-पञ्चवीरावलीसहिततुर्याम्बादिसमयदेवतान्तद्विसहस्रदेवतापरिसेवितोड्याणपीठाय पूजा-ऽऽहुतिं च दत्वान्ते उत्तराम्नायदेवतां कालीं यजेत्। ऊर्ध्वानुत्तराम्नायविवक्षाऽस्मच्छ्री-गुरुदम्पत्योर्विशेषाज्ञां विनाधुना पत्रपथमानेतुं न शक्नुम इति शम्॥



# माहेश्वरागमसिद्धान्तसारः

बलजिन्नाथपण्डितः काश्मीराभिजनः

तुर्यतदतीतदशयोर्यः परः साक्षात्कारः स एव वस्तुतो मुख्यतया आसमन्तादर्थं शिवादिधरण्यन्ततत्त्वजातं गमयति पारमार्थिकस्वरूपतस्तथाविधस्वभावतश्च बोधयति साक्षात्कारयतीत्यागमोऽन्वर्थनामा। तदीदृशेन निर्विकल्पसाक्षात्कारेण यत्साक्षात्कृतं तत्तु विकल्पात्मकैर्मध्यमावैखरीमयैः शब्दैर्नैव यथार्थतया वर्णयितुं शक्यं स्वयं बृहस्पतिनापि। ततोऽरुन्धतीन्यायेन परसाक्षात्कारसमृद्धैर्महर्षिभिर्यथा कथञ्चित् तदुपवर्णितं शास्त्रेषु। तानि परसाक्षात्कारानुसारीणि शास्त्राणि त्वमुख्यतयैवागमसंज्ञानीति मतं श्रीमतामभिनवगुप्ताचार्यपादानाम्। प्रतिपादितं चैतत्तैर्विस्तरत ईश्वरप्रत्यभिज्ञाविमर्शिन्यां विवृतिविमर्शिन्यां च क्रियाधिकारे प्रमाणनिरूपणाह्निके।

तदेवंविधेषु गौणरूपतयागमसंज्ञकेषु शास्त्रेषु तेषामेवाचार्यमहोदयानां मतेन माहेश्वरागमा एव सर्वोच्चा आगमाः। ते च रुद्रयामलमालिनीविजयोत्तरस्वच्छन्दप्रभृतयः। तेष्वागमेषु प्रतिपादिता दार्शनिकसिद्धान्ता यत्र तत्राक्रमेणोपदिष्टा अपि नैव सुकुमारमतिभिरवबोद्धुं शक्याः, नापि शिष्यान् प्रत्यवबोधयितुमपि शक्या इति कृत्वाऽद्वैतशैवदर्शनमठिकाया विंशतितमो गुरुर्वन्द्याभिधानस्तत्रभवान् सोमानन्दाचार्यः पञ्चावयवात्मकन्यायशास्त्रशैलीमनुसृत्य शिवदृष्टिनामकं शास्त्रं निर्मितवान्। तस्मिन् शास्त्रे शैवदर्शनसिद्धान्ताः सपूर्वोत्तरपक्षपरीक्षणं सविस्तरं सोपपत्तिकं च निरूपिता आचार्यमहोदयेन। तस्य शिष्येणाचार्योत्पलदेवमहोदयेन शिवदृष्टौ निरूपिता एव सिद्धान्ताः सुविशदं पुनर्निरूपिता ईश्वरप्रत्यभिज्ञायां सिद्धित्रय्यादौ च। उत्पलदेवप्रशिष्य आचार्याभिनवगुप्तमहोदयस्तानि शास्त्राणि सम्यग् व्याख्यातवान्। सिद्धान्तप्रयोगोभयवस्तुसुप्रकाशकं तन्त्रालोकाख्यं प्रसिद्धं शास्त्रमपि निर्मितवान्। अन्येऽपि वसुगुप्तकल्लटप्रभृतयः शिवसूत्रस्पन्दकारिकादिशास्त्राणि जग्रन्थुः। तेषु शास्त्रेषु ये शैवदर्शनसिद्धान्ताः प्रतिपादितास्तेषां सारोऽत्र निबन्ध उपनिबध्यते।

## परमेश्वरः

अस्ति तावदात्मा स्वतःसिद्धः स्वयंप्रकाशः। आब्रह्मकीटपर्यन्तानां जन्तूनां विनैव बुद्ध्यादिकरणसाहाय्यमहमित्यात्मनः स्वत एव सिद्धेः। नहि क्षुद्रोऽपि

जन्तुरेतत् स्वीकरोति यदहं नास्मि। सर्वेऽपि जीवाः क्षुद्रा वा महान्तो वाऽहमात्मकस्यात्मनो निरपेक्षां सत्तां साक्षात्कुर्वन्त्येव। जाग्रति तावदसावात्मा देहबुद्ध्यादिसंभिन्न एवाहमित्यभिमन्यते। स्वप्ने देहावधीरणपुरस्सरं बुद्ध्यादावेवाहमित्यभिसन्धिर्भवति। स्ववेद्ये सौषुप्ते पदे बुद्ध्यादेरपि प्रकाशनाभावेन शुद्धे प्राणेऽपवेद्ये च तत्र प्राणाद्युत्तीर्णे शून्य एवासावभिमानोऽहमिति प्रकाशते। काव्यनाटकादिरसाद्यास्वादसमये, एवं प्राये वाऽन्यत्राप्यवस्थाजाते निजदेहबुद्ध्यादिकृतः सङ्कोचोऽहमिति प्रत्यये विगलतीव क्षणमात्रम्। अपरिमितभावश्चोदेति तत्कालमहमित्यात्माभिसन्धिप्रत्ययस्य। तदियं कतिपयक्षणस्थायिनी तुर्यावस्था, यां सहृदया जना विनैव योगाद्यभ्यासं साक्षात्कुर्वन्ति। एतस्यां तुर्यभुवि किमपि प्रकाशविमर्शसमरसरूपं सकलेऽपि प्रपञ्च ओतं सकलेन च प्रपञ्चेन प्रोतं तत्त्वमहमित्यस्य प्रत्ययस्यालम्बनं भवति। देहबुद्धिप्राणशून्यप्रकाशनाभावेऽपि खल्वेतस्य प्रकाशविमर्शसमरसाकारस्य संवित्तत्त्वस्य प्रकाशो भवत्येव, देहाद्याभासे सत्यप्यस्य तत्त्वस्य प्रकाशः सर्वथा स्थगितो नैव भवति, यतो देहाद्याभासोऽपि प्रकाशविमर्शात्मक एव। देहादिसम्भिन्नत्वमेव तुर्यभुवोऽस्याभासस्य विशेषः। तदसौ प्रकाशविमर्शसमरसाकारा संविदेव वस्तुत आत्मा। प्रकाशरूपत्वेनासौ संवित् सदैव स्वत एव प्रकाशते, विमर्शात्मकत्वेन च सततमात्मानं विमृशन्त्येवास्तेऽहमिति। तदेतत् प्रकाशरूपत्वमस्या ज्ञानम्, विमर्शात्मकसंरम्भरूपत्वं चास्याः क्रिया। तेनात्मा ज्ञानक्रियास्वभावः। देहादिसम्भिन्नत्वेऽपि ज्ञानक्रियास्वभावत्वमात्मनः स्वत एव सिद्धं सर्वस्य, यतो सर्वोऽपि कृमिपर्यन्तो लोक आत्मानं ज्ञातारं कर्तारं च स्वत एव जानाति। योगिसंवेदने पुनः संविदात्मन आत्मतत्त्वस्य सर्वथा ज्ञानक्रियाविषयं स्वातन्त्र्यं सुतरां विद्योतते। रहस्यसम्प्रदायोपदिष्टानामुत्कृष्टानां योगानामभ्यासेन वास्तविकस्यात्मतत्त्वस्य परिपूर्णायां प्रत्यभिज्ञायां सञ्जातायां साधकस्यैवं विश्वासो भवति यदहमेव स्वयैव शक्त्या सर्वत्रोतः, सर्वं च मदीययैव शक्त्या मय्येव प्रोतम्, परिदृश्यमानमिदं सर्वं मदीय एव विलास इत्यहमेव स्वशक्तिविजृम्भया सर्वमिदमिति। उक्तं चाभिनवगुप्तपादैरनुत्तराष्टिकायाम्—

त्वत् सङ्कल्पज एष विश्वमहिमा नास्त्यस्य जन्मान्यत-<br>स्तस्मात्त्वं विभवेन भासि भुवनेष्वेकोऽप्यनेकात्मकः॥ इति।

(अनुत्तराष्टिका, ५)

तदित्थं सकलप्रपञ्चोल्लासनविलापनादिघनतरस्वातन्त्र्यः संविद्रूपोऽहमात्मक आत्मैव परमेश्वरः। तस्य च परमेश्वरत्वं ज्ञानक्रियास्वातन्त्र्यम्। देहादिसम्भेदयुक्तायां जीवदशायामपि ज्ञानक्रियारूपमस्यैश्वर्यं स्वत एव सिद्धम्। यतः सर्वेऽपि कृमिपर्यन्ताः जीवाः किमपि ज्ञातुं कर्तुं च समर्थाः सन्तः सततमेवैतदुभयोन्मुखा एव दृश्यन्ते। तज्ज्ञानक्रिये आत्मनः स्वभावभूते स्वीकर्तव्ये। करणादिपाटवसाचिव्येन साधनादिसम्पत्त्या चैतस्यात्मनो ज्ञानक्रियात्मकस्य स्वभावस्य विशेषतोऽभिव्यक्तिरेव भवति, न तु जनिः। नैसर्गिकत्वमेव मूलतोऽस्य स्वभावस्य। देहकरणादीनामुत्तरोत्तरमुत्कृष्टेनोत्कृष्टतरादिना च तेन पाटवेन ज्ञानक्रियात्मकस्यात्मनः स्वभावभूतस्यैश्वर्यस्योत्तरोत्तरमेवोत्कृष्टोत्कृष्टतरादिरूपाभिव्यक्तिः सञ्जायते। ततः क्षुद्रोऽपि प्रत्येको जीवः स्वकीये देहादौ तत्सम्बन्धिनि च वस्तुजाते सर्वं ज्ञातुं कर्तुं च स्वतन्त्रः सन् क्षुद्र ईश्वरः। गृहस्वामी पुनः सर्वस्य गृहस्येश्वरः। ग्रामणीर्ग्रामस्येश्वरः। विषयाध्यक्षो विषयस्य, प्रदेशाध्यक्षः प्रदेशस्य, राष्ट्रस्वामी राष्ट्रस्य, चक्रवर्ती महाद्वीपस्य, चक्रवर्तितमः पृथिव्याः, इन्द्रस्त्रिलोक्याः, प्रजापतिर्भुवनचतुर्दशकस्य, विष्णुर्वैकुण्ठं यावत् सकलस्य लोकजातस्य, रुद्रस्ततोऽप्यूर्ध्वम्, ईश्वरसदाशिवौ विद्यातत्त्वपर्यन्तस्य सकलस्यैश्वर्यभाजः। एते सर्वेऽपि लाघवो वा महान्तो वेश्वरा यस्यैश्वर्यप्रुड्भिरीश्वरीभूताः स सर्वथाप्यनवच्छिन्नैश्वर्यस्वभावः सकलमपि स्वेच्छया कर्तुं ज्ञातुं च सर्वथा समर्थो भगवान् महेश्वरः। तस्यैश्वर्यस्य विजृम्भितं खल्वेतद् यदनन्तप्रकारदेहभुवनप्राणिप्रभृतीनां सृष्टिसंहारादिप्रपञ्चः। उक्तं चैतत् स्वसंवेदनसिद्धत्वं स्वात्मपरमेश्वरस्योत्पलदेवपादैरीश्वरप्रत्यभिज्ञायाम्—

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः॥ इति।

(ई० प्र० १-१-२)

## पूर्णाहन्ताविमर्शः

षट्त्रिंशत्तत्त्वानि, चतुर्दश भुवनात्मकानि ब्रह्माण्डानि, निवृत्त्यादयः पञ्चकलाः, अकलादिसकलान्ताः सप्तकोटिभाजः प्रमातारः, तुर्यातीतादिजाग्रदन्ताः पञ्चावस्थाः, प्राणादिव्यानान्ताः पञ्चप्राणाः, मन्त्राद्या षडध्वानः—इत्येवंप्रकारं सर्वमपि तस्मिन् परिपूर्णकर्तृज्ञातृस्वरूपे परमेश्वरे वर्तत एव सततम्। चेत्तत्र नैव वर्तेत, तर्हि तदिच्छयापि कथं बहिः सृष्टिकाले विसर्ज्येत। यदेव यस्यान्तस्तिष्ठति तदेव तस्माद्बहिरा-

गच्छेत्। अन्तर्बहीरूपता चात्र नैव देशकृता ज्ञेया। देशकालाकारैरपरिच्छिन्ने परमेश्वरे तथाविधाया अन्तर्बहीरूपताया वक्तुमशक्यत्वात्। ततोऽत्राहमात्मकप्रमात्रैकरूपत्वमान्तरत्वमिदमात्मकप्रमेयरूपत्वं च बहिष्ट्वम्। उक्तं चेश्वरप्रत्यभिज्ञायामेव—

"प्रमात्रैकात्म्यमान्तर्यं ततो भेदो हि बाह्यता" इति।

(ई० प्र० १-८-८)

तदेतद्बोद्धव्यं यत् परिपूर्णे ज्ञातृकर्तृस्वभावे परमेश्वरे सर्वोऽपि प्रपञ्चः सर्वदैव परमेश्वररूपतयाऽऽस्त एव। सा च परमेश्वररूपताऽपरिमितपरिपूर्णाहन्ता। अपरिमितेति नैव देशकालाकारादिकृतः कश्चन परिच्छेदस्तस्याः। परिपूर्णेति सर्वमपि तत्राहमात्मकतया तिष्ठत्येव। यथा बीजे वृक्षो बीजरूपतया, दध्नि च नवनीतं दधिरूपतया, मृदि च पत्रपुष्पफलादीनि मृन्मयतया तिष्ठन्ति, तथैव परिपूर्णाहमात्मनि परमेश्वरे सर्वमपि सदैव शुद्धपरिपूर्णाहंरूपतयैव तिष्ठति। न तत्र प्रपञ्चस्य कथमपि कदापीदमात्मकतयाऽवभासः। ननु दध्यादिदृष्टान्तेन तस्य परिणामित्वापत्तिरिति चेत् कश्चिच्छङ्केत तर्हि तस्मै वाच्यम्—दध्यादौ तक्रनवनीतादितया परिणते नैव घनात्मिका दधिरूपता स्थायिनी भवति, अपि तु तदासौ तिरोभावमापद्यते। क्षीरं यदैव दधिभावमापन्नम्, तदैव तस्य क्षीरता विलीनतां याता। बीजस्याङ्कुरतापत्तौ बीजता नैवावशिष्यते, परं परमेश्वरे जगदाकारतया भासमानतामापन्नेऽपि तस्य परमेश्वरात्मिका परिपूर्णाहंरूपता तथैव स्वकीयमोजो विजृम्भयमाणा सततं स्थायिनी भवति। बीजादङ्कुर उत्पन्ने सति बीजं रिक्तं निस्सारं च सम्पद्यते, परं परमेश्वरात् संसारे उत्पन्ने सत्यपि परमेश्वरः सदैव परिपूर्ण एव सन्तिष्ठते। सर्वथा शुद्धेयं पारमेश्वर्यहन्ता। संविदेकरूपतैव तस्याः शुद्धिः। यतोऽसौ परमेश्वरः प्रकाशविमर्शसमरसाकाराहमात्मकः। नैव तत्र कथमप्यसंविद्रूपता कापि भाति। देहादिसम्भिन्ना याहन्ता सा तु देहाद्यात्मकासंविद्रूपप्रमेयात्मकांशच्छायाच्छुरितत्वेन नैव शुद्धा, अपि त्वशुद्धा। विद्यादशायां मन्त्रेश्वरमन्त्रमहेश्वराणामीश्वरसदाशिवयोरपि वा या 'अहमिदम्' इति वा, 'इदमहम्' इति वा प्रमातृप्रमेयसामान्याधिकरण्येनेदमंशच्छायाच्छुरितैवाहन्ता, सा तु शुद्धाशुद्धा। असंविद्रूपस्येदमंशस्य छायैवाशुद्धिरत्र, समानाधिकरण्येन भेदविगलनप्रवणत्वतयाहमंशाभेदप्रतीतिश्चात्र शुद्धिः। शक्तिशिवतायां त्विदमंशस्तथा विलीयतेऽहमंशे यथा तस्य नामाप्यवशिष्टं नैव भवति।

तदियं शुद्धाहमात्मकप्रमातृरूपता, न चात्र प्रमेयप्रमापकापेक्षं प्रमातृत्वमपि तु स्वतन्त्रं शुद्धं प्रमातृत्वम्। यतस्तस्यामवस्थायां यदहमात्मकस्वात्मप्रकाशविमर्शनं तन्नैवेदमात्मकप्रमेयापेक्षम्, नापि बुद्धीन्द्रियादिप्रमापकापेक्षम्, अपि तु केवलं प्रमातृस्वातन्त्र्यमयम्। एतदेव हि वस्तुतः प्रमातृत्वं यत् प्रमेयप्रमापकादिनिरपेक्षं स्वतन्त्रं प्रमातृत्वम्। तदसौ प्रमाता स्वयं स्वतः स्वेन स्वस्मिन् स्वं प्रमिनोत्यहमिति। ईदृशस्य शुद्धस्याहमः प्रकाशनमत्र निरपेक्षं शुद्धं ज्ञानम्, तथाविधस्य च तस्य तथाविधं विमर्शनं क्रिया। ज्ञानस्य प्रकाशनस्वभावात् क्रियायाः संरम्भरूपत्वात्, विमर्शात्मकतायाश्चात्र शुद्धसंरम्भात्मकत्वात्। संरम्भश्चायमत्र नैव देशात्मकपरिच्छेदसम्भिन्नं गतिरूपत्वम्, नापि बौद्धं वासनामूलं चलत्वम्, न चापि प्राकृतस्य रजोगुणस्य स्वाभाविकं चाञ्चल्यम्; अपि तु परमेश्वरात्मकस्याहमश्चैतन्यम्। चैतन्यं हि सुसूक्ष्मतरं चमत्कारात्मकचिदानन्दलहरीस्वरूपं जडत्वविलक्षणत्वादायि शुद्धप्रमातृरूपस्य परमेश्वरस्याहमः सारात्मकम्। न चेत् परमेश्वरे भवेदस्य चैतन्यसंरम्भस्य सत्ता, तर्हि शून्यगगनस्वभावत्वं तस्य स्यात्। शून्यगगनस्वभावत्वे च स एव सदावतिष्ठेत; नैव कस्यापि जगतो जीवस्य वा सृष्टिः कदापि कथमपि सम्भवेदित्यसावपि कस्य परमेश्वरो भवेत्। असौ भवेदपि वा नैव वा भवेदिति शङ्कासमाधानाद्यपि कः कुर्यात्। उक्तं चैवमेवाभिनवगुप्तपादैस्तन्त्रालोके—

अस्यास्यदेकरूपेण वपुषा चेन्महेश्वरः।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद् घटादिवत्॥ इति।

(तं० आ० ३–१००, १०१)

### कामकला

ततः पारमेश्वरस्य चैतन्यसंरम्भस्य नैव चलत्तास्वरूपत्वं शङ्कनीयम्; अचलस्यापि तस्य चलत्तात्मकताकल्पः कश्चन चिदानन्दविलासोल्लासोऽयम्, येन परमेश्वर एव षट्त्रिंशत्तत्त्वादिसृष्टिस्थितिसंहारादीनां दर्पणनगरवदवभासः प्रतिबिम्बकल्पतया भवति। परं बिम्बापेक्षां विनैव स्वेच्छातो विश्वं परमेश्वरे प्रतिबिम्बितं ज्ञेयम्। उक्तं चाचार्योत्पलदेवपादैरीश्वरप्रत्यभिज्ञायाम्—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्॥ इति।

(ई० प्र० १–५–७)

स्वात्मनि संविदात्मकतया वर्तमानस्यैव विश्वस्य स्वात्मभित्तावेव प्रमेयात्मकतया प्रतिबिम्बनप्रवणत्वं स्वभाव एव परमेश्वरस्य। एतदेव तस्य परमेश्वरत्वम्। तदसौ स्वस्वभावत एव विश्वसृष्ट्यादिप्रतिबिम्बनप्रवणयेच्छया समाविष्टो ज्ञेयः। नेयमिच्छा प्राप्य विषयोन्मुख्यपूर्णम्मन्यतामूला; अपि तु स्वस्वभावाभिव्यक्त्युन्मुखी परमेश्वरतामयी दिव्यातिदिव्याभेदनिष्ठा च कापि सुविचित्राश्चर्यमयीच्छा। इयमेव परमेश्वररूपस्य शिवस्य शक्तिः। अस्या इच्छाशक्तेरेव कारणाद् विश्वस्य सृष्टिः सम्भवति। तदसौ परमेश्वरोऽनया विश्वसिसृक्षया सततमाविष्टः सन्नेव रहस्यशास्त्रेषु कामेश्वर इत्यभिधीयते। तस्य चेयं सिसृक्षा भगवती कामेश्वरीति। इयमेव च कामकलेत्यन्वर्थनाम्नी। सिसृक्षारूपत्वमेवास्याः कामत्वम्। अनन्तानन्तवैचित्र्यचमत्कारपरिपूर्णतया सृज्यमानस्य विश्वस्य सृष्टिमूलकारणभूतेयमेव सिसृक्षा कलेत्यभिधीयते। स्वात्मपरमेश्वरस्यैतत् कामकलास्वभावत्वं शाक्तशाम्भवयोगाभ्यासस्थैर्यत एव साक्षात्कार्यं भवति। एवंविधाभ्यासपाटवविहीना अवरा अधिकारिणस्तुर्योन्मुखतामात्रसम्भिन्नसौषुप्तपदप्रतिष्ठाः परतत्त्वस्याकाशवत् शान्तत्वं मन्यमानाश्चैतन्यस्य संरम्भरूपताङ्गीकारे विकारित्वशङ्कया वेपमानहृदया अजातवादे वा वासनावादे वा विवर्त्तवादे वा श्रद्धां निधाय सौषुप्तसृष्टौ प्रलयाकलीभूय सन्तिष्ठन्तेऽव्यक्ततत्त्वेऽवान्तरप्रलयकालावधि। तत्कालपरिसमाप्तौ श्रीकण्ठनाथो यदा पुनरव्यक्ततत्त्वं क्षोभयित्वा करणकार्यतत्त्वानि सृजति तदा ते प्रलयाकलाः सुषुप्तेर्जागृताः सन्तः पुनः करणकार्ययुक्ताश्च भवन्तः संसृतिचक्रे समावर्तन्ते। इत्येवं शान्तब्रह्मशुद्धविज्ञानशून्यादिनिष्ठानामजातवादादिप्रधानानां दर्शनानामधरदर्शनत्वमेवागमिकानां शैवाद्दिदर्शनानामपेक्षया ज्ञेयम्। काणादसांख्यादिदर्शनेभ्य उत्तरदर्शनत्वमप्येषामित्यास्तामवान्तरमेतत्। तदिमां परमेश्वरस्य परमेश्वरतारूपां कामकलामेवोद्दिश्योत्तमाधिकारिणां कृते गीतं श्रीमता शङ्कराचार्येण सौन्दर्यलहर्याम्—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि। इति।

(सौ० ल० १)

अस्य भगवतः कामेश्वरस्य, तदङ्कनिलयायाश्च कामकलारूपाया भगवत्याः कामेश्वर्या दार्शनिकरहस्यगर्भं सुन्दरं सरसं सालङ्कारं काव्यात्मकं च वर्णनं शैवदर्शन-

प्रवर्तकैर्भगवद्दुर्वासोमहोदयैर्ललिताम्बास्तवरत्ने साधूपनिबद्धम्। तत्तत एव सज्जनै-र्दृष्टा तद्रससमुद्रनिमज्जनोन्मज्जनानन्दचमत्कारनिर्भरैर्भवितव्यम्।

## परिपूर्णस्याहमो निर्विकल्पत्वम्

देहाद्यालम्बनो योऽहमिति विमर्शोऽसौ तदतद्विकल्पनपूर्वकोऽपोहात्मक-स्तन्निश्चयनस्वभावोऽतन्निषेधनस्वभावश्च। तस्मादसौ विकल्पप्रत्यय एव। विविधत्वेन तदतद्रूपतया कल्पितस्यैकतमनिश्चयोऽन्यनिषेधनेन हि विकल्पनम्। स्थाणुत्वेन पुरुषादित्वेन च कल्पितस्यैव वस्तुनः स्थाणुत्वनिश्चयोऽस्थाणुरूपस्य पुरुषादेर्निषेधत इव। इदमेव हि विकल्पस्य लक्षणं प्रतिपादितमीश्वरप्रत्यभिज्ञायामाचार्योत्पलदेवपादैः—

तदतत्प्रतिभाभाजा मात्रैवातद्व्यपोहनात्।
तन्निश्चयनमुक्तो हि विकल्पो घट इत्ययम्॥ इति।
(ई० प्र० १-६-३)

तदित्थं विकल्पे विविधत्वेन कल्पना तन्निश्चयोऽतन्निषेधश्चेत्यंशत्रय-मवश्यम्भावि। देहादिसम्भिन्नेऽहमिति प्रत्यये 'अहं चैत्रदेह एव न मैत्रादिदेहः' इत्यवश्यमेव भासते। तत एव तस्य प्रत्ययस्य विकल्पत्वमेव सम्मतम्। परं शुद्धे परिपूर्णेऽपरिमितेऽद्वैते संवित्तत्त्वे योऽहमिति साक्षात्कारो नैव तत्र विविधत्वकल्पना-वकाशः कश्चन सम्भवितुमर्हति; अद्वैतरूपत्वात्तस्य। न चापि तत्र किञ्चिन्मात्रत्वेन तन्निश्चयोऽपि, नाप्यतन्निषेधोऽपि कश्चन। ततो नासौ साक्षात्कारः कथञ्चिदपि विकल्पप्रत्यय इति सर्वथा निर्विकल्पत्वं तस्य।

## शक्तिशिवौ

योऽसौ चैतन्यसंरम्भः परमेश्वरस्य तत्प्रभावेणासौ सततं बहिर्मुखत्वमन्त-र्मुखत्वं च युगपदेवावभासयति। अन्तर्मुखतयाऽहमित्यवभासो बहिर्मुखतया चेदमिति। परिपूर्णशुद्धापरिमितप्रमातृमात्रस्वभावः सन्नपि स्वात्मन्यद्वैतरूपे प्रतिबिम्बकल्पतया भेदाभेदं भेदं चाप्यवभासयति। भेदाभेदावभासतोऽहमिदमिति वेदमहमिति वा विमृशन् विद्यादशामाविर्भावयति। भेदं चावभासयन् देहप्राणबुद्धिशून्येष्वहमिति, नीलादौ सुखादौ चान्तरे बाह्ये वा प्रमेय इदमिति विमर्शमुल्लासयति। अत्र भेदोल्लासे परिमितः प्रमाता प्रमेयादपि भिद्यते, प्रमात्रन्तरादपि च प्रमेयमपि च प्रमेयान्तरात्। इयं भेदभावप्रधाना तु मायादशा। तदिमा अभेदभेदाभेदभेदप्रधानाः शक्तिविद्या-

मायादशा अवभासयन्ननेन सोपानत्रयेणानन्तै रूपैरवतरत्यप्युत्तरत्यपि च। तदवतरण-मुत्तरणं च सप्रपञ्चं प्रतिपाद्यमानं सृष्टिस्थितिसंहारपिधानानुग्रहात्मककृत्यपञ्चकरूप-तयोपपाद्यते शैवदर्शने। तदेवं कृत्यपञ्चकलीलां चैतन्यसंरम्भरूपायाः कामकलात्मि-काया इच्छाया विजृम्भयाभिनयन्नकलादिसकलान्ताः प्रमातृभूमिकाः शिवादि-धरण्यन्तानि तत्त्वानि, तुर्यातीतादिजाग्रदन्ता अवस्थाः, व्यानादिप्राणान्तांश्च प्राणा-नाविर्भावयन् विश्वात्मकत्वं स्वस्याभिव्यनक्ति। सर्वं चैतद्विलापयन् संविन्मात्ररूपत्वं स्वस्य प्रकाशयन् विश्वोत्तीर्णत्वमप्यात्मनः प्रकटयति। उभयं चैतत् समकालमेव सततं प्रकाशयन्नेवास्ते। तदेतद् विश्वमयत्वं संविद्रूपस्य भगवतो विमर्शांशाभिव्यक्ति-मयं शक्तिरूपत्वं विश्वोत्तीर्णत्वं च प्रकाशांशाभिव्यक्तिमयं शिवरूपत्वं प्रतिपाद्यते शास्त्रेषु शिष्यान् बोधयितुम्। एवंविधशिवशक्तिसामरस्यं च परमशिवतया परमेश्वर-तया वा प्रतिपाद्यते। तदसौ परमेश्वरः सदैव शक्तिस्वभावोऽपि शिवस्वभावोऽपि समरसस्वभावोऽपि। सदैव तस्यैश्वर्यविजृम्भयाऽसंख्यानां ब्रह्माण्डानां ततः सृष्टिः, सदैव चागणनीयानां तेषां तस्मिन् संहारः, सदैव चानन्तानां तेषां तस्मिन् स्थितिः। सततमेवानन्तरूपतया शिवत्वस्य मायया स्थगनस्वभावं पिधानम्, सततमेव चानन्त-प्रकारतया गुरुशास्त्रोपायकमनन्तानां जीवानां स्वशिवत्वप्रकाशनरूपोऽनुग्रहोऽपि। इदं च सर्वं शिवस्य शक्तिः। शक्तिरेवेयं शिवस्य शिवता। शक्तेश्चापि शक्तिरूपत्वं शिवत्वमेव। सर्वथा शिव एव शक्तिः शक्तिरेव च शिवः। केवलं शिष्यसम्बोधनार्थं सृष्ट्यादिप्रवणत्वेन तस्य शक्तित्वम्, तदुत्तीर्णत्वेन च शुद्धसंविन्मात्रतायामवस्थानं तस्य शिवत्वमुपदिष्टं गुरुभिः। उभयमप्येतत् सततं प्रकाशमानं निजमोजो जृम्भयति। उभयथा वैक एव परमेश्वरो विजृम्भते। तदेतदुभयस्वभावत्वं तस्य पारमार्थिकमेव तत्त्वम्। योऽसौ तस्य चैतन्यसंरम्भः स माहेश्वरे शास्त्रे स्पन्द इति निर्दिश्यते। स्पन्दनं चान्तर्बहिरुभयतोमुखमचलस्यापि संवित्प्रकाशस्य विमर्शात्मकं चलनमिव किञ्चिद् वैशिष्ट्यम्, येनासौ शुद्धसंविन्मात्रस्वभावः सन्नप्यात्मनि दर्पणकल्पे सृष्ट्यादि-पञ्चकृत्यप्रपञ्चमनन्तानन्तप्रकारैराविर्भावयति सततमेव।

### अनुत्तरः

सूक्ष्मदृष्ट्या चेदत्र विचारो विधीयेत तर्हि शिवत्वमपि परतत्त्वस्य सामर्थ्य-विशेषात्मकम्, शक्तित्वमपि च तद्रूपमेव। यतः स्वकीयसामर्थ्यविशेषत एवासावन्त-र्मुखतां परामाविर्भावयन् शिव इति प्रतिपादनार्हो भवति, सामर्थ्यविशेषत एव च

बहिर्मुखतां विश्वरूपतां दर्पणनगरवत् प्रकाशयन् शक्तिरिति प्रतिपादयितुं शक्यते। तत एतदुभयं भगवतः शक्तिरेव। न च भगवान् तस्याः स्वशक्त्याः सकाशात् कथमपि भेदमर्हतीति वस्तुतः शक्तिमय एवासौ। परं शक्तिशब्दस्य क्तिन्प्रत्ययान्तत्वाद् धर्मरूपताया प्रतिपादने शक्तिः। न च धर्मवाचिशब्देन परतत्त्वस्याभिधानमुचितम्। तत एव केचन सिद्धजना धर्मिवाचकस्य शिवशब्दस्यैव परतत्त्वप्रतिपादनार्थमुपयोगं कृतवन्तः। सुसूक्ष्मविचारकेणाचार्याभिनवगुप्तमहोदयेन परतत्त्वस्य धर्मत्वेन धर्मित्वेनापि वा प्रतिपादनमनुचितमिति मन्यमानेन तद्वाचकतयानुत्तर इति रुद्रयामलोपयुक्तस्याभिधानस्यैव प्रयोगः प्रशस्तस्तन्त्रालोकस्य द्वितीय आह्निके। उक्तं च तेन तत्र—

नैष शक्तिर्महादेवो न परत्राश्रितो यथा।
न चैष शक्तिमान् देवो न कस्याप्याश्रयो यतः॥
नैष ध्येयो ध्यात्रभावान्न ध्याता ध्येयवर्जनात्।
न पूज्यः पूजकाभावात् पूज्याभावान्न पूजकः॥
न मन्त्रो न च मन्त्र्योऽसौ न च मन्त्रयिता प्रभुः।
न दीक्षा दीक्षको वापि न दीक्षावान् महेश्वरः॥
न सन्न चासत् सदसन्न च तन्नोभयोज्झितम्।
दुर्विज्ञेया हि सावस्था किमप्येतदनुत्तरम्॥ इति।

(तं० आ० २।२४-२६, २८)

व्याख्यातं चैतदनुत्तरत्वं षोडशप्रकारतयाचार्यमहोदयैरेव परात्रींशिकाविवरणे। तत् तत एव विद्वद्भिर्द्रष्टव्यम्। श्रीविज्ञानभैरवेऽपि सर्वस्य कल्पनाकलङ्कितस्य वस्तुजातस्य साक्षात् पारमार्थिकमनुत्तरत्वमेवं प्रत्याख्यातम्—

यत् किञ्चित् सकलं रूपं भैरवस्य प्रकीर्तितम्॥
तदसारतया देवि विज्ञेयं शक्रजालवत्।
मायास्वप्नोपमं चैव गन्धर्वनगरभ्रमम्॥
ध्यानार्थं मन्दबुद्धीनां क्रियाडम्बरवर्तिनाम्।
केवलं वर्णितं पुंसां विकल्पनिहितात्मनाम्॥
तत्त्वतो न नवात्मासौ शब्दराशिर्न भैरवः।
न चासौ त्रिशिरा देवो न च शक्तित्रयात्मकः॥

नादबिन्दुमयो वापि न चन्द्रार्धनिरोधिका: ।
न चक्रक्रमसम्भिन्नो न च शक्तिस्वरूपक: ।।
अप्रबुद्धमतीनां हि एता बालविभीषिका: ।
मातृमोदकवत् सर्वं प्रवृत्त्यर्थमुदाहृतम् ।। इति ।

( वि० भै० ८-१३ )

एवमेतत्प्रत्याख्यायानुत्तरस्य परतत्त्वस्य स्वरूपं यावत् प्रतिपादयितुं शक्यं तावदेवं प्रतिपादितं तत्र—

दिक्कालकलनोन्मुक्ता देशोद्देशाविशेषिणी ।
व्यपदेष्टुमशक्यासावकथ्या परमार्थत: ।।
अन्त:स्वानुभवानन्दा विकल्पोन्मुक्तगोचरा ।
यावस्था भरिताकारा भैरवी भैरवात्मन: ।।
तद्वपुस्तत्त्वतो ज्ञेयं विमलं विश्वपूरणम् ।
एवंविधे परे तत्त्वे क: पूज्य: कश्च तृप्यति ।।
एवंविधा भैरवस्य यावस्था परिगीयते ।
सा परापररूपेण परा देवी प्रकीर्तिता ।। इति ।

( वि० भै० १४-१७ )

## अनुत्तरविज्ञानम्

सम्पन्ने परे साक्षात्कारे स्वात्मन एव परमेश्वरस्य विश्वोत्तीर्णतया विश्वमयतया चोभयथा हृदयङ्गमीभाव: संजायते । आपेक्षिकप्रमातृप्रमेयोत्तीर्णत्वेन संविन्मात्रसतत्त्वस्य शुद्धस्य चिदात्मन: परात्परतरस्यावाङ्मनसगोचरस्य स्वभावस्यापि साक्षादनुभवो जायते, विश्वस्यापि च स्वात्मन एव विलासत्वं स्वशक्त्यभिव्यक्तिरूपत्वं च साक्षात् स्वसंवेदनत एव निश्चीयते। अनुत्तराष्टिकाख्ये स्तोत्रे श्रीमदभिनवगुप्तपादैरनुत्तरपदविज्ञानदशाया: स्वभाव: सम्यगुपवर्णित:। तथा च तत्रत्यं पद्यम् —

संसारोऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य वार्तैव का
बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया ।

मिथ्यामोहकृदेष रज्जुभुजगच्छायापिशाचभ्रमो
मा किञ्चित् त्यज वा गृहाण विरम स्वस्थो यथावस्थितः ॥ इति ।

( अनु० अ० २ )

त्यागग्रहणविरतिरत्र प्राणापानयोर्विरमः । तद्विरमे स्वस्वभावेऽवस्थानमात्रस्या-भ्यासोऽनुत्तरविज्ञानोपाय इत्यभिप्राय आचार्याणाम् । एतेनैवाभ्यासेन विश्वोत्तीर्णतायाः साक्षादनुभवो भवति । अनुत्तरस्य स्वात्मनो विश्वमयत्वविज्ञानमित्थमुपदिश्यते—

भावानां न च सम्भवोऽस्ति सहजस्त्वद्भाविता भान्त्यमी
निःसत्या अपि सत्यतामनुभवभ्रान्त्या भजन्तः क्षणम् ।
त्वत्सङ्कल्पज एष विश्वमहिमा नास्त्यस्य जन्मान्यत-
स्तस्मात् त्वं विभवेन भासि भुवनेष्वेकोऽप्यनेकात्मकः ॥ इति ।

( अनु० अ० ५ )

सांसारिकपदार्थान् स्वात्मशिवरूपान् स्ववैभवोल्लासमयांश्च दृष्ट्वा स्वकीयैश्वर्य-साक्षात्कारानन्दचर्वणैवानुत्तरविज्ञानावाप्तौ योगिनो व्यवहार इत्यनेनेत्थमुपदिश्यते—

रागद्वेषसुखासुखोदयलयाहङ्कारदैन्यादयो
ये भावाः प्रविभान्ति विश्ववपुषो भिन्नस्वभावा न ते ।
व्यक्तिं पश्यसि यस्य यस्य सहसा तत्तत्तदेकात्मता
संविद्रूपमवेक्ष्य किं न रमसे तद्भावनानिर्भरः ॥ इति ।

( अनु० अ० ४ )

तदित्थमनुत्तरविज्ञानस्यायमेव स्वभावो यद्विश्वं स्वात्मरूपं स्वविलासकल्पितं च साक्षादनुभूयते । स्वात्म च शुद्धं संविन्मात्रसतत्त्वमनुभूयते । शाङ्करे वेदान्ते, शून्यवादे, विज्ञानवादे च परदशायां विश्वोत्तीर्णत्वमेवात्मनः शून्यस्य शुद्धस्य च विज्ञानस्य क्रमेण भासते न तु विश्वमयत्वम्, नापि विश्वोल्लासस्वभावत्वं स्वात्मनो हृदयङ्गमीभवति । अत्र च दर्शन उभयमेतत् पारमार्थिकस्वभावत्वेन स्वात्मनः पर-शिवस्यानुत्तरस्येति विशेषः ।

### प्रमातृसृष्टिः

चिदानन्दलहरीभिश्चञ्चलीकृत इव परमेश्वरोऽचलोऽपि कूटस्थोऽपि सन् किञ्चिच्चलतीव । शुद्धसंविन्मयात् स्वरूपात्तु नैव कथमपि मनागपि च्यवते, परं तथापि सुस्वच्छस्वात्मसंविद्दर्पणे प्रतिबिम्बकल्पतयाऽनन्तैराकारैराभाति । एवं चैतन्य-स्पन्दनप्रभावत आभासमानासु त्रिष्वभेदभेदाभेदभेदात्मिकासु भूमिकास्वनन्त-

प्रकारतयाऽसंख्यप्रमातृरूपतयावभाति। अभेदभूमिकायां तावदकलप्रमातृतयावभासते। अकलाश्च शुद्धपरिपूर्णापरिमितां स्वच्छां संविदमेवात्मतया साक्षात्कुर्वन्तो भेदलेशेनापि नैव स्पृष्टाः सन्तः सुपरिपूर्णाहंप्रकाशविमर्शात्मतयाऽवभासन्ते। सर्वमपि प्रमेयजातं तेषामपरिमिते प्रमातृत्वे तथा ब्रुडितं तिष्ठति यथा प्रमेयताया नामापि नैवावशिष्यते। एवंविधा अभेदनिष्ठाः प्राणिनोऽपि द्विप्रकाराः। तथाहि—केषाञ्चित् प्रकाशांशप्राधान्ये विमर्शांशस्य गुणीभूतत्वमपरेषां चान्यथेति क्रमेण ते शाम्भवाः शाक्ताश्चाभिधीयन्ते। भेदाभेदभूमिकायां तावद् द्विप्रकाराः प्रमातारोऽवभासन्ते। तत्र हि प्रमातृप्रमेययोः पृथक् पृथगवभासे सत्यपि सामानाधिकरण्येन विमर्शो इति भवति 'अहमिदम् इति' 'इदमहम्' इति वा। पूर्वत्र विमर्शो प्रमात्रंशे प्रमेयांशस्यास्फुटेव छाया च्छुरिता तिष्ठति, या प्रमातृप्रकाशे श्यामलतयाऽवभासते। अपरत्र विमर्शे प्रमेयांशस्य स्फुट आभासे सति प्रमात्रंशस्तत्र गुणीभूत इव तिष्ठति। पूर्वत्र तावत् प्रमातारो मन्त्रमहेश्वरा अपरत्र च मन्त्रेश्वराः। मन्त्रमहेश्वराणामुपास्यो भगवान् सदाशिवभट्टारको मन्त्रेश्वराणां च भगवानीश्वरभट्टारकः। एतौ भट्टारकौ क्रमशः सदाशिवेश्वरतत्त्वयोरधिष्ठातारौ।

भेदाभेदभूमिकायाः शुद्धविद्या दशेत्यभिधानं स्फुटभेददशायाश्च मायेति। एतयोर्द्वयोर्मध्येऽपरापि महामायाख्या काचन दशा भवति। सापि परा अपरा चेति द्विधा। परायां तस्यां दशायां प्रमातारः स्वात्मानं शुद्धप्रकाशविमर्शरूपं मन्यमाना अपि प्रमेयमात्मनो भिन्नमेव पश्यन्ति, पारस्परिकमपि च भेदं पश्यन्त्येव। एते खलु प्रमातारो विद्येश्वरे इति वा मन्त्र इति वाभिधीयन्ते। एतेषामुपास्यो विद्यातत्त्वधिष्ठाता भगवाननन्तनाथो यो मायादितत्त्वानां स्रष्टा। ईश्वरभट्टारक एव हि महामायायामवतीर्णः सन्ननन्तनाथरूपतयाऽवतिष्ठते। तत्रैव तत्त्व ईश्वरभट्टारकस्यापरोऽवतारोऽनन्तनाथशिष्यो गहनेश इति। या पुनरपरा महामाया तस्यां चैतन्यसंरम्भरहिते शान्तब्रह्मकल्पे शुद्धे क्रियाशक्त्युल्लासरहिते प्रकाशमात्रेऽहमिति प्रत्ययो भवति प्रमातॄणाम्। ते चैवंविधा चैतन्यस्वातन्त्र्यशून्या इव प्रकाशमात्रस्वरूपाः प्रमातारो विज्ञानाकला इति वा विज्ञानकेवला इति वाभिधीयन्ते। मायादशायां गुणतत्त्वेऽवतीर्णो भगवानीश्वरभट्टारकः श्रीकण्ठनाथमूर्त्या तिष्ठन् प्रकृतितत्त्वे क्षोभमुत्पाद्य करणकार्यतत्त्वानि सृजति, अवान्तरे च प्रलये सर्वमेतत् संहरति। अत्रैव तत्त्वे भगवत ईश्वरभट्टारकस्यैवापरस्यावतारस्याभिधानं भगवानुमापतिनाथ इति वा

श्रीस्वच्छन्दनाथ इति वास्ति। अयं श्रीमदुमापतिनाथ एव पुराणेतिहासादौ प्रसिद्धः कैलासवासी त्रिनेत्रो नीलकण्ठो भगवान् शिव इति।

सृष्टौ स्थितौ चाधिष्ठातृत्वं भजमानो भगवान् शिवः क्रमेण ब्रह्मा, विष्णुश्चेति। एतावुभावपि मायायामेवाधिकारिणौ। भगवान् रुद्रः संहारेऽधिष्ठातृत्वं भजमानो भगवान् शिव एव। परमसौ सर्वमपि मायाविकाररूपं प्रमेयं प्रमातृतायां संहरन् भेदे तिष्ठन्नप्यभेदोन्मुखो भवति। तदस्य भगवतो रुद्रस्याभेदोन्मुखतयैव व्यवहारे शिवत्वं मन्यते। ततः परमार्थशिवत्वाद् दूरमवरोऽप्ययं भगवान् शिव इति व्यवह्रियते लोके। श्रीमदुमापतिनाथादारभ्य सर्वेऽपीश्वरभट्टारकावतारास्तावदधिकारिणः परमेश्वरस्य परमेश्वरतायास्तद्वितीर्णैरंशैरीश्वरताभाजस्तदैश्वर्यांशव्यवहारनिर्वाहकाः। ब्रह्मविष्णू अप्यधिकारिणावेव। एवमेवेश्वरसदाशिवावनाश्रितश्चापि।

## मुक्तशिवाः

ये तावत् प्रमातारो बुद्धिकर्मेन्द्रियगणे सप्राणपञ्चके वा तत्सर्वसनाथे देहे वाभिमानिन आणवमायीयकार्यत्रिमलजुषस्ते सकला इति निगद्यन्ते। इन्द्रादयो देवाः, दक्षादयः प्रजापतयः, यक्षगन्धर्वकिन्नरविद्याधराप्सरोभूतप्रेतपिशाचासुरादयोऽन्ये देवादियोनयः सूक्ष्मदेहभाजः, जरायुजादयश्च स्थूलदेहभाजः प्राणिनः सर्वेऽपि सकला इति निगद्यन्ते। एते सकलास्तु सर्वथा बद्धा जीवाः संसृतिचक्रे सततं समावर्तिनः प्रलयाकलास्तावदवान्तरप्रलयान्तं मुक्ताः श्रीकण्ठनाथस्याह्नः समारम्भे प्रकृतिप्रक्षोभावसरे प्राकृततत्त्वसृष्टिकाले गाढनिद्राया उत्थिता इव सन्तः पुनश्च संसृतिं भजन्तः समावर्तितुमारभन्ते जन्ममरणचक्रेषु। तदेतेऽपि वस्तुतो बद्धा एव।

एवमेव विज्ञानकेवला अपि प्रायशो बन्धनभाज एव। स्वरूपप्रत्यभिज्ञाया-मुत्तरोत्तरमग्रेसरन्तः प्राणिनो मन्त्रतदीशतन्महेशतामवाप्याकलतां वासाद्य प्रायश ऊर्ध्वमेव क्रमेणारोहन्ति, पर्यन्ते च परिपूर्णप्रत्यभिज्ञायामवाप्तायां पूर्णतया शिवीभवन्ति। पूर्णशिवताभाव एव हि वास्तविकी मुक्तिः, परमियं मन्त्रादिरूपतापि गुणतया मुक्तिरेव गण्यते। अत एवैते प्रमातारः सर्वेऽपि मुक्तशिवा इति व्यवह्रियन्त आगमेषु। एतेषु मुक्तशिवेषु केचनाधिकारिशिवा अपि भवन्ति, ये प्राणिनामुद्धरणायानुग्रहकृत्ये प्रवृत्ताः सन्तो रहस्यशास्त्राण्युपदिशन्ति। तेषामपि त्रयो वर्गाः। तत्राभेददृष्टिप्रधाना भैरवाः, भेदाभेददृष्टिप्रधानाः शिवाः, भेददृष्टिप्रधानाश्च रुद्रा

इति। तत्पुरुषादयः पञ्च दाक्षिणात्यशैवदर्शनोपदेष्टारोऽप्येषामेव मध्ये गणनार्हाः। तदेतेषां मुक्तशिवानां मुक्तिरपरिपूर्णैव, शिवतापि चैषां नैव परिपूर्णा। यतोऽकलाः शिवत्वशक्तित्वांशद्वयमध्य एकतरस्य प्राधान्यतया अपरस्य च गौणतया परिपूर्णशिव-शक्तिसामरस्याकारात् परमशिवात् किञ्चिदूना एव भवन्ति। एवमेव भैरवा अपि। मन्त्रमहेश्वरा मन्त्रेश्वराश्च स्वात्मनि प्रतिबिम्बितं वेद्यं स्वशरीरकल्पतयैव पश्यन्ति न सर्वथा स्वात्मतया। भेदांशस्योल्लासवशादत्राभेदविमर्शे सत्यपि न्यूनतावभासोऽवश्यमेवाङ्गीकार्यः। ततः परमशिवात् सुतरां न्यूना एते। अत एतेषां मुक्तिरांशिकी, नैव परिपूर्णा। ऐश्वर्यमप्येषामांशिकमेव, नैव परिपूर्णम्।

एवमेव शिवाः, मन्त्रास्तु सुतरामैश्वर्यहीनाः, नितरां चापूर्णताभाजः; भेददृष्टिप्राधान्यात्। एवमेव च रुद्राः। यैव वर्तनी भैरवशिवरुद्राणामभिव्यक्तिशिवतांशानां सैव खलु देवीनां कलानां योगिनीनां चाभिव्यक्तशक्त्यंशानाम्। ततस्ता अपि मुक्तशिववर्ग एव गणनार्हाः, न परिपूर्णशिवतायाम्। सुपरिपूर्णा या शिवता, या च पारमार्थिकी मुक्तिः, सर्वथानवच्छिन्नं नितरां च परिपूर्णं यदैश्वर्यं तत्सर्वं परमशिवतायामेव। ततस्तदवस्थां प्रत्यभिज्ञाय जनोऽनन्तानां ब्रह्माण्डानामुत्पत्तिस्थिति-संहृतिविधानानुग्रहात्मकपञ्चसन्धिचमत्कृतिमनोहरस्य विश्वात्मकस्यानन्तस्य महा-नाटकस्य सूत्रधारतामनुकार्यतामनुकर्तृतां रङ्गभूमितां वेषभूषादितां सामाजि-कादितां रसभावादितां चानुभवन् कियन्तं महानन्दोल्लासं रसयेदिति को वक्तुं शक्नुयात्।

## तान्त्रिको योगः

स्वात्मपरशिवताप्रत्यभिज्ञाया ये उपाया आगमेषूपदिष्टास्ते तु रहस्यमया इति स्पष्टं वक्तुमनर्हा एव। तथापि दिङ्मात्रं प्रदर्श्यते—"योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुना" इति हि योगलक्षणं तन्त्रसम्मतम्। चित्तवृत्तिनिरोधात्मकस्तु योगो नैव प्रशस्तः शाम्भवेष्वागमेषु। उक्तं चात्र विषये स्पष्टमेवाभिनवगुप्तपादैर्मालिनी-विजयवार्त्तिके—

अनादरविरक्त्यैव गलन्तीन्द्रियवृत्तयः।
यावत्तु विनियम्यन्ते तावत्तावद्विकुर्वते॥ इति।

(मा० वि० वा० २।११२)

गार्हस्थजीवनं यापयन् लौकिकानि सुखान्यनुभवन् भोगवासनाश्च यथाशास्त्रं तर्पयन् जनो यदा माहेश्वरागमोक्तानुपायानभ्यस्यात्मानन्दकलां रसयति सुनिर्भरं तदा तुच्छेषु सर्वेष्वैहिकामुष्मिकेषु भोगेषु तस्य निरादरभाव उदेति—"किमेतैः क्षणिकैर्भोगैः" इति। एतेन निरादरभावेन योगीन्द्रियवृत्तिभ्य इन्द्रियविषयेभ्यो भोगतृष्णायाश्च स्वयमेवानायासत एव विरज्यति। बलात्कारेण निगृह्यमाणानामिन्द्रियाणां वृत्तयः प्रत्युत सुतरां विकृता भवन्ति, पातयन्ति च महामोहमयेषु घोरेषु विषयगर्तेषु जनम्। इत्येष एवाचार्यमहोदयानामभिप्रायोऽत्र।

शैवागमेषु निग्रहस्याप्रशस्तत्वात् सुखेनैव योगः साध्यते। तस्य च योगस्य यदपरेभ्यः पातञ्जलादियोगेभ्यः प्रधानं वैशिष्ट्यम्, तत्तु समावेश इति भण्यते। समावेशश्च परतन्त्रायाः स्वजीवितायाः निमज्जनाभ्यासः स्वशिवतायां स्वतन्त्रायाम्। तथा च तल्लक्षणमुक्तं तन्त्रालोके—

आवेशश्चास्वतन्त्रस्य स्वतद्रूपनिमज्जनात्।
परतद्रूपता शम्भोराद्याच्छक्त्यविभागिनः॥ इति।

(तं० आ० १।१७३)

स च समावेशो दृढतरभावनावशाद्वा भवति, दृढतरेच्छाशक्तिप्रयोगाद्वा भवति। पूर्वत्र तावदहं सर्वत्र, मयि सर्वम्, मत्तः सर्वम्, मम सर्वम्, मच्छक्तेर्विस्फार एव विश्वम् इत्यादिशुद्धविकल्पभावनाया अभ्यास उपयोगी। भावनाया विकल्पज्ञानरूपत्वादत्र च ज्ञानाभ्यासे क्रियांशस्येच्छांशस्य च गुणीभूतत्वाज्ज्ञानयोगोऽयमभिधीयते। शाक्तोपाय इति ह्यस्यागमिकं नाम। शाक्तोपायाभ्यासस्य प्रक्रियास्तावत् सद्गुरुमुखादेव वेद्याः। अपरत्र गुरोर्वाक्याद्वा शास्त्राद्वा स्वकीयं वास्तविकं स्वभावं संबुद्ध्य तीव्रतरेच्छाशक्तिप्रयोगाभ्यासबलाद्विनैव भावनाभ्यासं सद्य एव शिवभावस्य समावेशो जायते। तदस्य सद्यः समावेशस्याभ्यास एव शाम्भवोपाय इत्यभिधीयते माहेश्वरागमेषु। इच्छोपाय इति वा, इच्छायोग इति वाऽप्यस्याभिधानम्। अस्य योगस्य या परिपक्वता तस्यां त्विच्छाशक्तिप्रयोगमपि विना प्रारम्भिकचित्तसम्बोधमपि च विना परिपूर्णशिवभावसमावेशपरयोगिजनदर्शनस्पर्शनादिमात्रत एव सद्य एव शिवतासमावेशो भवति। ततोऽत्यल्पीयस्त्वादत्रोपायस्य स्वल्पार्थे नञ उपयोगादनुपाय इत्यस्याभिधानम्। शाम्भवस्तावदुपायोऽनुपायतामाप्नुवन् साक्षात् स्वात्मशिवताप्रत्य-

भिज्ञाया उपायः। शाक्तोपायस्तु शाम्भवोपायं प्रति पात्रतापादनात् परम्परया तदुपाय इति। शाम्भवस्तावन्निर्विकल्प उपायः। शाक्तः पुनः शुद्धविकल्पात्मकः। शाक्ते तावद्विकल्पबुद्धेरालम्बनं स्वात्मैव, न तु किमपि विशेषं प्रमेयम्। योऽपि प्रमेयांशोऽत्र स्वात्मतया विकल्प्यते, सोऽपि सामान्येन सर्वमिदमिति, न तु विशेषतयेदं लिङ्गस्थण्डिलादि। यस्मिन्नुपाये बाह्यानां विशेषप्रमेयानामप्युपयोगो विधीयत आलम्बनत्वेन, स तु माहेश्वर आगम आणवोपाय इति गद्यते। अत्र तावदुपाये ध्यातृध्येयध्यानसंघट्टो वा, प्राणोच्चारो वा, प्राणोच्चारध्वनिर्वा, प्राणवायुर्वा, देहो वा, लिङ्गादिकं वा, कलातत्त्वभुवनानि वा, मन्त्रवर्णपदानि वा विकल्पस्यालम्बनत्वेनादाय दृढतरभावनाबलात् स्वात्मसंविद्रूपतायां लयीकृत्य तानि संविद्रूपतामापाद्यन्ते तत्कालम्। तेन च ततः सद्य एव पूर्ववत् परिपूर्णशिवभावसमावेशो जायते। अत्राणवोपाये कदाचिद् हृद्यगीतनृत्यभोज्यपेयस्पृश्यादिवस्तूनामुपयोगोऽपि विधीयते गुरूपदेशमात्रवेद्येन प्रकारेण। तत्प्रयोगतश्च सत्वरं समावेशलाभो भवति। परमीदृशस्याभ्यासस्याधिकारिणस्तु त एव भवितुमर्हन्ति, ये घोराणामेषां विषयाणां प्रयोगं कुर्वन्तोऽपि मनागपि नैव समावेशोपयिकादभ्यासाद्विचलेयुः। ईदृशास्तावदधिकारिणो घोरेऽस्मिन् वर्तमाने कलिकाले कुतो लभ्येरन्। ततो ये नामागमिकोपायमिषेण मकारसेविनो दृश्यन्ते क्वापि, ते तु प्रायशः पाखण्डिन एव भवन्ति। भवेदपि कदाचित् कोऽपि विरलोऽधिकारवानिति कृत्वा प्रायश इति पदं प्रयोज्यमेवात्र विषये। अस्य तान्त्रिकस्य योगस्य सविस्तरं दिग्दर्शनं श्रीविज्ञानभैरवे, तन्त्रसारे, तन्त्रालोके, मालिनीविजयोत्तरादौ च कृतमस्ति। ततस्तत एवं शक्यं विमृष्टुं जिज्ञासुभिरिति शिवम्॥



# पारमितायानतन्त्रयानयोः साधर्म्यवैधर्म्ये

श्री थुब् तन् छोग् डुबः, वा० सं० वि० वि० वाराणसी।

अप्रतिमलोकनायकस्य महाकरुणोपायप्रज्ञाऽद्वयज्ञानधारिणस्तथागतस्य भगवतः सद्धर्मशासनं विनेयजनाध्याशयानुशंसया हीनयान-महायानभेदेन द्विविधमुपलभ्यते। इदञ्च द्वैविध्यं न तावत् तत्त्वदर्शनमूलकमपि तु मार्गोद्देश्यभेदनिबन्धनम्।

महायानमपि पारमितायान-तन्त्रयानभेदेन द्विप्रकारम्। उभयोरेतयोः सामान्य-रूपेण महायानान्तर्गतत्वेऽप्यस्ति किमपि वैशिष्ट्यं तन्त्रयाने, येन तत् पारमिता-यानाद् विभजते। किन्तु भेदस्यास्य आधारो न तावच्छून्यताज्ञानम्, न चाधिगन्तव्यं फलम्, नापि पारमितासाधनम्; अपि तु परोपकारार्थं रूपिणो बुद्धकायस्य सिद्धये तन्त्रयाने ये गम्भीरोदारा उपायाः प्रदर्शिताः, तादृशानामुपायानां पारमितायानेऽ-भावात्तन्त्रयानं पारमितायानाद्विशिष्यते।

संसारं प्रति वैराग्यबुद्ध्या तूर्णं तस्मादात्मनो मुक्तये हीनयानमार्गः प्रारभ्यते। हैनयानिकस्य साधकस्य केवलं स्वनिर्वाणमेव परमोद्देश्यम्। स त्रैधातुकनिरवशेषसत्त्व-कल्याणार्थं बुद्धत्वपदमधिगन्तुं नाभिलषते। अतः स पुद्गलनैरात्म्यज्ञानमात्रेण क्लेशा-वरणानि प्रहाय निर्वाणमधिगच्छति। परोपकारपरायणस्य रूपिणो बुद्धकायस्य प्राप्तये तु तस्मिन्न स्वप्नेऽपि मनाक् विचारो जागर्ति, किमुत यत्नकरणम्।

महायानिकाः साधकास्तु निःशेषसत्त्वहितसम्पादनेच्छयाऽनुत्तमां बोधिं सर्व-ज्ञतां प्राप्तुमभिलषन्ते, एतदर्थं ते महता वीर्येण षट्पारमितासाधनोपक्रमेषु कृतयत्ना भवन्ति। अयमेव तावन्महायानस्य सङ्क्षिप्तः परिचयः। दर्शनदृष्ट्या यद्यपि महायाने विज्ञानवाद-माध्यमिकाख्यौ द्वौ भेदौ भवतस्तथापि दर्शनभेदो यानभेदस्य न नियामकः।

यस्मिन् गम्यते तस्मिन् गन्तव्ये फलयाने बहुश उच्चावचभावाद् वा, येन गम्यते तस्मिन् प्रापके हेतुयाने मौलिकभेदाद् वा सामान्यतो यानानि पृथग् व्यव-स्थाप्यन्ते।

हैनयानिका यद्यपि बुद्धत्वं नाधिजिगमिषन्ति, तथापि तेषां मार्गो बुद्धत्वावाप्तौ न विघ्नभूतोऽपि त्वेकः श्रेष्ठोपाय एव। अन्ततोगत्वा तेनोपायेनापि साधकः सर्वज्ञतां प्रति नीयत एव। सद्धर्मपुण्डरीकादिसूत्रेष्वस्मिन् विषये सुस्पष्टं बहु प्रतिपादितमास्ते।

सामान्येन महायानस्योद्देश्यं धर्मकायस्य रूपिणः कायस्य च सिद्धिर्नाम। हेतुभूतो मार्गः सामान्येन प्रज्ञा उपायश्च। शून्यतावबोधिनी प्रज्ञा धर्मकायस्य प्राप्तिहेतुः, सैव ज्ञानसम्भार इति कथ्यते। उपायस्तु बोधिचित्तोत्पादमाधारीकृत्यादानादिषट्पारमिताऽभ्यासः। उपायेनानेन सम्भोगकायनिर्माणकायसंज्ञकस्य रूपिकायस्य प्राप्तिर्भवति। अयमेवोपायः पुण्यसम्भार इति कथ्यते।

परार्थ एव महायानस्य सम्पूर्णः प्रयासः। पारार्थ्यमपि तदैव सम्यक्तया कर्तुं पार्यते यदा साधकः स्वयं पूर्णः सर्वविधशक्तिसम्पन्नः सम्बुद्धो भवेत्। बुद्धकायेषु ज्ञानधर्मकायः स्वभावधर्मकायश्च विनेयजनैर्न साक्षात्क्रियेते। अतस्ताभ्यां तेषां साक्षाद्धितं न सिध्यति। सम्भोगकायनिर्माणकायावेव हितकामानां जनानां प्रत्यक्षगोचरीभवतः, आभ्यामेव च सत्त्वेभ्यो यथायोग्यो मार्ग उपदेष्टुं शक्यते। अत एतौ रूपिकायावेव सत्त्वानां साक्षाद्धितसम्पादकौ। इदमेव कारणं यत्परोपकारैकव्यापारनिरता महायानिनो रूपिकायार्थिनो भवन्ति।

विचारकेषु प्रश्नोऽयं प्रकृत्योदेति यत् कोऽत्र प्रधानो हेतुर्यानद्वयस्य पृथग्व्यवस्थापने। कुतो बोधिचित्तोत्पादमधिकृत्य अनयोर्वैमत्यं नास्ति; यतो हि यानोभयानुयायिनो बोधिसत्त्वाः समस्तसत्त्वानुग्रहार्थं सम्यक्सम्बोधिप्राप्तये प्रयतन्ते। यानद्वयदृष्ट्या अधिगन्तव्यसम्बोधावप्युच्चावचभावो नास्ति।

सर्वधर्मनिःस्वभावज्ञानविषयेऽप्युभयोर्नास्ति मतभेदः, यतो ह्याचार्येनागार्जुनेन नीतार्थप्रज्ञापारमितासूत्राणां यथाऽभिप्रायः प्रत्यपादि, न ततो वैलक्षण्यं किमपि दृश्यते तन्त्रग्रन्थेषु। भवेच्चेत्तथापि नालं पृथग्यानव्यवस्थापने। विज्ञानवादमाध्यमिकभेदभिन्नेऽपि पारमितायाने यथा न भवति पृथग्यानत्वं तथा सर्वधर्मनिःस्वभावताविषये स्यादपि किञ्चिद् वैशिष्ट्यम्, न तेन पृथग्यानव्यवस्था न्याय्या। षट्पारमिताचर्यास्वप्युभयोः समाना निष्ठा। समालोचनयाऽनया प्रतीयते यदुभयोर्यानयोः कायद्वयस्य सिद्धेरुपायेषु प्रज्ञायां च नास्ति मुख्यो भेदः। यद्यपि तन्त्रयाने केचिदेवंविधा

मार्गविशेषा निर्दिष्टाः सन्ति, ये पारमितायाने नोपलभ्यन्ते; तथाप्येतावताऽशक्य-व्यवस्थापनं पृथग्यानत्वम् ।

साधकानां तीक्ष्णेन्द्रियत्व-मन्देन्द्रियत्वादिभेदेन मार्गगतेः शैघ्रयमान्द्यादिभेदेन वा पृथग्यानत्वं व्यवस्थापयितुं न शक्यते; यतः पारमितायाने सत्स्वपि तादृशेषु भेदेषु न पृथग्यानत्वम् । अन्यथा तन्त्रयानेऽपि यानभेदप्रसङ्गो दुर्निवारः ।

अत्र केचिदपसिद्धान्तिनः प्रकारान्तरेण समादधते । त इत्थं प्रतिपादयन्ति यत् सरागेभ्यो विनेयजनेभ्यस्तन्त्रयानम्, वैराग्ययुक्तेभ्यश्च पारमितायानमुपदिष्टम् । अतः कामरागप्रहाणपूर्वकमार्गाभ्यसनं कामरागाप्रहाणपूर्वकमार्गाभ्यसनमेव यानद्वय-भेदनियामकम् ।

नेदं समाधानं समीचीनम् । यतः पारमितायानेऽनेकेऽप्रव्रजिता गृहस्था बोधि-सत्त्वा दृश्यन्ते, यैरब्रह्मचर्यं नाचर्यते । अपरतश्च तन्त्रयानेऽनेके विनेयजनाः कामतृष्णया विरक्ता दृश्यन्ते । पुनश्च तान्त्रिकैस्तन्त्रयानेन बुद्धत्वमधिगम्यते । तदेव तेषामुद्देश्यम्, तदर्थमेव तेषां सर्वः प्रयासः । कामरागादीनप्रहाय बुद्धत्वावाप्तिरशक्यसम्पादना । नापि कामरागप्रहाणं बुद्धत्वप्राप्तिश्च युगपत् सिध्यतः । क्रमेण दोषेषु क्षीयमाणेषु गुणेषु च वर्धमानेष्वन्ते लक्ष्यसिद्धिरिति नियमः । अन्यथा बुद्धत्वलाभेऽपि रागादि-दोषप्रवृत्तिप्रसङ्गः ।

अपरे इत्थं प्रस्तुवन्ति यन्मार्गस्य सुखसहगतत्वासहगतत्वे तथा कायचित्तमर्मा-घातत्वानाघातत्वे यानद्वयस्य भेदप्रयोजके । तेषामपीदं मतं न युक्तियुक्तम्, यतो हि शमथप्राप्तेषु सर्वेषु पुद्गलेषु सर्वप्रथमं कायिकी कर्मण्यता उत्पद्यते, तथा च कायिकी प्रश्रब्धिरुदेति । तथा कायप्रश्रब्ध्या शरीरे महासुखमनुभूयते । तद्बलेन च चित्ते विशिष्टा प्रीतिः संजायते । यया चित्तं स्वपरिगृहीतालम्बने ,चिरं शान्त्या स्थिरी-भवति । शमथस्येदं वैशिष्ट्यं बौद्धा अबौद्धाः सर्व एवामनन्ति । अनेन वैशिष्ट्येन पृथग्यानत्वव्यवस्थापनं दुःशकम् ।

यदि कश्चिदित्थं ब्रूयाद् यच्छुक्लबोधिचित्तरक्तबोधिचित्तयोर्विशिष्टसंहतिमर्मसिद्ध्या द्वयोश्चित्तयोरार्द्रीभावेन तत्त्वार्थावबोध एव सुखसहगतमार्गस्याभिप्रायस्तदेदं केवल-मनुत्तरतन्त्रस्यैव वैशिष्ट्यम्, न तन्त्रयानसाधारणम्; अतो नेदं सम्यक् समाधानम् । एवमेताभिर्युक्तिभिः पारमितायानतन्त्रयानयोर्भेदं व्यवस्थापयितुं न शक्यते । अतः पूर्वोक्तः प्रश्नस्तदवस्थ एव ।

तदिह युक्तियुक्तं समाधीयते—तन्त्रयानपारमितायानयोरधिगन्तव्ये बुद्धत्वफले नास्ति किञ्चिदन्तरम्; यतो ह्युभयोर्यानयोरुद्देश्यं सामान्यतः सर्वासद्दोषदूरीकरणं सर्वसद्गुणसम्पादनं नाम। फले भेदाभावाद् येन तत्फलमवाप्यते, तस्मिन् हेतुयाने भेदसद्भावादुभयोर्भेदो व्यवस्थाप्यते। हेतुयाने भेदसद्भावेऽपि बोधिचित्तोत्पादे षट्पारमिताचर्यायां वा न भेदः।

पूर्वमस्माभिरुक्तं यद् बुद्धस्य यो रूपिकाय आभवाग्रं समस्तभूतानां निरवशेषं कल्याणं साधयति, तस्य सिद्धिरेव महायानस्योद्देश्यम्। तस्याः सिद्धेर्मार्गभूतेषूपायेष्वसाम्याद् यानद्वयस्य पृथग् व्यवस्थापनं भवति। पारमितायाने धर्मकायस्वरूपानुकूला सर्वधर्मशून्यताभावनैवाभ्यस्यते, न तु तत्र सर्वलक्षणव्यञ्जनविभूषितरूपिकायाकारानुकूलो मार्गाभ्यासो विधीयते। तन्त्रयाने तूभयविधकायस्वरूपानुकूलो मार्गोऽभ्यस्यते।

रूपिकायाकृतितुल्यो देवमण्डलयोगाभ्यास एव रूपिकायसिद्धये सर्वश्रेष्ठ उपायराजः। यथा धर्मकामसिद्धये तत्सदृशा शून्यताभावनाऽपेक्ष्यते, तथैव रूपिकायसिद्धये तत्सदृशो देवमण्डलयोगभ्यासोऽपेक्ष्यते। यथा प्रतिपादितं वज्रपञ्जरे प्रथमपरिच्छेदे—

शून्यता चेदुपायः स्यान्नैवं बुद्धो भविष्यति।
हेतुफलयोरन्यत्वादुपायः शून्यता नहि॥

यद्येवं महायानयोरुभयोर्मार्गे भेदः सिद्धस्तदधिगन्तव्ये फलेऽपि भेदो भविष्यति, हेतुभेदस्य फलभेदनियामकत्वात्; अन्यथा हेतुभेदस्यापि व्यर्थत्वापत्तिरित्याक्षेपे—

उच्यते—यानद्वयभेदकत्वेन यन्मार्गभेदः कथितः, सोऽपि केवलमाशुमन्थरप्रापकत्वमूलकः। यथा तन्त्रमार्गेणोपायविशेषानवलम्ब्य साधको झटिति बुद्धत्वपदमधिगन्तुं शक्नोति। पारमितामार्गेण तु त्रीण्यसंख्येयकल्पानि यावत् पुण्यज्ञानसम्भारसञ्चयेन बुद्धो भवति। इत्थं हेतावाशुमन्थरप्रापकत्वभेदेऽपि तत्त्वतो भेदाभावान्न तावत् प्राप्ये बुद्धत्वफले उच्चावचरूपो भेदः, नापि हेतुभेदस्य व्यर्थत्वम्।

यानद्वयाधिगन्तव्यबुद्धत्वफलसाम्येऽपि सन्ति तन्त्रयाने केचिद् विशेषाः, यैः पारमितायानात्तन्त्रयानं विशिष्यते। ते च विशेषा न्यायत्रयप्रदीपे संगृह्यैवमुक्ताः—

एकार्थत्वेऽप्यमोहानेकोपायाकष्टकृत्त्वतः ।
तीक्ष्णेन्द्रियाधिकृत्यत्वात्तन्त्रयानं विशिष्यते ॥

अर्थात् तन्त्रयाने चत्वारो विशेषा भवन्ति, यथा—अमोहत्वम्, उपायनानात्वम्, अकष्टत्वम्, तीक्ष्णेन्द्रियत्वञ्च ।

अमोहत्वम्—पारमितायानानुयायिनो यद्यपि कर्तृ-कर्म-क्रियानिःस्वभावदृष्ट्या दानादिपारमितासु प्रवर्तन्ते, अतस्ते मन्दमेधसो मुग्धा वेति कथयितुं न शक्यते; तथापि यतस्ते बाह्यशरीरादिदानेषु प्रवर्तन्ते, अतस्तेषु नातिकौशल्यमिति सिद्ध्यति । फलतस्ते चिरेण बोधिमवाप्नुवन्ति । तन्त्रानुयायिषु नैवंविधमकौशल्यं मोहो वा । समस्तसत्त्वानां युगपदभीष्टसाधनं पारमितानां परमोद्देश्यम्; किन्तु शरीरादियानेन निरवशेषजीवानां भरणपोषणादिकं नैव भवितुं शक्नोति । समेषां विनेयजनानामभीष्टपूरणं न सामान्यमुद्देश्यमपि त्वत्युत्कृष्टलक्ष्यम्, अतस्तन्न साधारणैरुपायैः साधयितुं शक्यम् । इदमेव कारणं यत्तान्त्रिका एवंविधान् लघूपायान् प्रतिक्षिप्योत्तमोत्तमानुपायानन्वेषयन्ति । अनवच्छिन्नदिक्काला प्रज्ञोपायाद्वयसमाधिरेव स श्रेष्ठोपायो यस्याभ्यासेनानन्तानन्तविनेयानां युगपदभीष्टपूरणं सम्भवति । तस्मिन्नेव काले दानपारमिताया अवशिष्टपारमितानाञ्च पूर्तिः सम्पद्यते ।

उपायनानात्वम्—पारमितायाने ये तपःसंवरव्रतादयः शान्ताचारा उपदिष्टाः सन्ति, न तैः सर्वे सत्त्वा अनुग्राहयितुं शक्याः । तन्त्रयाने नानाध्याशयेभ्यः सत्त्वेभ्यश्चत्वारस्तन्त्रवर्गा उपदिष्टाः सन्ति । तेषु शान्तरौद्रादियथायोग्योपायाः सविस्तरं निर्दिष्टाः सन्ति । साधकाः स्वसन्तानस्थितक्लेशानुसारं कायवाक्चित्तमण्डलेषु प्रवर्तन्ते ।

अकष्टत्वम्—आयासानायासाश्च बुद्धिसापेक्षा भवन्ति; यतो हि कस्मैचिदायासकष्टमपि कस्मैचित् सुखमेव प्रतीयते । अतस्तन्त्रयाने साधका यथेच्छोपायैः स्वपरमोद्देश्यं साधयन्ति । सुखेन सुखोपलब्धिप्रतिपादनात् तन्त्रयाने तपश्चरणादिकं नैवोपदिश्यते ।

तीक्ष्णेन्द्रियत्वम्—श्रावकादयो गम्भीरोदारप्रज्ञोपायानभिज्ञत्वान्मन्देन्द्रियाः, पारमितानुयायिनः समग्रोपायानवबोधेन मध्येन्द्रियाः, तान्त्रिकास्तु सर्वासु दृष्टिषु मोहराहित्यात्तीक्ष्णेन्द्रिया भवन्ति । अतस्ते उपायकुशलतयैवंविधैरपि कर्मभिः सुविशुद्धं स्थानं प्राप्नुवन्ति, यैः कर्मभिरन्ये दुर्गतिभाजो भवन्ति ।

उत्पन्नक्रमसम्पन्नक्रमभावनया द्रुतं बुद्धत्वावाप्तिस्तन्त्रयानस्य गरीयान् विशेषः।

अनेन प्रकारेण परार्थरूपिकायसाधनोपायदृष्ट्या मार्गेषु मौलिकभेदाद् यानद्वयं व्यवस्थापितम्। हीनयानमहायानयोर्भेदः शून्यताज्ञानेन नैरात्म्यज्ञानेन वा न भवति। एवं महायानान्तर्गतपारमितायानतन्त्रयानयोर्भेदोऽपि न प्रज्ञया; अपि तूपायेन। उभयोरपि यो रूपिकायसाधकस्तेन स उपायस्तत्सदृशदेवयोगाभ्यासो नान्यः कश्चित्। अयमेवातिश्रेष्ठ उपायराजः। उपायरहितया प्रज्ञया, प्रज्ञारहितेन वोपायेन बुद्धकायो नैवावाप्यते, तथा ऋते धर्मकायेन रूपिकायस्य, रूपिकायेन वा ऋते धर्मकायस्य प्राप्तिर्न कथमपि सम्भवति। उभयोः काययोर्युगपत्प्राप्तौ सत्यामपि तयोः पृथगसाधारणा हेतवो भवन्ति। विषयेऽस्मिन् उभयोर्यानयोरविसंवादेऽपि रूपिकायसिद्धये तन्त्रयाने यथोपायसामर्थ्यं न तथा पारमितायाने। फलतो यानद्वयमार्गेषु शीघ्रगामित्वमन्दगामित्वबह्वायासत्वनिरायासत्वादयोऽनेके विशेषा भवन्ति।

तन्त्राणामसाधारणवैशिष्ट्यप्रदर्शनेऽनेकानि गम्भीराणि युक्तिसङ्गतानि रहस्यानि सन्ति, किन्तु तानि प्रकाशानर्हाणि जनसम्मर्देऽनभिधेयानि च भवन्ति, तथा तेषां यथार्थव्याख्याने योग्यतायाश्चाप्यभावाद् दिङ्मात्रनिर्देशेन विरम्यते॥



# सिद्धावधूतानां दार्शनिकसिद्धान्तः

योगिशङ्करनाथः फलेग्रहिः, विट्ठलयोगीश्वरमठस्थः ।

यदवधि पाको न जायते तदवधि पचामीत्येव प्रयोगो दरीदृश्यते । तस्मिन् सिद्धे सति व्याप्रियमाणायाः क्रियाया विनिवृत्तिः सुतरां भवति । तदाऽग्न्यादि-व्यापाराणामावश्यकता शाम्यति । एवमेव सिद्धावधूतैर्यदा. योगाभ्यासासादिता काचिदुन्मन्यावस्था सहचारिणी सहजावस्था स्वस्था भवति, तदा तेषां कृते सन्यासा-श्रमोऽपि साधनकोटौ गण्यते ।

तत्रापि तत्त्वज्ञानस्य सम्पादका ये यमनियमादयः सन्ति, तेऽपि तद्द्वारा स्वयं त्यक्ता भवन्तीति । यदवधि देहाध्यासस्तदवधि वर्णाश्रमाणां धर्माणां धारणं ज़ागरूकतया जागाद्धि । देहाध्यासस्य विनिवृत्तौ सत्यां विहितानां हितानामपि कर्मणां निवृत्तिः स्वत एव जायते । आगमनिगमाज्ञाविहीनोऽदीनो दीन इव निस्त्रै-गुण्याख्यविनिविष्टः, क्वचिच्च शिष्टैरनाद्रियमाणोऽपि यत्र कुत्रापि सर्वत्र वा सिद्धाव-धूतो निर्धूतरजा विचरति, चरति च यथोपनतम् ।

एतस्यामवस्थायां सर्वं निषेधात्मकं भवति, यत् किमपि निरूपणं दृष्टचरमभि-चाकशीति, यथा सर्वातीतस्य ब्रह्मणो नेति नेति वाक्येनोपदेशप्रकारो निषेधरूपेण बाभाति, परमार्थरूपेणान्यधर्माणां कर्मणां च निषेधः सिद्धावधूतावस्थायां स्वस्थायां भवत्येव स्वस्मादेव ।

नहि स निषेधो व्यावहारिकत्वमासेदुषो जनान् प्रति कथाप्यते । सिद्धावधूतानां मते सिद्धिं विना प्रसिद्धानां साधनानां त्यागोऽपि सौकर्यं नार्हति । आप्तकामस्य का स्पृहेति श्रुतेः ।

सिद्धावधूतानां दार्शनिकसिद्धान्तस्तु द्वैताद्वैतविलक्षण एव । द्वैतमपि नास्ति, अद्वैतमपि नास्ति । तथा च महामहोपाध्यायडा०गोपीनाथकविराजमहोदयैः प्रकाशिते गोरक्षसिद्धान्तसंग्रहे सिद्धानवधूतानुद्दिश्य भूयोभूय उपादेशि, तथाहि—

नश्यति चेत् कथं सत्यम् ? दृश्यते चेत् कथं वृथा ?<br>
सिद्धानामेष सिद्धान्तः सत्यमिथ्याविवर्जितः ॥

अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे।
समं तत्त्वं न विन्दन्ति द्वैताद्वैतविलक्षणम्॥

अथ च सिद्धावधूताः कथयन्ति, द्वैतस्याभाव एवाद्वैतं वस्तु। द्वैतं विनाऽद्वैतं न सिद्ध्यति, अद्वैतात् पूर्वं द्वैतं ह्यपेक्षितं भवति। प्रतियोगिनीं धियं विना चाभावोऽपि न प्रवर्तते। यदि चाभावः सत्यस्वरूपः? तर्हि सत्यस्वरूपस्याभावस्य निषेधो व्यर्थ एव स्यात्। यदि चाभावोऽसत्यस्वरूपस्तदापि तस्य निषेधो व्यर्थतामियात्। सत्यस्याभावस्य निषेधः केनाऽपि कर्तुं न शक्यते, "नासतो विद्यते भावो नाभावो विद्यते सतः" इति महदुक्तेः।

असत्यस्याभावस्य निषेधो भेकरसनायितः स्यात्। येनाद्वैतं मन्यते तेन बलाद् द्वैतं मन्यताम्। द्वैतपदार्थो यद्यभावरूपस्तर्ह्यभावस्याभावः कर्तुं न शक्यते। अभावस्याभावोऽपि भावरूप एव भवति। पुनर्निषेधादिकं क्रियते चेदनवस्थादिदोषाः प्रसज्येरन्, अनिषेधे द्वैतापत्तिः स्यात्। निषेधे पिष्टपेषणं सम्पनीपद्येत, तदग्राह्यमेव। पूर्णं तत्त्वं यद्येकं तर्हि तस्मिन् द्वैतं कुतः समागतम्? अद्वैतेन सति द्वैतेऽवकाशो नेतुं न शक्यते। तथाहि—यदि च भवन्तः कथयेयुः पूर्वमस्माभिर्जगत आरोपः क्रियते पश्चाच्च तन्निषेधः करिष्यते? तन्न; सिद्धावधूताः कथयन्ति—"प्रक्षानलाद्धि पङ्कस्य दूरादस्पर्शनं वरम्।" पूर्वं द्वैतस्यारोपं कृत्वा पश्चात्तन्निषेधात्तु आरोप एव न क्रियताम्, किमर्थं मुधा प्रयासः क्रियते। सिद्धावधूता आरोपनिषेधौ द्वावपि न कुर्वन्ति। यादृशं भवति तादृशं तिष्ठतु। न द्वैतं कामयन्ते, नाद्वैतं कामयन्ते। एतेषां मते जगतः प्रातिभासिकी सत्तास्ति, वेदान्तिनां नये व्यावहारिकी। अर्थात् सिद्धावधूतानां मते पूर्णतयाऽजातवाद एव। भगवता गोरक्षनाथेन सिद्धसिद्धान्तपद्धतौ "वक्ष्येऽसत् सम्प्रदायतः" इत्यनेनाजातवाद एव प्रादर्शि। एतन्नये कालत्रयेऽपि जगन्नास्ति। तथा च भगवान् गौडपादः सिद्धावधूतानधिकृत्याह—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥ इत्यादि।

अनेनाप्यजातवाद एव प्रदर्शितो भवति, सिद्धावधूतानां नये मुक्तिरपि कल्पित एव पदार्थः। यतो हि सा मुक्तिर्बद्धस्य नाबद्धस्येति, अर्थाद् बन्धनाभावे मोक्षोऽपि नास्ति। सिद्धावधूता एकं ब्रह्म विहाय जीवं मायां चापि न मन्यन्ते।

द्रष्टुरभावो नास्ति, द्रष्टा चेतन एक एव सर्वोपरि विराजते। तिसृष्ववस्थासु, तिसृषु दशासु, त्रिषु कालेषु, चतुर्षु युगेषु, बाल्यमारभ्य यौवनावधिः, यौवनमारभ्य वार्द्धक्यावधिरनुभविता चैक एव वर्तते। अहं तमनुभवामि यदपश्यमिति। येन दृष्टं स एव स्मरति, बाल्ये दृष्टस्य यौवने स्मृतिः, स्वप्ने दृष्टस्य जागरे स्मृतिः। सिद्धावधूताः कथयन्ति यदवधिः पक्षपातस्तदवधिर्न च मुक्तिरिति। पक्षपातानां बहवो भेदाः सन्ति, तथाहि—कस्यापि देहाभिमानस्य पक्षपातः, कस्यापि वर्णाभिमानस्य पक्षपातः, कस्यापि स्वाश्रमाभिमानस्य, कस्यापि धनाभिमानस्य, कस्यापि जनाभिमानस्य; अर्थाद् यस्मिन् कस्मिन्नभिमतिरस्ति तत्रैव गुणाभिमानिनां पक्षपातः प्रवर्तते।

गुणानामेतादृशोऽभिनिवेशोऽस्ति, जिहासायां जायमानायामपि त्यक्तुं न शक्यते पक्षपातः।

वार्ता चेयमस्ति गुणानतीत्यैव मुक्तो भवति। चातुर्वर्ण्योऽन्तःपाती, गुणाभिमानी पुमान् कर्हिचिदपि मुक्तिं नाप्नोति। यदवधि वर्णाभिमानस्तदवधि गुणानां त्यागो बहुदुष्करः। यावन्तो वर्णा विलसन्ति, तेषां निर्माणं गुणैरेव भवति। वर्णाभिमानदशायां यदि गुणानां त्यागः स्यात्, तदा वर्णसद्भावोऽपि नश्येत्।

यतो हि गुणमूलकत्वादेव वर्णत्वस्य तत्कार्यतायाश्च ये खल्वाश्रमिणः सन्ति, तत्राप्याश्रमाभिमानः प्रवर्तत एव। अत एवाश्रमाभिमानवतामपि मुक्तिर्भवितुं नार्हति पुंसाम्। प्रथमं तु वर्णव्यवहारमाश्रित्य गुणभाजस्ते, तत्रापि गुणवृत्तिषु सत्त्वगुणवृत्तय उत्तमाः कथिताः, रजस्तमोवृत्तयस्ततो निकृष्टा भवन्ति, अर्थाद् गुणेष्वप्युत्तमादिव्यवहारः सुतरां स्पष्टतामाचष्टे; परन्तु गुणवृत्तीनां सर्वसाधारण्यमस्ति नास्ति विसंवादः। अत एव सिद्धावधूतानां मते नास्ति गुणवृत्तीनां मुक्तिसाधकत्वम्। यतो ह्याश्रमवन्तो ये सन्ति, प्रथमतो वर्णाभिमानेन गुणभाज एव सन्ति। ते च परत्रापि प्रारब्धमङ्गीकृत्याद्धा फलं भुञ्जाना भवन्ति। सिद्धावधूतानां नये प्रारब्धकर्माण्यपि नश्यन्ति, यतो हि ते यदा समाहितात्मानो भूत्वा परमात्मानं करतलामलकीकृत्य कणेहत्य द्वादशवर्षावधि भोजनमपि न कुर्वन्ति, न शेरते; समावेः सकाशादुत्थानात् पश्चाद् भुञ्जाना भवन्ति। वेदान्तिनः प्रारब्धकर्मणां भोगोऽवश्य इति कृत्वा कर्मणां सत्यत्वं दर्शयन्ति। सिद्धावधूता एवात्याश्रमिणो भवितुं पारयन्ति, अतो गुणातीतत्वेनात्याश्रमिणामेव सिद्धावधूतानां मुक्तिप्रदगुरुत्वमिति। तेषां वर्णनं कुर्वन्ति भूयांसि शास्त्राणि भूयो भूयः। सिद्धावधूतानां मते सूक्ष्मवेदत्वेन प्रणव एवोपास्यः। प्रणवे सर्वासां विद्यानां लयोदयौ

भवतः। प्रणव एव पराविद्यात्वेनोदीर्यते। तथा च परायणे तदक्षरमधिगम्यते। सिद्धावधूताः कथयन्ति—अयं देहः कर्मभिर्निष्पन्नः, कर्माणि च सर्वाणि त्रिगुणानां सन्ति, गुणाश्चेमे मायाया विद्यन्ते। एवं चानेन मानवेन यदि प्रारब्धकर्माणि स्वीकृतानि, तदा ज्ञायतां मायैव स्वीकृतेति; तदभिमानेन तत्रैव ब्रह्मतत्त्वात् पृथग् भूतः संजातः; ततश्च पूर्वं पश्चादपि गुणलेशो विद्यत एव। स च गुणलेशः सर्वथा बाधक एव ज्ञायताम्। तस्मात् प्रारब्धनिर्मूलकरणं कर्म सिद्धावधूतानामेव। वेदान्तिनः—चित्तशुद्ध्यर्थं कर्माण्यभिमत्य ततः पश्चाद् ज्ञानस्य साधनमित्युपदिशन्ति, अतस्तेषां सापेक्षता प्रसिद्धैव। सिद्धावधूताः कस्याप्यपेक्षां न कुर्वन्ति। मीमांसको द्वैतं मनुते, वेदान्ती चाद्वैतं मनुते; परन्तूभयत्रापि प्रकृतिव्यापारोऽस्ति। प्रकृतिविकाराः कदापि निश्चला न भवन्ति, ब्रह्म तु सर्वदा स्थेय एवास्ति। सिद्धावधूतानां कथनं यदि ब्रह्माऽद्वैतमस्ति, तर्हि द्वैतं कुतः केन हेतुना समागतमिति ?

यदि ते मायाकल्पितं वदेयुस्तदा वयमपि तान् कथयामः—इयं माया कुतः समागता ? अज्ञानात् समागता। अज्ञानं कुतः समागतम् ? प्रपञ्चात् समागतम्। प्रपञ्चः कुतः समागतः ? प्रकृतेः सकाशात् प्रपञ्चः समागतः। प्रकृतिः कुतः समागता ? मायातः समागता। माया कुतः समागता ? अज्ञानाद् माया समागता। इत्थं तत्रैवावलम्बते वेताल इति न्यायेन चक्रकापत्तिरन्योऽन्याश्रयश्चान्येऽपि भविष्यन्ति कार्पण्यमुपेयिवांसो दोषाः। तथा च सिद्धान्तबिन्दौ—"न चैकं तदन्यद् द्वितीयं कुतः स्यात्"। एतत्तु द्वैताद्वैतविलक्षणः सिद्धावधूतानामेव सिद्धान्तो जातः। अत्र त्वेकस्यापि निषेधः। योगवाशिष्ठे ग्रन्थेऽपि चाधिक्येन योगस्यैव पन्थानमवलम्ब्य सिद्धावधूतानामेव सिद्धान्तः प्रादर्शि भगवता वशिष्ठेन श्रीमहाराजं रामं प्रति साम्प्रतम्।

सिद्धावधूताः कथयन्ति—सर्वाणि शास्त्राणि तुल्यानि न सन्ति; कानिचित् शास्त्राणि मोक्षरक्षकाणि सन्ति, कानिचिच्च व्यवहारसाधकानि वर्तन्ते। तत्र मोक्षस्य रक्षकाणि योगशास्त्राणि भूयांसि न सन्ति, व्यवहाररक्षकाणि श्रुतिस्मृत्यादीनि चाधिकानि विद्यन्ते। मुक्तिमिच्छवः पुमांसः कोटीनां मध्ये द्वित्रा एव भवन्ति। व्यावहारिकजनानां तु संख्या कर्तुं न शक्यते। योगशास्त्रं तु सूक्ष्मं कथम् ? मुमुक्षुपुरुषाणामल्पत्वात्। वेदादिशास्त्रेष्वपि सिद्धावधूताभिमतयोगो वर्तत एव। सर्वेषां तात्पर्यं तत्रैवास्ति। परन्तु चानया गत्या ज्ञायताम्—यथा समुद्रे रत्नानि,

शङ्खाः, पाषाणखण्डानि, जलम्, जलजन्तवश्चेत्यादीनि बहूनि वस्तूनि सन्ति, तथा निगमागमशास्त्रेष्वपि सिद्धावधूताभिमतयोगादीनि सन्ति। सागरे इतरवस्तु तु सौलभ्येन लभ्यते, रत्नानि खलु भूयसा श्रमेण लभ्येरन्, इत्थं वेदादिशास्त्रे व्यवहारादि सौलभ्येन लभ्यते, तदभिमतयोगस्तु भूरिश्रमेण लभ्यते. तदभिमतयोगशास्त्रे योग एवासाद्यते, नान्यदस्ति किञ्चित् फल्गु वस्तु। यथा रत्नानां खनौ रत्नान्येव प्राप्येरन्। स च योगो गुरुकृपयाऽल्पीयसोपायेनैव प्राप्तः स्यात्।

सिद्धावधूतानां निगमागमबन्धनं सर्वथा नास्ति। ते कथयन्ति—वेदास्तु कर्मावरणनिरूपकाः सन्ति। यथाधिकारमधिकारिणामेवौचित्यं दर्शयन्ति। एते सिद्धावधूतास्तु संसारत्यागिनो निष्कर्माणश्च भवन्ति। किञ्च, वेदेषु मुख्यत्वेनाग्निहोत्रादिकर्माणि दृश्यन्ते, तानि च प्रायेणाग्निसाध्यानि सन्ति, एते तु नाग्नेः स्पर्शमपि कुर्वन्ति, "अग्नेरेव गृहपतित्वमिहाग्ने गृहं ते" इत्यादिश्रुतेः। यतः सिद्धावधूतानां किमाचरणमुपचार्यं वेदा निरूपयेयुः। वाचो विग्लापनं मत्वाऽध्ययनाद् विरमन्ति सिद्धावधूताः, "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" इति श्रुतेः।

बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम्।
अन्वेष्टव्यं प्रयत्नेन तज्ज्योतिरान्तरं सदा ॥

किं चैतेषां सत्यस्वरूपभूतानां महिमानं निरूपयन्तो वेदा मुह्यन्तीवावृत्तिविषयत्वात्। यथा च कर्मकाण्डे मुख्यमपि ज्ञानम्, न तु सत्यत्वेन दर्शयन्ति; दर्शिते च तस्मिन् कर्ममोह एव स्यात्। एवं च ज्ञानकाण्डे सिद्धावधूताभिमतयोगे तन्महिम्नि च दर्शिते ज्ञानं मोहः स्यादिति। अतः सिद्धावधूतानां सिद्धान्ते ग्रन्थभारवहनं वृथैव वर्तते। किन्तु तदन्तर्गतसोपयुक्तसारमात्रं श्रीगुरुवाक्याद् गृहीत्वा कृतकृत्यो भवेदिति। श्रुतिस्तु सिद्धावधूतानां मतेऽपि साधिकैव वर्तते। परन्त्वेतन्मतस्य बोधः सर्वेषां नास्ति, अत एव कथयन्ति, सिद्धावधूतानां मते श्रुतिः साधिका नास्तीति।

अयं भावः—वेदस्तु शाखाभेदेन बहुधा विस्तृतो वर्तते। तत्र पञ्चाशत्संख्याका उपनिषदां निबन्धा विद्यन्ते। ततोऽप्यधिका उपलभ्यन्ते। न निबन्धेन प्रायो निगमव्यवहारः। तत्रापि—परस्परमाचार्या विवदमाना सन्ति। स्वाभिप्रायानुसारं वेदस्य तात्पर्यं वर्णयन्ति, तावत् तत्तात्पर्यं तेषामेव, न तु साक्षाद् वेदस्य; यथा विरोचनो भगवता प्रजापतिनानुशिष्टोऽपि स्वचित्तदोषेण देहात्मवादमङ्गीकृत्य सर्वानसुराननुशशास। एषा छान्दोग्ये स्पष्टमाख्यायिकास्ति। अतः सिद्धावधूतानां वेदविधौ प्रयोजनमेव नास्ति। सर्वेषां वेदानां

मूलभूतः प्रणव एव प्रयोजनं तात्पर्यं च तेषाम्। यतो हि वेदानां सारतरः प्रणवः कथितः। अतः प्रणव एव वेद इत्युदीरितमेव ब्रह्म। तद्द्वारा तत्प्रवर्तकनादब्रह्मो-त्यवलम्ब्य नादब्रह्मणो यन्मूलं तत्तत्त्वमिति सिद्धावधूतानां नये विज्ञेयमिति। "प्रवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः" इति वाक्यपदीये। सिद्धावधूताः कथयन्ति वेदस्य पूर्वभागे ज्ञानं वाच्यार्थेन न दर्शितम्, किन्तु तात्पर्यं ज्ञान एव वर्तते। एवं वेदस्य पूर्वभागे ज्ञानं यथा तात्पर्येण विद्यते, तथा वेदान्तभागेऽपि सिद्धावधूतानां मान्यो योगोऽपि तात्पर्येण विराजते। एवं बहुधा वाच्यार्थेनापि सिद्धावधूतानां सिद्धान्तो दर्शितो द्वैताद्वैतविलक्षणो विद्यते, यश्च द्वैताद्वैतहीनः।

अथ च केचित् कथयन्ति—ज्ञानिनां ज्ञानं स्वतन्त्रमस्ति, तज्ज्ञानं कर्मणा-मपेक्षां न करोति। एतद् विलोक्य सिद्धावधूता हसन्ति, अहो सापेक्षमपि निरपेक्षं भवन्तो वदन्ति। दृश्यतां भवदीयमते सर्वाणि शास्त्राणि हस्तावुद्यम्योद्घोषं कुर्वन्ति, तथाहि—कर्मणा चित्तशुद्धिः, ततः पश्चात् कर्मणां त्यागः क्रियते, ततः पश्चाद् ज्ञान-मुदेति, ज्ञानान्मोक्षः, "ऋते ज्ञानान्न मोक्षः" इति श्रुतेः। सम्प्रति भवन्त एव विवेच-यन्तु; कर्मसापेक्षं ज्ञानं कर्मनिरपेक्षं वा ? नाद्धा वयं विप्रलब्धाः स्म, अन्यत्रापि दृष्टिक्षेपः क्रियताम्, सहस्रशः स्थलेषु कर्मसापेक्षं ज्ञानमस्ति। क्वचित् सिद्धावधूता विषयवर्णन-व्याजेन निषेधयन्त्यपि, इत्थं सिद्धावधूतानां मते प्रकृतिरपि ब्रह्मैव विद्यते। शिव-शक्त्योरभेदं मन्वाना एते भवन्ति, एकं विना परस्य सत्ता नास्ति; शिवं विना शक्तिः, शक्तिं विना शिवः; उभयोरपि तादात्म्यं विद्यते। तथा च सिद्ध-सिद्धान्तपद्धतौ—

शिवस्याभ्यन्तरे शक्तिः शक्तेरभ्यन्तरः शिवः।
अन्तरं नैव जानीयात्, चन्द्रचन्द्रिकयोरिव॥

त्यागोऽपि सिद्धावधूतानां सर्वोपरि विराजते, अन्ये त्यागिनस्तथा कर्तुं न पारयन्ति, अन्ये च सञ्चितानि करिष्यमाणानि कर्माणि जहति। सिद्धावधूतास्तु प्रारब्धमपि त्यजन्ति। शून्ये तत्त्वे विलीयमाने प्रारब्धकर्मणां स्वत एव त्यागः स्यादित्यन्येऽपि तथा मन्यन्ते। अत्र तु "शतायुर्वै पुरुषः" तेषां तु लक्ष्याणामायूंषि। सिद्धावधूताः कथयन्ति—यदा देवश्चिन्तनीयः, तदा तेषां शास्त्रपठनेनापि किमिति समाहितधियाम् ? तदुक्तं भर्तृहरिणा भगवद्गोरक्षशिष्येण—

तार्किका घटपटेति रटेयुः शाब्दिकाः ख-फ-छ-ठेति पठेयुः।
मादृशां तु सततं स्मरणीयौ चन्द्रचूडचरणौ रमणीयौ॥
अवधूतानां मनोविकारोऽपि नास्ति।

चाण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः
किं वा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम्।
इत्युत्पन्नविकल्पजल्पमुखरैः संभाष्यमाणा जनै-
र्नो क्रुद्धाः पथि नैव तुष्टमनसो गच्छन्ति ते योगिनः॥

स एव हरिः पुनरप्याह—

ददतु ददतु गालीं गालिमन्तो भवन्तो
वयमपि तदभावाद् गालिदानेऽप्यशक्ताः।
जगति विदितमेतद् दीयते विद्यमानं
नहि शशकविषाणं कोऽपि कस्मै ददाति॥

अनया लघीयस्याख्यायिकया तदुक्तं मतं द्रढीयः स्यात्, एकदा भगवतो गोरक्षनाथशिष्यो भर्तृहरिः स्वेच्छया सिद्धावधूतः सन् कपिशवर्णां कापोतिं वृत्तिमाश्रित्य पण्यवीथिकायां कणानादाय चर्वयन् नृपतिना विक्रमार्केणादर्शि। स ज्येष्ठो भ्रातैव, तथापि सिद्धावधूतस्तेन नाज्ञायि। एतादृशीं गतमवस्थांतं विलोक्य विक्रमादित्यो जगाद–अहो! अस्यापि जननी यत्रैतादृशः पुरुषो जनितो यश्च स्वोदरभरणेऽप्यसमर्थः। एतत् श्रुत्वा किमुक्तं सिद्धावधूतेन? अहो! तस्यापि जननी धिक् खलु यः समर्थोऽपि परोपकारकरणेऽसमर्थः संजातः। यदा चैतादृशविवेकशाबल्योपोद्बलितं वचनं श्रुत्वा राजा महान् विचक्षणः स्वकीयं ज्येष्ठं भ्रातरं परमपुरुषं विज्ञायार्वत उत्तीर्य शीघ्रं तच्चरणे निपपात। तदा सिद्धावधूतेन भर्तृहरिणोपदेशो विक्रमादित्याय लघीयसे भ्रात्रे प्रादायि, चोपादेशि च। तदा शास्त्राज्ञायां परोपकारकरणे च नृपतिः प्रववृते। तेन महान्तं प्रतापं प्राप सः। अतः सिद्धावधूता निर्धूतवेदबन्धना अपि सिद्धावधूतपदानधिकारिणं पुमांसं शास्त्रपदान्न प्रच्यावयन्ति। एवमेवं सिद्धावधूता अकामिनः कोपरहिता हिताय सर्वेषां भुवस्तले विचरन्ति।

अलक्ष्यलिङ्गो निजलाभतुष्टो वृतस्त्रिबालैरवधूतवेषः।

अथ सिद्धावधूतानां दार्शनिकत्वे मानानि—

आब्रह्मस्तम्बपर्यन्तं सम्पूर्णं परमात्मनि ।
भिन्नाभिन्नं न पश्यामि तस्याहं पञ्चमाश्रमी ॥

( अवधूतगीतायाम् )

वर्णाश्रमाभिमानेन वर्तते श्रुतिकिङ्करः ।
अभिमानविहीनस्तु वर्तते श्रुतिमूर्धनि ॥

( ध्यानबिन्दूपनिषदि )

शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।
परमं ब्रह्म विज्ञाय उल्कावत् तान्यथोत्सृजेत् ॥

( अमृतनादोपनिषदि )

यथा घृतेन तृप्तस्य पयसा किं प्रयोजनम् ।
एवं तत्त्वपदे प्राप्ते वेदे नास्ति प्रयोजनम् ॥

( उत्तरगीतायाम् )

यथा काशीं समुद्दिश्य गच्छद्भिः पथिकैः पथि ।
नानातीर्थानि दृश्यन्ते तथा मोक्षे तु सिद्धयः ॥

( योगबीजे )

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥

( श्री० भ० गी० )

इत्थं सिद्धावधूतानां विषयं लक्ष्यीकृत्य सहस्रशो ग्रन्था व्याप्ताः सन्ति, तत एव जिज्ञासुभिर्द्रष्टव्यमस्ति । लेखस्य भूयिष्ठो विस्तरो न स्यादेतदर्थमेतावतैव विरम्यतेतराम् ॥



# जपरहस्यम्

श्रीविष्णुदत्तशास्त्री, तान्त्रिकरत्नम् , मथुराभिजनः ।

शिवादिमाम्बानन्दान्तगुरुमण्डलरूपिणी ।
प्रीणातु सच्चिदानन्दविग्रहा श्रीः पराचितिः ।।
चितिः स्वतन्त्रा विश्वसिद्धिहेतुः ।

जपो नामोपांशुप्रयोगः, यथा जले निमग्नस्य, ( सिद्धान्तकौमुद्याम् ) ज्ञानार्णवे च—

निगदेनोपांशुना वा मानसेनाथवा जपेत् ।
निगदः परमेशानि स्पष्टं वाचा निगद्यते ।।
अव्यक्तश्च स्फुरद्वक्त्र उपांशुः परिकीर्तितः ।
मानसस्तु वरारोहे चित्तेनान्तररूपवान् ।।
निगदेन तु यज्जप्तं लक्षमात्रं वरानने ।
उपांशुस्मरणेनैव तुल्यं भवति शैलजे ।।
उपांशुलक्षमात्रं यज्जप्तं हि कमलेक्षणे ।
मानसस्मरणेनैव तुल्यमेकेन सुन्दरि ।।

स्वच्छन्दतन्त्रसारे तु—

जपस्तु षड्विधः प्रोक्तस्तत्प्रकारोऽयमुच्यते ।
वाचिकं मानसं चैव यौगिकं योगवाचिकम् ।।
योगमानसिकं चैव वाङ्मानसिकयौगिकम् ।
वाचा केवलयोच्चार्य मन्त्रं देवीं विभाव्य च ।।
जपेद्यत् परमेशानि वाचिकं तत्प्रकीर्तितम् ।
देव्या रूपं च संचिन्त्य सावधानेन चेतसा ।।
मन्त्रस्याप्यनुसन्धानं मानसं परिकीर्तितम् ।
त्रिस्थानेन त्रिबीजानि क्रमात् संचिन्त्य मार्गतः ।।

आरोहो यौगिकं प्रोक्तमुच्यते योगवाचिकम्।
लक्ष्ये मनः समायोज्य वाचा मन्त्रं जपेच्छिवे ॥
योगवाचिकमेतत् स्याद्योगमानसिकं शृणु।
लक्ष्येण मानसं पूर्वं संयोज्य मनसा जपम् ॥
योगमानसिकं विद्यादथान्यदपि चोच्यते।
मनसाऽपि जपेन्मन्त्रं बीजानारोहणक्रमात् ॥
वाङ्मानसिकयोगाख्यं जपमेतदनुत्तमम्।
वाचिकेन जपेनैव केवला वाक् प्रवर्तते ॥
मानसाच्छ्रियमाप्नोति यौगिकाद्योगसिद्धयः।
वाङ्मानसजपेनैव वाग्ज्ञानैश्वर्यसिद्धयः ॥
भवन्ति परमेशानि योगमानसिकेन तु।
अणिमादीनि चान्यानि सर्वाणि लभते ध्रुवम् ॥
वाङ्मानसिकयोगाख्यजपेन परमेश्वरि।
वागाद्यकुलपर्यन्तमचिराल्लभते नरः ॥
येन केन जपेनैव ह्रस्वदीर्घप्लुतक्रमात्।
जप्ता विद्याश्च मन्त्राश्च सर्वे सर्वार्थदायिनः ॥

उक्तं च कुण्डिकातन्त्रे—

श्रीपार्वत्युवाच

भगवन् सर्वदेवेश लोकानां हितकारक।
चतुर्वर्गप्रदं देव चैतन्यं मे प्रकाशय ॥

श्रीशंकर उवाच

शृणु देवि प्रवक्ष्यामि चैतन्यं परमाद्भुतम्।
रहस्यं परमं पुण्यं गोपनीयं त्वया पुनः ॥
चिच्छक्त्या ध्वनितं देवि परिणामक्रमेण तु।
वर्णभावं समात्यज्य निर्मलं विमलात्मकम् ॥
षट्चक्रं च तथा भित्वा शब्दरूपं सनातनम्।
नादबिन्दुसमायुक्तं चैतन्यं परिकीर्तितम् ॥

अथवाऽन्यप्रकारेण श्रूयतां पद्मलोचने।
विना येन न सिद्ध्येत्तु जपपूजादि किञ्चन॥

अनाहतस्य मध्ये तु ग्रथितं वर्णमुत्तमम्।
सुषुम्नावर्त्मना देवि कण्ठदेशे विनिर्गतम्॥
चैतन्यं च महादेवि योगिनां योगरूपकम्।
सहस्रारे वर्णरूपं परिणामक्रमेण तु॥

कर्णिकामध्यसंस्थे तु नादबिन्दुसमन्वितम्।
एवं संचिन्तयेद्देवीं चैतन्यं च पुनः पुनः॥

मन्त्राक्षराणि चिच्छक्तौ ग्रथितानि महेश्वरि।
तानि संचिन्तयेद्देवि सहस्रारदले तथा॥

चैतन्यमन्त्ररूपा च चैतन्यानन्ददायिनी।
चैतन्यनादशक्तिश्च चैतन्यवर्णरूपकम्॥

मणिपूरं सदा चिन्त्यं मन्त्राणां प्राणरूपकम्।
अथवाऽन्यप्रकारेण श्रूयतां वरवर्णिनी॥
कामबीजं रमाबीजं शक्तिबीजं सुरेश्वरि।
एतानि पूर्वमुच्चार्य मातृकास्तदनन्तरम्॥
पुटितं मूलमन्त्रं च शतमष्टोत्तरं जपेत्।
कोटि-कोटिगुणं चैव लभते नात्र संशयः॥
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः।
न सिद्ध्यति वरारोहे कल्पकोटिशतैरपि॥
ईंबीजेनैव पुटितं मूलमन्त्रं जपेद्यदि।
तदेव मन्त्रचैतन्यं भवत्येव सुनिश्चितम्॥

अथ यौवनोल्लासे—

अत्र सूत्रकृतः पुरश्चरणादिकं न विधित्सितम्, काम्यकर्मण्येव तस्यावश्यकत्वात्। "मपञ्चकालाभेऽपि नित्यक्रमप्रत्यवमृष्टिः। पञ्चपर्वसु विशेषार्चा च" इत्येताभ्यां सूत्राभ्यां नित्यनैमित्तिकावेव क्रमावभिधाय। यदि काम्यमीप्सेत्,

तथाहि—

शुभं वाऽप्यशुभं वापि काम्यं कर्म करोति यः।
तस्यारित्वं व्रजेन्मन्त्रो न तस्मात्तत्परो भवेत्॥
काम्यकर्मप्रसक्तानां तावन्मात्रं भवेत् फलम्।
निष्कामं भजतां देवमखिलाभीष्टसिद्धयः॥

किन्तु जपादौ मुखकरसम्पुटादिषडङ्गमुद्रा अवश्यमेव दर्शितव्याः। तथा चाजपां विना जपो व्यर्थः, शास्त्रसम्मतत्वात्। यथा—

धूलीकालयुतं शाकं गोत्रगायकवर्द्धनम्।
कुलैराप्तं फलं सैकं गतसंक्रान्तिरङ्ककान्॥
गतदिनानि संयोज्य कलेरादिरहर्गणः।

इति क्रमादष्टाङ्गनिःसारणं कृत्वा पूर्वं तावदजपां कुर्यात्।

यथा स्वहृदिलयं भावयेत्, ततो मूलाधारादिब्रह्मरन्ध्रान्तं सहस्रसूर्यप्रभं सुषुम्णाऽन्तर्गतं दण्डनिभं मूलमन्त्रं ध्यात्वा तत्तेजोव्याप्तं स्वशिरः संचिन्त्य मूलेन प्राणायामत्रयं कृत्वा ऋष्यादिन्यासं च विधाय स्वहृदि स्वेष्टदेवतां ध्यात्वा प्रणमेत्।

गणेशब्रह्मविष्णूंश्च शिवजीवपरेश्वरान्।
षट्चक्रदेवता नौमि मूर्ध्नि श्रीगुरवे नमः॥

ॐ गतारुणोदयादद्यारुणोदयपर्यन्तं कृतेनाजपाजपेन षट्शताधिकैकविंशति-सहस्रेण भगवान् गणपतिर्ब्रह्मा विष्णुर्महेश्वरो जीवात्मा परमात्मा गुरवः प्रीयन्ता-मिति समष्ट्या निवेद्य व्यष्ट्यां निवेदयेद्यथा मूलाधारे चतुर्दले वं शं षं सं अष्टाङ्गं ॐ गं गणपतये नमः, भगवते गणपतये हंसषट्शतमजपाजपं निवेदयामि, तेन भगवान् गणपतिः साङ्गोपाङ्गः सावरणः सायुधः सवाहनः सशक्तिकः प्रीयतां श्रीगणपति-स्वरू० श्री० पा० पू० मानसोपचारैः संपूज्य ध्यात्वा दशधा च जप्त्वा गुह्येति निवेदनम्। सर्वत्र पुनः स्वाधिष्ठाने षड्दले बं भं मं यं रं लं अष्टाङ्गं ॐ नमो ब्रह्मणे हंसः षट्सहस्र-मजपाजपं निवेदयामि, तेनाजपाजपेन भगवान् ब्रह्मा साङ्गोपाङ्गः......ब्रह्मा रू० श्री०। तथा च मणिपूरे दशदले डं ढं णं तं थं दं धं नं पं फं अष्टाङ्गम् ॐ नमो नारायणाय हंसः षट्सहस्रमजपाजपं निवेदयामि, अनेनाजपाजपेन भगवान् नारायणः साङ्गोपाङ्गः......नारायण रू० श्री०।

नारी त्रैलोक्यजननी नारी त्रैलोक्यरूपिणी।
नारी त्रिभुवनाधारा नारी देहस्वरूपिणी॥
पुरुषं च स्त्रियो रूपं यत् किञ्चिद् रूपमुत्तमम्।
नारीचक्रे सर्वरूपं यत् किञ्चिज्जगतीगतम्॥
न च नारीसमं सौख्यं न च नारीसमा गतिः।
न नारीसदृशं भाग्यं न भूतं न भविष्यति॥
(शक्तिसङ्गमतन्त्रम्, ताराखण्डम्, २४।४३-४७)

सनातनधर्मशास्त्रेषु बहुला नारीनिन्दा दृश्यते, प्रतीच्यदेशवासिभ्य आधुनिक-शिक्षाप्राप्ता अस्मद्देशवासिनो नारीसम्मानं शिक्षितवन्त इति येषामभिमतम्, प्रस्तुत-शास्त्रवचनात् तेषां मतं भ्रान्तं प्रतीयते। यथा विज्ञाने स्त्रीपुंसोः समानाधिकारस्तथा तन्त्रशास्त्रेऽपि। यथा विज्ञानस्य गुरुः पुरुषवत् स्त्री अपि भवति, तथा तन्त्रशास्त्रोक्त-साधनायां पुरुषवत् स्त्री अपि गुरुत्वे वृता। तथा च योगिनीतन्त्रे—

स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता॥
(बृहत्तन्त्रसारः, १० म० सं०, पृ० ६)

यथा विज्ञानं गुरुगम्यमेव तथा तन्त्रशास्त्रमपि। यथाधिकारिणो गुरोरभावाद् विज्ञानसाधना दुरधिगम्या, तथा तान्त्रिकसाधना न केवलं दुरधिगम्या, असंभवा च। तन्त्रं युगशास्त्रमित्यधिकारिभिर्गुरुभिः प्रदर्शयितव्यम्, अनधिकारिभिर्मन्दबुद्धिभि-र्विकृतीकृतमेतद् महच्छास्त्रम्, अस्यानुशासनं च। शिक्षितसाधारणस्य तन्त्रं प्रति योऽनादरः, अयं विकारो हि तस्यान्यतरो हेतुरित्यस्माभिर्मन्यते। तन्त्रविषये तेषां भ्रान्तेरपीदं प्रधानं कारणम्। इयं भ्रान्तिस्तन्त्रस्य यथोचितप्रचारेण ह्यपसरति। तथा चेदं युगशास्त्रं नराणामशेषकल्याणमावहतीत्यस्माकं निवेदनम्। विज्ञानस्य साध्या जडशक्तिस्तथा तन्त्रस्य साध्या मुख्यतश्चिच्छक्तिः। यथा चिज्जडात्मिका सृष्टिस्तथा मानवजीवनमपि। अतो जीवनस्य पूर्णता चिज्जडा-त्मिकां शक्तिसाधनामपेक्षते। यतो या शक्तिर्जडात्मिका सैव चित्स्वरूपिणी। जडशक्तेः साधनया मानवैः सिद्धिरभावनीया लब्धा। परन्तु तया पूर्णता न लब्धा, न च शान्तिः। यतो भोगबाहुल्येनापि न तेषां तृप्तिः, अभावबोधश्च नापगतः। अतृप्ते-र्जायते लोभः, लोभाच्च स्वार्थपरता। तस्मात् संघर्षः पारस्परिकः, लोकक्षयकरः संग्रामश्च। युद्धविभीषिकयाऽहर्निशं सन्त्रस्ताश्च मानवाः।

अत्र केवलं चिच्छक्तेः साधनैव परित्राणोपायः, नान्यः पन्था विद्यते रक्षाहेतोः। अधिकारिभेदेन सर्वेषां कृते साधनेयं विहिता तन्त्रशास्त्रेण। अतस्तन्त्रं युगशास्त्रमिति सिध्यति। अस्य सम्यगनुशीलनेन युगकल्याणं सुनिश्चितं स्यात्।

इति शम्॥



# तान्त्रिकभावाचारसम्बन्धसमीक्षा

श्रीचक्रेश्वरभट्टाचार्यः श्रीमदुग्रतारामन्दिराध्यक्षः प्राग्ज्योतिष्पुरवास्तव्यः।

अथातो भावजिज्ञासा। कस्तावद् भावः? अत्रोच्यते—तन्त्रसाधनायाम् 'भावः' इत्यन्यतमः परमगुरुत्वपूर्णः पारिभाषिकशब्दः। तदुक्तं कौलावलीतन्त्र एकादशोल्लासे—

भावस्तु मानसो धर्मः स हि शब्दः कथं भवेत्।
तस्माद् भावो न वक्तव्यो दिङ्मात्रं समुदाहृतम्॥
यथेक्षुगुडमाधुर्यं जिह्वया ज्ञायते सदा।
तस्माद् भावो विभावस्तु मनसा परिभाव्यते॥

तथाहि—भावपदार्थो मनसो धर्मविशेषः। सकथं शब्देन व्यक्तो भवेत्? अत एव भावः कदापि वक्तव्यो न भवेत्। केवलं स दिङ्मात्रं निर्दिश्यते। यथेक्षुगुडयोर्माधुर्यं जिह्वया परिज्ञायते, न वाक्येन; तद्वद् भावस्य विभावः केवलं मनसैवानुभवयोग्यो भवेत्, न शब्देनेति। उक्तं च—

एक एव महाभावो नानात्वं भजते यतः।
उपाधिभेदभावेन भावभेदो लयिष्यति॥
आनन्दघनसन्दोहः प्रभुः प्रकृतिरूपधृक्।
रसरूपः स एवात्मा स प्रभुः परमो महान्॥

तथा च केवलं महाभाव उपाधिभेदेन, विषयभेदेनार्थाद् भक्तिप्रेमवात्सल्यादिनानारूपेण विभक्तो भवेत्। पुनरपि भावस्य प्रगाढतायां भावगततत्तत्समस्तभेदः परिणामे एकमात्रमहाभावे विलीनो भवेत्, परन्त्वेव भाव एषानन्दघनसन्दोहः प्रभुः। भाव एव प्रकृतिरूपधारी, भाव एव रसरूपी आत्मा, भाव एव परमो महान्। कौलावलीतन्त्रे भावमाहात्म्यमेतावदेव वर्णितम्, यथा—

बहुजापात् तथा होमात् कायक्लेशात्तु विस्तरैः।
न भावेन विना चैव तन्त्रमन्त्राः फलप्रदाः॥

तथा च—बहुजप-होम-कायक्लेशकरस्तपस्यायामपि साधकस्य भावं विना तन्त्रमन्त्राः कदापि न फलप्रदा भवेयुः। भावस्तु त्रिविधः प्रोक्तः। स च ज्ञानस्यैवावस्थाविशेषो बोध्यः। सत्त्वरजस्तमोगुणभेदाद् भावस्य वा ज्ञानस्यावस्था यथाक्रमं दिव्यो वीरः पशुश्चेत्युत्तममध्यमाधमरूपेण त्रिधाभिहिताः। तदुक्तं रुद्रयामले—

शरीरं त्रिविधं प्रोक्तमुत्तमाधममध्यमम्।
तत्रैव त्रिविधं प्रोक्तमुत्तमाधममध्यमम्॥

तथाहि—उत्तमो मध्यमोऽधमश्चेति शरीरभेदानुसारं मानवप्रकृतिरपि सत्त्वादिगुणत्रयसम्पन्नत्वरूपेण साधनाप्रणाली च सत्त्वादिभेदेनोत्तमा मध्यमाऽधमा चेति, अर्थाद् दिव्यो वीरः पशुश्चेति त्रिभावेन प्रथितो भवेत्। अत एव यस्य यादृशी प्रकृतिस्तस्य पक्षे तद्रूपभावावलम्बनेन साधना प्रशस्ता।

तामसिकप्रकृतिविशिष्टसाधकस्य दिव्यभावावलम्बनेन साधनानां गुणविपर्ययः स्यादिति हेतोस्तस्याग्रगतिर्न सम्भवपरा भवेत्। अत एव तामसिकसाधकस्य पशुभावेन, राजसिकसाधकस्य वीरभावेन, एवञ्च सात्त्विकप्रकृतिसम्पन्नस्य दिव्यभावावलम्बनेन साधनाभिहिता भवति। परन्तु क्रमशः साधकः पशुभावाद् वीरभावम्, वीरभावाद् दिव्यभावम्, एवं दिव्यभावाद् भावातीतावस्थायामथवा गुणातीतावस्थायामारोढुं समर्थो भवेत्। वस्तुतः साधकस्य शक्तिभेदनिमित्तं भावत्रयमभिहितम्। तदुक्तं रुद्रयामले—

शक्तिप्रधानं भावानां त्रयाणां साधकस्य च।
दिव्य-वीर-पशूनां च भावत्रयमुदाहृतम्॥

भावत्रयाणां पौर्वापर्यसम्बन्धविषये रुद्रयामलतन्त्रे षष्ठपटले सविशेषमुक्तम्, यथा—

आदौ भावः पशोः कृत्वा पश्चात् कुर्यादावश्यकम्।
वीरभावं महाभावं सर्वभावोत्तमोत्तमम्॥
तत्पश्चादतिसौन्दर्यं दिव्यभावं महाफलम्।

प्रथमप्रवृत्तसाधकस्याभ्यासार्थं प्रथमं तमोगुणात्मकः पशुभावो विहितः। तत्र पशुभावे सिद्धः पश्चाद् रजोगुणात्मकसर्वभावोत्तममहाभाववीरभावाश्रयो भवेत्। ततः सत्त्वगुणात्मकातिसुन्दरमहाफलप्रददिव्यभावाश्रयपरो भवेदिति।

अत्र शास्त्रयुक्तियेन् सामान्यतो मानवानां षोडशवर्षवयःकालपर्यन्तं मनोवृत्तेरज्ञानावस्थात्वेन पशुभावः। सप्तदशवर्षात् पञ्चाशद्वर्षपर्यन्तं ज्ञानावस्था, तदा चोत्तेजितमनोवृत्तित्वेन वीरभावः। एकपञ्चाशद्वर्षाद् वृद्धावस्थापर्यन्तं परिपक्वज्ञानावस्थात्वेन शीतलमनोवृत्तेर्विगतस्पृहस्य दिव्यभावः। तदुक्तं रुद्रयामले—

सर्वे च पशवः सन्ति तलवद् भूतले नराः।
तेषां ज्ञानप्रकाशाय वीरभावः प्रकाशितः॥
वीरभावं सदा प्राप्य क्रमेण देवता भवेत्।

वेदसारशिवस्तोत्रे च—"पशूनां पतिं पापनाशं परेशम्" इत्याद्युक्तम्।

(१) पशुभावः—येषां जीवानामन्तरेऽविद्यावरणेन परिपूर्णमद्वैतज्ञानस्य किञ्चिन्मात्रमपि नोद्वेति, तेषां मानसिक्यवस्था तामसिकत्वेन 'पशुभावः' इति कथ्यते। ते च पशुवदज्ञानान्धकारसंसारेण सह दृढबन्धनेनाबद्धास्तिष्ठन्ति। उत्तमाधमभेदेन च पशुभावो द्विविधः। संसारमोहजाले पतित्वा बद्धो जीवोऽधमपशुः। सत्कर्मपरायणो भगवद्विश्वासी जीव उत्तमपशुर्द्वैतबुद्धित्वादुभौ पशू।

(२) वीरभावः—यः साधकोऽद्वैतज्ञानरूपामृतह्रदस्य कणिकामात्रमास्वाद्य वीरवदज्ञानरज्जुच्छेदने यत्नपरः, एवममृतह्रदसन्धाने धावमानो भवेत्, स एव वीरभावसाधकः। वीरसाधकस्य मानसिकावस्थाया राजसिकत्वेन 'वीरभावः'। वीरसाधको हि जागतिकसर्वपदार्थान् परमशिवशक्तिमिथुनीकृतविभूतिरूपेण धारयितुं प्रयत्नपरायणो यतते। एतादृशावस्थायां द्वैतभावः कियत् परिमाणं दूरीभवति, अद्वैतभावश्च कियता परिमाणेन जाग्रतो भवेत्।

(३) दिव्यभावः—यः साधको वीरभावपरिपुष्टया द्वैतभावं दूरीकृत्य क्रमश उपास्यदेवतासत्तायां स्वीयसत्तानिमज्जनेनाद्वैतानन्दामृतपानरतो ब्रह्ममयस्तिष्ठति, स एव 'दिव्यः' इति कथ्यते। तस्य च मानसिक्यवस्था सात्त्विकत्वेन 'दिव्यभावः'। दिव्यभावसाधको ब्रह्मज्ञानी परमहंसः। तदेवोक्तं कौलावलीतन्त्रे—

प्रथमं दिव्यभावस्तु कथ्यते तन्त्रवर्त्मना।
यद्वर्णा देवता यत्र तत्तेजःपुञ्जपूरितम्॥
तेजोमयं जगत् सर्वं विभाव्य मूर्तिकल्पनम्।
तत्तन्मूर्तिमयैर्मन्त्रैः स्वेन स्वेन वा पुनः।
आत्मानं तन्मयं दृष्ट्वा सर्वं भावं तथैव च॥

तथाहि—प्रथमतस्तन्त्रमतेन दिव्यभावः कथ्यते। यथोपास्यदेवताया यद्वर्णं तद्वज्जगत् सर्वं तत्तेजःपुञ्जपरिपूरितमित्येवंरूपभावनया स्वीयेष्टदेवतामूर्तिं ध्यात्वा तत्तविष्टदेवतायास्तत्तन्मूर्तेः प्रत्येकमङ्गप्रत्यङ्गस्येष्टमन्त्रेण प्राणप्रतिष्ठापूर्वकमात्मानमेवं परिदृश्यमाननिखिलविश्वब्रह्माण्डं च तन्मयत्वेन दृष्ट्वा साधको दिव्यभावोपासनां कुर्यादिति।

आचारश्च भावगतव्यावहारिकशास्त्रानुमोदितबाह्यक्रियाविशेषः। तदुक्तं विश्वसारतन्त्रे—

भावत्रयगतान् देवि सप्ताचारांस्तु वेत्ति यः।
स धर्मं सकलं वेत्ति जीवन्मुक्तो न संशयः॥

हे देवि! यः साधको भावत्रयसम्बन्धसन्निविष्टान् सप्ताचारान् तत्त्वतो वेत्ति, स सर्वधर्म्मं जानाति, स एव जीवन्मुक्तो योगिपुरुषः। त एव सप्ताचाराः कौलावलीतन्त्र एवं प्रतिपादिताः—

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम्।
वैष्णवादुत्तमं शैवं शैवाद्दाक्षिण्यमुच्यते॥
दाक्षिण्यादुत्तमं वामं वामात् सिद्धान्तमुत्तमम्।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं नहि॥

तथा च—वेदाचारः, वैष्णवाचारः, शैवाचारः, दक्षिणाचारः, वामाचारः, सिद्धान्ताचारः, कुलाचारश्चेति सप्ताचाराः क्रमोन्नतिक्रमेणैवोत्तरोत्तरतश्चोत्तमोत्तमा उक्ताः। परन्तु कौलाचारात् परतरमुत्तमाचारो न विद्यते। विश्वसारतन्त्रे सप्ताचाराणां मध्ये भावत्रयाणां सम्बन्ध उक्तः—

वैदिकं वैष्णवं शैवं दक्षिणं पाशवं स्मृतम्।
सिद्धान्तवामे वीरे तु दिव्यं सत्कौलमुच्यते॥

तथा हि—वेदाचारः, वैष्णवाचारः, शैवाचारः, दक्षिणाचारश्चेति चतुराचारा उत्तमपशुभावसाधकस्य सम्बन्धे विहिताः। वीरसाधकस्य सम्बन्धे वामाचारसिद्धान्ताचारौ चाभिहितौ। दिव्यभावसाधकस्य सम्बन्धे कुलाचारो विहितः। सनातनहिन्दूनां जाति-धर्म-ज्ञान-भक्ति-देव-देवी-शास्त्र-साध्य-साधनादि च सर्वेषामेवाचारमूलम्। तदुक्तं सर्वोल्लासतन्त्रे—

आचारमूलं जातिः स्यादाचारं शास्त्रमूलकम् ।
देववाक्यं शास्त्रमूलं देवः साधकमूलकः ॥
क्रियामूलं साधकस्य क्रियापि फलमूलिका ।
फलं मूलं सुखादेव सुखमानन्दमूलकम् ॥
आनन्दं ज्ञानमूलञ्च ज्ञानं ज्ञेयस्य मूलकम् ।
तत्त्वमूलं ज्ञेयमात्रं तत्त्वं हि ब्रह्ममूलकम् ॥
ब्रह्मज्ञानमैक्यमूलमैक्यं हि सर्वमूलकम् ।
ऐक्यं हि परमेशानि भावातीतं सुनिश्चितम् ॥

सप्ताचारायां स्वरूपं प्रत्येकं पृथक्पृथग्रूपेण तन्त्रेषु वर्णितम्—

वेदाचारो यथा समयाचारतन्त्रे—

वेदोक्तेन यजेद्देवं कामसङ्कल्पपूर्वकम् ।
स एव वैष्णवाचारः पश्वाचारः स एव हि ॥
न मत्स्यभोजनं देवि न स्त्रियं मनसा स्मरेत् ।
परद्रव्ये न लोभः स्यान्न भोगं मनसा स्मरेत् ॥
सिन्धुतीरे कानने वा पर्वते वा सुरालये ।
विल्वमूले विविक्ते च पुण्यक्षेत्रे सुशोभने ॥
देवताः शुद्धभावेन ध्यातव्याः सुसमाहिताः ।
न शूद्रदर्शनं कुर्यात् कौटिल्यं दूरतस्त्यजेत् ॥
त्रिसन्ध्यं पूजयेद्देवं त्रिसन्ध्यं जपमाचरेत् ।
रात्रौ मन्त्रञ्च मालाञ्च स्पृशेन्नैव कदाचन ॥
वीरकार्यं कथालापं न कुर्याद् गुरुनिन्दनम् ॥

वैष्णवाचारो यथा नित्यातन्त्रे प्रथमपटले—

अथ वक्ष्ये महेशानि वैष्णवाचारमुत्तमम् ।
यस्य विज्ञानमात्रेण कालः स्याद्विहिताञ्जलिः ॥
वेदाचारक्रमेणैव सदा नियमतत्परः ।
मैथुनं तत्कथालापं कदाचिन्नैव कारयेत् ॥

हिंसां निन्दाञ्च कौटिल्यं वर्जयेन्मांसभोजनम् ।
रात्रौ मालां च यन्त्रं च स्पृशेन्नैव कदाचन ।।
विष्णौ समार्चयेद्देवि विष्णौ कर्म निवेदयेत् ।
भावयेत् सर्वदा देवि सर्वं विष्णुमयं जगत् ।।

शैवाचारश्च तत्रैव—

शृणु चार्वङ्गि सुभगे शैवाचारं सुदुर्लभम् ।
वेदाचारक्रमेणैव शैवे शाक्ते व्यवस्थितम् ।।
तद्विशेषं महेशानि केवलं पशुघातनम् ।

दक्षिणाचारो यथा नित्यातन्त्रे—

इदानीं शृणु वक्ष्यामि दक्षिणाचारमद्रिजे ।
दक्षिणामूर्तिमुनिना आश्रितोऽसौ यतः पुरा ।।
अत एव महेशानि दक्षिणाचार उच्यते ।
प्रवर्तकोऽयमाचारः प्रथमं वीरदिव्ययोः ।।
वेदाचारक्रमेणैव पूजयेत् परमेश्वरीम्
स्वीकृत्य विजयां रात्रौ जपेन्मन्त्रमनन्यधीः ।।

वामाचारो यथा भावरहस्ये ( द्वादशाध्याये )—

वीरभावे स्थितानां तु द्वावाचारौ प्रकीर्तितौ ।
प्रथमं दक्षिणं कुर्यात्ततो वामं समभ्यसेत् ।।
स्वधर्मनिरतो यस्तु तत्त्वानां पञ्चकैः सदा ।
अर्चयेद् विधिना भक्त्या सानन्दः परदेवताम् ।।
क्षित्यप्तेजोमरुद्भिश्च विहायसा तथा किल ।
द्रव्यैश्च विविधैर्वापि बाह्याभ्यन्तरभेदतः ।।
स एव दक्षिणाचारः सदैवोद्यतमानसः ।
महोत्साही महावीरो स्वेष्टकार्येषु तत्परः ।।
एतैस्तत्त्वैस्तथा पुष्पैर्विधिना कुलसम्भवैः ।
साक्षात् शिवमयो भूत्वा प्रकृतिं परमां भजेत् ।।
वामाचारः समाख्यातश्चाष्टपाशैर्विवर्जितः ।
शौचभावैः सदायुक्तो महामन्त्रस्य साधनात् ।।

दिव्यभावे समुत्पन्ने सिद्धान्ताचारतत्परः।
भवेच्च साधकः पश्चात् कौलाचारं समाश्रयेत्॥
आत्मानं देवतां ज्ञात्वा यश्च नित्यं प्रपूजयेत्।
मानसेन विधानेन सूक्ष्मतत्त्वेन भावतः॥

सिद्धान्ताचारो यथा भावरहस्ये (द्वादशाध्याये)—

शमं दमं समाश्रित्य योगयुक्तस्तथा किल।
सिद्धान्ताचार एवोक्तः स सदा तन्त्रवेदिभिः॥
आत्मनि परमं ज्ञात्वा परमात्ममयं तथा।
स्वात्मानञ्च सदा ज्ञात्वा स्वात्मज्ञानं प्रजायते॥
एवं भावसमायोगाद् योगी सोऽपि प्रकीर्तितः।
सालम्बश्च समाख्यातो योगभावैस्तु साधनात्॥

कुलाचारो यथा भावरहस्ये (द्वादशाध्याये)—

सन्त्यज्य कर्मबाहुल्यं मातृस्तन्यं यथा शिशुः।
प्रविशेत् ज्ञानमार्गे यः सत्त्वगुणसमन्वितः॥
आचारैस्तु विहीनोऽपि ब्रह्मभावरतः सदा।
कौलाचारः स विज्ञेयः पूर्णानन्दपरायणः॥
पञ्चभूतमयं सर्वं ब्रह्माण्डं सचराचरम्।
जीवं प्रकृतितत्त्वञ्च कुलमुक्तं सदा बुधैः॥
कुलं ब्रह्ममयं यश्च चिन्तयेद् भावयोगतः।
स च कौलः समाख्यातो निरालम्बस्तथा किल॥
कुलं कुण्डलिनी ज्ञेया महाशक्तिस्वरूपिणी।
अकुलं तु शिवः प्रोक्तः शुद्धसत्त्वमयो विभुः॥
तयोस्तु परमं तत्त्वं यो वै जानाति साधकः।
कुलीनः परमः सोऽपि वर्णभेदविवर्जितः॥

पूजने भावाचाररतानां साधकानां परदेवतायाश्च सम्बन्ध उक्तः। तथा च भावरहस्ये द्वादशाध्याये—

प्राकृतो दासवन्नित्यं पूजयेत् परदेवताम् ।
वीरस्तु भक्तियोगेन मातृरूपां प्रपूजयेत् ॥
पितृरूपं तदा देवं पूजयेद् वा विधानतः ।
स्वायत्तं तु परं ब्रह्म चिन्तयेद् भावसिद्धये ॥
दिव्ययोगी सदा पश्येदात्मन्येव परं मुदा ।
आत्मानं परमं मत्वा मुच्यते भावबन्धनात् ॥

भावत्रयसाधकानां परदेवतापूजायां विग्रहचिन्तासम्बन्धः, यथा भावरहस्ये द्वादशाध्याये—

प्राकृतो बाह्यभावेन सकलं परमं भजेत् ।
नराकाररूपं स्मृत्वा सदानन्दमयो भवेत् ॥
( पशुभावस्य )

मनसा बाह्यतो वापि वीरस्तु साधनं चरेत् ।
सकलं परमं ध्यात्वा तैजसं विग्रहं स्मरेत् ॥
( वीरसाधकस्य )

दिव्यस्तु निष्कलं ब्रह्म तेजोरूपं विचिन्तयेत् ।
कलातीतं सदा हंसः कौलभावे समाश्रयेत् ॥
( दिव्यभावसाधकस्य )

साधकानां परदेवतायां भावसम्बन्धः—

प्राकृते वीरभावे तु गुणत्रयविभेदतः ।
साधकाः कर्म कुर्वन्ति चात्मभावमयं सदा ॥
दिव्यभावे समुत्पन्ने सत्त्वगुणमयो भवेत् ।
गुणातीतो भवेद्वापि ब्रह्मज्ञानपरायणः ॥

परमात्मनि साधकानां रूपगुणसम्बन्धः—

स्थूलरूपं परं ब्रह्म प्राकृतश्चिन्तयेन्मुदा ।
तेजसा मिश्रितं स्थूलं वीरभावे विभावयेत् ॥
वर्णयुक्तं परं ज्योतिर्वीरो वा चिन्तयेद् हृदि ।
शुभ्रतेजोमयं दिव्यस्तथात्मानं समाश्रयेत् ॥

देवादन्यं तथा दिव्यो न चिन्तयेत् कदाचन।
तन्मयं सकलं मत्वा ब्रह्मज्ञानपरो भवेत्॥
कर्म ब्रह्म कर्तृ ब्रह्म सर्वं ब्रह्मस्वरूपकम्।
ब्रह्मैवाहमिति ज्ञात्वा सर्वपापाद्विमुच्यते॥
निरस्तो विहितेभ्यश्च कर्मभ्यः स सदा किल।
पूर्णज्ञानसमायोगात् कौलाचारपरो भवेत्॥

भावचूडामणौ—

कर्दमे चन्दनेऽभिन्नं पुत्रे शत्रौ तथा प्रिये।
श्मशाने भवने देवि तथैव काञ्चने तृणे॥
न भेदो यस्य देवेशि स कौलः परिकीर्तितः॥

कौलिकार्चनदीपिकायां कौलरहस्यमतीव गोपनीयमुक्तम्—"इयं तु शाम्भवी विद्या गुप्ता कुलवधूरिव" इति। श्यामारहस्येऽपि कौलस्वरूपमुक्तम्—

अन्तः शाक्ता वहिः शैवा सभायां वैष्णवा मताः।
नानावेशधराः कौला विचरन्ति महीतले॥

तन्त्रशास्त्रभाषायाः साङ्केतिकत्वेन सर्वसाधारणानामर्थबोधो दुरूह एव। ललितासहस्रनामभाष्ये कुलशब्दस्यार्थो मूलाधार इति। कुशब्दश्च क्षितितत्त्वम्, यत्र लीयन्ते तदेवाधारमूलचक्रम्, कुलम्, त्रिकोणम्, योनिश्च कथ्यते। सैव मातृका वर्णात्मिका परावागधिष्ठानशक्तिर्मातृयोनिश्चेति पारिभाषिकः। साधक एतन्मातृयोनितः कुण्डलिनीशक्तिमूर्ध्वं मणिपूरादितः सहस्रारचक्रपर्यन्तमुत्थाप्य प्रत्येकस्मिन् चक्रे कुण्डलिन्या सह जीवात्मनः सामरस्यानन्दमुपभुङ्क्ते। तदुक्तम्—"मातृयोनिं परित्यज्य विहरेत् सर्वयोनिषु" इत्यादि। अनेकक्षेत्रे, तन्त्रशास्त्रे च वामाचारा अपि कुलाचाराः कथ्यन्ते। वामाचाराणां बाह्यपूजायां पञ्चतत्त्वस्य मद्य-मांस-मत्स्य-मुद्रा-मैथुनात्मकस्य लौकिकप्रयोगविधानमस्ति। ते च तानि लौकिकस्थूलद्रव्याणि पूजायां निवेद्य परमामृतत्त्वेनगृह्णन्ति। एवंविधकुलाचारस्यापि वेदविरुद्धत्वेन द्विजातीनां कृते निषेध उक्तो देवीभागवते—

सर्वथा वेदभिन्नार्थे नाधिकारी द्विजो भवेत्।
वेदाधिकारहीनस्तु भवेत्तत्राधिकारवान्॥
कौलमिश्रपथौ हेयौ नित्यं गौरि द्विजातिभिः। इत्यादि।

तथा च ज्ञानार्णवतन्त्रेऽपि शाक्तानां कुलाचारः, मिश्राचारः, समयाचार इति भेदेन मार्गत्रयमुच्यते। तेषां मध्ये यत्र यत्र पूर्वोक्तलौकिकपञ्चमकारक्रियात्मकप्रयोगो वर्तते, पुनश्चतुर्वर्गाणां कामार्थपुरुषार्थद्वयलाभार्थं मुख्यभावेनानुष्ठानं च विद्यते, स एव कुलमार्गो वेदविरुद्धः। यो मोक्षोपयोगी मार्गः, स बाह्यपूजाया मानसिकपूजाप्रधानः।

पञ्चतत्त्वस्य केवलमाध्यात्मिकयौगिकप्रयोगात्मकः स एव समयाचारमार्गो वेदानुमोदितश्च। समयाचारसाधकः पञ्चतत्त्वस्य तात्पर्यं प्रतितत्त्वं सिद्धान्तितयौगिकार्थश्रुतिमुद्धृत्य दर्शयति। एतद्द्वयसंमिश्रणात्मको मार्गो मिश्राचारे धर्मपुरुषार्थप्रधानः। अस्मिन् मार्गे क्रियात्मकबाह्यपूजाया भावात्मकमानसपूजायाश्च समं प्राधान्यम्। मिश्राचारस्यांशविशेषस्य वेदविरुद्धत्वेन द्विजातीनामेतद्द्वयं हेयमुक्तं प्रोक्तश्लोके। पञ्चतत्त्वसाधना समयाचाराणामतीव महत्त्वपूर्णा न निन्दनीया। पञ्चमकारश्च स्थूलसूक्ष्मभेदेनाथवा लौकिकयौगिकभेदेन द्विविधः। पञ्चमकारसाधना अथवा तन्त्रस्य लययोगो नात्रालोच्यविषयः। अत्रोच्यते, स्वरूपतः सकाम्यसंयमिजनानां लौकिकपञ्चमकारेष्वासक्तिरधिकतरा, तेषामतिप्रियवस्तु पञ्चमकारो नाम। पञ्चमकार एव संसारबन्धहेतुः। कामना वा इच्छा रजःप्रधाना, तत्र जीवानां स्वातन्त्र्यं नास्ति। अत एव पञ्चमकारभोगवासनापरित्यागः सहजसाध्यो न भवति। जगदीश्वरी सर्वजीवानामन्तर्यामिरूपा वर्तते। परन्तु यस्य यदन्नं वा भोगः प्रियो भवेत्, तस्येष्टदेवताया अपि तदेव प्रियो भवति। तदुक्तं रामायणेऽयोध्याकाण्डे—"यदन्नाः पुरुषा राजन् तदन्नास्तस्य देवताः" इति। तथा च भगवद्गीतायाम्—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

तथैव सकामिनां तेषां प्रियद्रव्येणैव स्वीयेष्टदेवतापूजाया विधानं तन्त्रे प्रकाशितम्। तन्त्रोपदिष्टमार्गेण परदेवतायां प्रीत्युद्देश्यकात्मसमर्पणबुद्ध्या पूजायोगेन परमासक्तिविषयीभूतद्रव्याणां प्रयोगे हिंसाद्यसत्कर्मेष्वपि न कोऽपि दोषो जायते। परन्तु तदनुष्ठितकर्मभिः साधकस्य भोगेच्छायाश्चरितार्थत्वेन, क्रमश आत्मसंयमो भविष्यति। एवं चानेनाभ्यासयोगेन यदा मनोऽन्तर्मुखीभूय बाह्यविषयवस्तुषु पूजायां चासक्तिरहितत्वेनाध्यात्मिकप्रक्रियायामन्तर्यागे प्रविश्य सम्पूर्णं तन्मयत्वेन भगवत्परायणां ब्रह्ममयीं भक्तिं लभते, तदा तदन्तरेऽनवरतं भगवत्स्फुरणेन बाह्यज्ञानशून्यः स्वयं परमशिव इव स साधको यद् यदाचरति-तत्सर्वं भगवत्पूजापरं भवेत्। तदुक्तम्—

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।
सञ्चारः पदयोः प्रदक्षिणविधिस्तोत्राणि सर्वा गिरो
यद् यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्॥

तन्त्रशास्त्रं संसारासक्त-मद्यमांसमत्स्यभोजि-भोगविलासि-स्त्र्यासक्तजनानां प्रोक्तवामाचारविधानेन तेषां तस्मादुद्धारमार्गं निरूप्य दर्शयतीत्यलम्॥



# अजपाविज्ञानस्य स्वरूपविमर्शः

श्रीमाधवाचार्यः, मुम्बापुरीस्थः ।

वैदिकी तान्त्रिकी मिश्रा त्रिविधा यस्य चोदना ।
वन्दे तमजपाजापं भुक्तिमुक्तिप्रदं परम् ॥
वाचामविषयो यस्तु हंसस्य विषयः सदा ।
तं हंसमन्त्रमत्यन्तं वन्दे हंसत्वदायकम् ॥

भक्त्याविष्टचेतसां योगिनां प्रणवजपोऽतिप्रियो वर्तते लोके । यथा ते समाधेः प्राप्त्यर्थं प्रत्यक्चेतनाधिगमार्थं व्याध्याद्यन्तरायाभावार्थं च प्रणवार्थं परमेश्वरं भावयन्तो भक्तिपूर्वकमहर्निशं विधानादिसहितं प्रणवजपं कुर्वन्ति । तथैव योगाविष्टचित्ता ज्ञान-यज्ञप्रधाना वेदान्तिनोऽध्यात्मभावनार्थं परमात्मानं च प्रसन्नीकर्तुमजपामन्त्रं जपन्ति । 'सोहम्, सोहम्' इति व्याहरन्तः, स्वात्मानमेव परमात्मत्वेनोपासतेऽहंग्रहो-पासनाविषये ।

स्वरसाधनपरा योगिनः केवलकुम्भके प्राणायामे विधिपूर्वकमजपागायत्री-मन्त्रमेव जपन्ति, सिद्धाश्च भवन्ति यथाकालम् ।

तान्त्रिका अपि विविधेषु प्रयोगेष्वजपाजपं कुर्वन्ति, दैनिकं च स्वाभाविकं जपं विभज्य श्रीगणेशादिभ्यो देवेभ्यो निवेद्य परमसन्तुष्टा भवन्ति ।

स्वरसाधनप्रक्रिययाऽजपां जपन्तः सिद्धा भवन्ति, त्रिकालज्ञतां च लब्ध्वा-लौकिकीं शक्तिं सम्पादयन्ति, प्राप्नुवन्ति च मोक्षमपि तेऽन्ते ।

का अजपा इति प्रश्ने—

अजपाशब्दस्य शक्तिग्रहे नियमात् प्रथमं व्याकरणमुपयुज्यते । तथा च व्युत्पत्तिपक्षे—'जप व्यक्तायां वाचि, मानसे च' इति धातोरपि, स्त्रीप्रत्यये च कृते, जपाशब्दस्य सिद्धिर्भवति । यस्या जपो नास्ति सा अजपा इत्युच्यते ।

यौगिकोऽप्ययं शब्दः 'हंसः, हंसो' इति मन्त्रे रूढः। तथा च शब्दरत्नाकरेण कोषेण 'हंसः' इति मन्त्रस्याजपासंज्ञा प्रतिपादिता। एकशरीरिणोः पार्वतीपरमेश्वरयोरपि 'हंसः' इति संज्ञा चात्र प्रोक्ता।

गायत्रीसंज्ञाऽस्यापि मन्त्रस्य श्रूयते।

कर्ताऽप्यजपाजपस्य प्रतिपाद्यते। तथा च घेरण्डसंहितायाम्—

"अजपां नाम गायत्रीं जीवो जपति सर्वदा।" इति घेरण्डमहर्षिणोक्तम्।

अस्मिन् ऋषिवाक्येऽजपामन्त्रस्य गायत्रीसंज्ञा, ज़ापकर्ता जीवश्च समुपलभ्यते।

यस्या जपः शक्यः सा कथमजपा इत्युच्येत, इत्यपि न वाच्यम्, यज्जपोऽपि न वाचो विषय इत्यजपाशब्दस्य तात्पर्यात्। एतां जीव एव जपति, न वागित्यजपाशब्दस्य गूढाशयात्।

न केवलं शब्दरत्नाकरादेव 'हंसः' इति मन्त्रस्याजपासंज्ञा निश्चीयते। अपि तु महोपनिषदि—अजपयोपहितम् 'हंसः, सोहम्' इत्युक्तम्। अस्याः श्रुतेः—'सोऽहमेव परिवर्तितो विवर्तितो वा हंसः, हंस इति सम्पद्यत इत्यभिप्रायः।

सर्वदर्शनसंग्रहे ग्रन्थे पातञ्जलदर्शनेऽभ्यङ्करोपाह्वश्रीवासुदेवशार्स्त्रिभिः—"अजपामन्त्रेति स्वभावसिद्ध एवायं श्वासप्रश्वासरूपोऽजपामन्त्रः। स्वभावसिद्धत्वान्नायमितरमन्त्रवज्जप्यते। तेन अजपेत्युच्यते। तत्र हि श्वासप्रश्वासयोः 'हंसः' इति भावना क्रियते" इत्युक्तम्। अतः प्रतीयते यद् विदुषां सम्मतेयम्—'हंसः' इति मन्त्रस्याजपा संज्ञा।

ब्रह्मविद्योपनिषदि च—

"सकारं च हकारं च जीवो जपति सर्वदा।"

इति श्रवणादपि जापस्य कर्ता जीवो ज्ञायते।

### अजपाजपप्रक्रिया

सर्वदा प्रश्वासे हंकारभावना, श्वासे च सोकारस्य सकारस्य वा भावना क्रियते। तथा च बाह्यस्य वायोरन्तरानयनं श्वासः, आन्तरस्य वायोर्बहिर्गमनं च प्रश्वास इत्युच्यते। एवमेव शिवस्वरोदये—

"हङ्कारो निर्गमे प्रोक्तः सोकारश्च प्रवेशने ।" इति ।

तथैव च घेरण्डेन महर्षिणा—

"हंकारेण बहिर्याति सोकारेण विशेत्पुनः ।" इत्युक्तम् ।

इदमाकूतमजपागायत्रीजपविषये यत्—'अस्या जपस्य भावनायाः प्रारम्भो यदि प्रश्वासात् क्रियते तदा 'हं' प्रश्वासे एवम् 'सो' श्वासे जप्यते । उभयोर्वर्णयोस्तात्कालिके संयोगे 'हंसः' इति सम्पद्यते । तथा च 'सः' इत्यस्यानन्तरं हङ्कार आगत्य 'हंसः' इत्यपि सम्पादयति । इत्थं प्रतिश्वासप्रश्वासम् 'हंसः,' 'सोऽहम्', इत्यनयोः परम्परा प्रचलति । उपासका भावनया 'हंसः, हंसः, सोऽहम्' वा मन्यन्ते । इत्थमेव एकस्यापि द्वौ भेदौ सम्पद्येते ।

उपास्यानां भावना अत्रापि जपे क्रियते । तथा च शिवस्वरोदये—

"हङ्कारः शिवरूपी सोकारः शक्तिरुच्यते"
इत्यजपागायत्रीमन्त्रेणैकशरीरिणौ पार्वतीपरमेश्वरावपि प्रोक्तौ ।

इत्थमेवान्यस्यापि देवताद्वन्द्वस्य जपे भावना क्रियते । यथा श्रीहर्षेण नैषधीये चरिते चिन्तामणिर्नाम मन्त्रः प्रोक्तः । तत्र पार्वतीपरमेश्वरयोर्भावनावदन्येषामपि देवजम्पतीनां भावना भवति । 'अवामा वामार्धे' इत्यस्य टीकायां च संकेतिता ।

द्व्यक्षराणीष्टनामान्यन्यान्यपि योगिभिर्योगनिष्ठोपासकैश्चानेनैव विधिनात्र जप्यन्ते । अजपाजापस्य विधिना रामशब्दो मरा इति, मराशब्दश्च राम इति सम्पद्यते ।

अत एव नारदोपदिष्टो व्याधोऽपि 'मरा, मरा' इति जपन् भवान्तरे वाल्मीकिनामा महर्षिरभूत् । तस्य 'मरा' इत्यपि स्वतः परिवृत्तिं प्राप्य 'राम' इति सम्पन्नः ।

प्रसिद्धा महात्मानस्तुलसीदासा अप्यनेनैव पथा श्रीराममुपासत इति प्रतीयते रामायणात् । तैः स्वकीयोपासना भगवतो हनूमतो व्याजात् प्रकटीकृता मुक्तामणिभङ्गप्रसङ्गे ।

## हंसशब्दस्यआर्थाः

अमरकोषस्य व्याख्यासुधाख्यव्याख्यायाम्—"हंसः स्यान्मानसौकसि ॥ निर्लोभ-नृप-विष्णवर्क-परमात्मनि मत्सरे। योगिभेदे मन्त्रभेदे शरीरमरुदन्तरे ॥ तरङ्गमप्रभेदे च" इति परमात्मादयोऽर्थाः कथिताः। तथा च योगशिखोपनिषदि—

"सुषुम्णायां यदा हंसस्त्वध ऊर्ध्वं प्रधावति"

इत्यत्र हंसशब्दस्य जीवे वृत्तिर्दृष्टा। तथा च वेदेषु मानसौकसि, पक्षिणि, सूर्ये, परमात्मनि च हंसशब्दस्य वृत्तिर्दृश्यते। तथा च ऋग्वेदे—'हंसा इव श्रेणिशो यतानाः' इत्यत्र मानसौकसि पक्षिणि वर्तते। स च पक्षी दुग्धं पानीयात् पृथक्कृत्य पिबतीति साहित्ये वेदे च प्रसिद्धः।

शुक्लयजुर्वेदे—'हंसः शुचिषद्' इत्यत्र सूर्ये शक्तः। मन्त्रस्यास्य निरुक्ते च परमात्मन्यप्यस्य वृत्तिर्दर्शिता।

जीवो न जपति केवलमजपां गायत्रीम्, परं च तां ध्यायन् स्वात्मानुसन्धानमपि करोति। तथा च हंसोपनिषदि—

"हंसहंसेति सदा ध्यायन् सर्वेषु देहेषु व्याप्य वर्तते। यथा हि—अग्निः काष्ठेषु तिलेषु तैलमिव। तं विदित्वा मृत्युमत्यन्तमेति" इति श्रुतम्।

जीवः 'सोहम्, सोहम्' इति ध्यायन्नपि कलेवरस्य सर्वेष्ववयवेषु सर्वतो व्याप्य हृदि वर्तते। इयमस्य व्याप्तिर्न सामान्या, परं च यथा हि वह्निना काष्ठं व्याप्यते तैलेन च तिलम्, तथैव जीवेन देहो व्याप्यते। यो जीव एतादृशं स्वकीयं रूपं जानाति स मुक्तो भवति।

कबीरसम्प्रदाये—उत्तमाः पुरुषास्तु सद्गुरो हंसा इति सत्यलोकस्य जीवरूपेण आदृताः। श्रीकबीरमहोदयैः स्वकीये बीजके जीवानां हंसशब्देन निर्देशः कृतः।

बीजकस्य बहूनि पदानि श्रीरवीन्द्रनाथटैगोरमहोदयैराङ्ग्लभाषायामनूदितानि।

अहंग्रहोपासका अजपाजापतत्पराश्च प्रायशः शाङ्करवेदान्तिन एव सन्ति। ते सगुणं ब्रह्माप्यभेदेनैवोपासन्ते। 'सोऽहमस्मि चतुर्भुजः' इति भगवति विष्णौ चापि तेषामभेदबुद्धिरेवोपासनाकाले विद्यते। सगुणब्रह्मणीव निर्गुणेऽपि ब्रह्मणि 'अखण्डैकरसः सोऽहमस्मि' इति प्रत्ययस्य आवृत्तिर्भवितुमर्हति। बह्वीषूपनिषत्स्वद्वैतिनामहंग्रहोपासनाया भावना विस्तरेण वर्णिता स्फुटं च प्रतीयते।

अहंग्रहोपासकाः केचन माधुर्यमये ध्यानेऽपि 'सोऽहम्' इत्येव चिन्तनं कुर्वन्ति। श्रूयन्ते च पाञ्चालदेश एकेऽहंग्रहोपासका महात्मानः काञ्चित् प्रमदां भावयित्वा समये स्नात्वा च तया सह नद्या तत्प्रमदारूपतां प्राप्यैव तया सह नदीतो निःसृताः। सोऽहमिति प्रत्ययेन परमात्मानं भावयन्तः समये परमात्मरूपतां प्राप्स्यन्त्येवात्र नास्ति कोऽपि सन्देहः।

अहंग्रहोपासका निर्भयदासा अपि नैजे हिन्दीगीतगोविन्दे—

"न जाने अजपातुल्यं जापम्॥<br>महाव्रतानि पालयन् कोऽपि<br>शृणुयाद् वेदपुराणम्।<br>अजपासमं नाप्नुयात् सोऽपि<br>श्रमं लभेत न सारम्।<br>न जाने अजपासदृशं जापम्॥"

तथा च—

"दिवानिशं यो वदति च सोऽहं<br>स एव ज्ञास्यति निजस्वरूपम्।<br>वाचामजपां प्राणो जपति<br>हंसो जीवो रटति च सोऽहम्॥

तथा च—

"निर्भय! प्रतिश्वासं वक्ति च सोऽहं<br>नाहं नाहं वदति न कोऽपि॥

श्वासत्वं नानाद्रियते च
वदन्ति सर्वे अस्मि च सोऽहम् ॥
मालासने विनापि भाव्यते
श्वासे मनसो लये च सोऽहम् ॥
माधव त्वमपि सदा जप श्वासे
सोऽहं सोऽहं सोऽहं सोऽहम् ॥

श्रीगोरक्षपादा अपि—

पञ्चेन्द्रियाणि संयम्य तदर्थस्मृतिपूर्वकम् ।
जपन्तश्चाजपाजापं ब्रह्माग्नौ जुह्वति स्वकम् ॥
देहं ये ते तु सम्पूज्याः शिवस्यापि भवन्ति हि ।

इत्यजपाजापं प्रशंसन्ति स्वकीये ग्रन्थे ।

परदेशीया अहंब्रह्मोपासका अपीतिहासे बहवः श्रूयन्ते । तैरपि श्रद्धयाऽजपा साधिता, समये सिद्धाश्च जाताः । तेषु च मनःशूरनामानो महात्मानोऽतीव प्रसिद्धा जाताः ।

तत्रत्यैस्तदानीन्तनैः शासकैस्तेषाम् 'अहं ब्रह्मास्मि' इति व्याहरणमेव महापातकेषु गणितम्, शूलमारोपिताश्च । तेऽपि च प्रसन्नमनसा 'अहं ब्रह्मास्मि' इति व्याहरन्तः शूलिकामारुह्य विदेहमुक्ताः सञ्जाताः । तेषां शरीरेभ्यो निर्गतेन रक्तेन भूम्याम्, चिताधूमेन गगने, भस्मना च समुद्रस्य तरङ्गेषु सर्वत्र 'अहं ब्रह्मास्मि' इति लिखितम् । भारतेऽप्यसहिष्णूनां मोहंमदीयानां शासने एतादृशा बहवो महात्मानो मारिताः । मरणसमयेऽपि तैः स्वमारकेष्वपि ब्रह्मदृष्टिः कृता । इदानीमपि तेषां स्मारकाः स्थले स्थले सन्ति, ते च तान् तेषामात्मत्यागं च सततं स्मारयन्ति ।

'सोऽहम्', 'ओम्' इत्यनयोरभेदः । एतौ शब्दौ भिन्नाविवाभासेते, न तु वास्तविकीं भिन्नतां लभेते । तथा च पाशुपतोपनिषदि—"सोऽहम्, हंसः" इति, "परमात्मस्वरूपो हंसः", इति च हंसस्य परमात्मरूपतां प्रतिपाद्य "हंसप्रणवयोरभेदः" इत्युभयोः शब्दयोरेकरूपतां वक्ति । शब्दसृष्टिपक्षे सर्वे शब्दा एकस्या एव परायां वाण्या विवर्ता विद्यन्त इति पदमञ्जरीतो महाभाष्याच्च विज्ञायते । परा वाणी एव च समये क्रमशः पश्यन्ती-मध्यमा-वैखरीरूपतां लभते ।

तथा च बिन्दुरूपात्मिका परा वाणी भावात्मिका शान्ता शून्या च तिष्ठति। तत एव समये नादः प्रभवति। स च योगाभ्यासे नादश्रवणप्रक्रियया श्रूयते। तथा च भागवते द्वादशस्कन्धे—

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः।
हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते॥
ततोऽभूत् त्रिवृदोंकारः·······।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्॥ इति।

एवं दहराकाशस्य प्रथमो विवर्तो नादः। तस्यापि त्रिवृदोङ्कारो विवर्तो भवति। एतादृश ओङ्कार एव 'सोऽहम्'रूपेण विवर्तते। एते सर्वे विवर्ताः पश्यन्तीरूपा मन्यन्ते। प्रतिश्वासप्रश्वासं विधानात् 'सोऽहम्' इति भावयता नादश्रवणप्रक्रियया नादोऽपि श्रूयते। अपि च, नादो विनाप्यजपाजापं श्रूयते। नादश्रवणाभ्यासिनो जनाः कार्पासात् कर्णौ पिधाय ध्याने नादं शृण्वन्ति। कबीरसम्प्रदाये नादाभ्यासिनो बहवो जनाः सन्ति।

साम्प्रदायिकेषु भाषाग्रन्थेषु बिन्दुनादयोर्बहवो विस्तृता विचारा वाद-विवादाश्च समुपलभ्यन्ते। ते तेभ्योऽनुसन्धेयाः। परं च 'ओङ्कार एव च सोऽहं भवति' इति सर्वत्राव्याहतं दृश्यते। अवैदिकेष्वपि केषुचिन्मतेषु शब्दात् सृष्टिः प्रतिपाद्यते।

तन्त्रेष्वपि 'सोऽहम्' इत्यस्य मन्त्ररूपेणोपयोगो भवति। तथा च विंशति-यन्त्रसाधने—'ॐ सोऽहं नमः,' इति लक्षवारं जप्यते। लक्षजापेनैवास्य सिद्धिर्भवति यन्त्रस्य, नान्यथा।

अस्मिन् विंशतियन्त्रे कोष्ठकानि च पूर्यन्तेऽङ्कैः। तेष्वपि च विभिन्नानां देवानां भावना क्रियते। तथा च 'एकाङ्को ब्रह्मरूपी स्यात्'इत्युक्त्वा यन्त्रस्य कोष्ठे एकोऽङ्को लिख्यते। 'द्वितीया प्रकृतिरुच्यते' इत्युक्त्वा द्विकोऽङ्को लिख्यते च। इत्थमेव च सर्वाणि कोष्ठकानि पूर्यन्ते।

अपि चास्य मन्त्रस्यैकैकस्यापि वर्णस्य बीजरूपेणोपयोगः क्रियते। तथा च श्रीमतामाद्यशङ्कराचार्याणामानन्दलहरीनामके ग्रन्थे—

मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
इकारार्धं ध्यायेद् हरमहिषि ते मन्मथकलाम् ।
स सद्यः संक्षोभं नयति वनिता इत्यतिलघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥

अनेन श्लोकेन साध्यासाधनार्थं हङ्कारे ध्यानविधिरुक्तः। अस्य विशेषविधानान्यर्थाश्चास्य टीकासु तन्त्रग्रन्थेषु च लभ्यन्ते। यत्र तत्रैतौ वर्णौ बीजेष्वपि प्रोक्तौ।

पदपदार्था अपि हंसगायत्रीमन्त्रस्य वाच्याः। यस्यैतादृशं महत्त्वं विद्यते स किं शाबरमन्त्रवदर्थादिरहितः, उत सन्ति तस्यापि पदपदार्था इति।

अयं वैदिको मन्त्रः। अत एवात्र पदपदार्थाः सन्ति। लौकिकवद् वैदिकानामपि शब्दानामर्थाः सन्ति, व्युत्पत्तयश्च विद्यन्त इति मन्यते मीमांसकैर्नैरुक्तैश्च। 'हंसः, सोऽहम्' इत्यत्र द्वे पदे विद्येते। अत्र प्राथमिकम् 'सः' इति पदम्, द्वितीयं च पदम् 'अहम्' इति। अत्राहंपदमवलम्ब्य ब्रह्मसूत्रेऽध्यासभाष्ये भगवता शङ्कराचार्येणोक्तम्—"न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययाविषयत्वात्" इति। अनेन—आत्मापि नैकान्ततोऽविषयः कस्यापि, तमपि च 'अहम्, अहम्' प्रत्ययः स्वविषयीकरोतीत्युक्तं भवति।

वैशेषिकदर्शनेऽपि भगवता कणादेनोक्तं यद्—"अहमिति प्रत्यगात्मनि भावात् परत्र चाभावादर्थान्तरप्रत्यक्षः" इति।

तथा च—'अहम्' इत्यस्य मुख्या वृत्तिः प्रत्यगात्मन्येव वर्तते, न तु शरीरादिषु। अत एव 'अहम्' इति प्रत्ययस्य विषयः प्रत्यगात्मा विद्यते, नान्यः कश्चित्।

आलयविज्ञानवादिनां मते—'अहम्, अहम्' इत्येव वृत्तिरालयविज्ञानं वर्तते। अस्या उपरमे ते मुच्यन्ते।

भगवता सायणाचार्येण—अहमस्त्रयोऽर्थाः स्वीकृताः। 'अहं गच्छामि, 'अहं करोमि' इत्यादिष्वहंशब्दस्य प्रयोगश्चिदाभासमुद्दिश्य क्रियते। विद्वांसो जना एतादृशीनां क्रियाणां कर्तारं चिदाभासमेव मन्यन्ते। यदा तु शास्त्रीयदृष्टितश्चिदाभासं कूटस्थं परमात्मानं विदित्वा 'असङ्गोऽहम्, चिदात्माहम्' इत्युच्यते;

तदाहमोऽर्थः कूटस्थः परमात्मा भवति। परं चैतादृशाः प्रयोगा विद्वद्भिरेव क्रियन्ते, न तु सर्वसाधारणैर्जनैः।

शुकोपनिषदि—

परिपूर्णः परात्माऽस्मिन् देहे विद्याधिकारिणि।
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते॥

देशकालवस्तुप्रभेदैरपरिच्छिन्नः सर्वसमृद्धः परमात्माऽस्मिन् ब्रह्मविद्याधिकारिणि मानवीये देहे बुद्धेरन्तःकरणस्य च साक्षितया स्थित्वा स्फुरन् 'अहम्'-पदाभिधेयो भवति। यद्यपि परमात्मैवान्तःकरणस्य साक्षितया स्फुरन् 'अहम्' इतीर्यते, तथापि यदा साक्षितया स्फुरति तदा संज्ञान्तरं लभते। तथा च न्यायसिद्धान्तमुक्तावल्याम्—'अहम् अहम्' इति प्रत्ययस्य आश्रयः शारीरिक आत्मा प्रोक्तः। तथा चाध्यात्मोपनिषदि—

ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम्।
सोऽहमित्येव तद्वृत्त्या स्वान्यत्रात्ममतिं त्यजेत्॥

आदौ 'अहम्' इति वृत्त्या बुद्धितद्वृत्तिसाक्षिणम्, स्वं प्रत्यगात्मानं ज्ञात्वा 'सोऽहम्' इति वृत्त्या तं सच्चिदानन्दरूपं च निश्चित्य स्वान्यत्रात्ममतिं परित्यजेत्। तथा च 'सः' इत्यनेन स्वतः पूर्णः सच्चिदानन्दरूपः परमात्मा परामृश्यते। 'सोऽहम्' इत्यनेन च स्वस्मिन्नेव परमात्मानुसन्धानं क्रियते।

यथा परमात्मन आभासो न ततो भिन्नः। तथैव च 'हंसः सोऽहम्' वा न ओङ्कारशब्दाद्भिन्नः। तथा च सर्वेषां जीवानां श्वासप्रश्वासौ 'सोऽहम्, सोऽहम्' व्याहरन्तावेव चलतः। श्रान्तसुप्तानां गवादिपशूनामपि श्वासप्रश्वासौ 'सोऽहम्, सोऽहम्' उच्चारयन्तावेव गमनागमने कुरुतः। तत्र समाहितेन मनसा 'सोऽहम्, सोऽहम्' सुस्पष्टं श्रूयते। इयं जीवानां सहजा सनातनी प्रत्यभिज्ञास्ति।

राजयोगे 'सोऽहम्, सोऽहम्' इत्यस्य आलम्बनरूपेणोपयोगे कृते 'सोऽहम्' इत्यत्रापि 'ओ-अम्' एवम् ओं च समये श्रूयते, अवबुध्यते चेति सर्वं योगमार्गे समये सुस्पष्टं भवति।

तथा च योगगम्योऽयं विषयः। योगो योगेनैव ज्ञातव्योऽस्ति नान्यथा।

भगवतो विश्वनाथस्यास्यां काश्यां पुर्यां बहवो योगिनो जाताः। तेषामिदानीमपि नामानि श्रूयन्ते। अद्यापि बहवो योगिनो गोचरा अगोचरा वात्र विद्यन्ते। योगिजना एव जानन्ति परिपूर्णतयेमं विषयम्, न त्वकिञ्चनो मादृशो जनः। इदं सर्वं तेषां कृपाफलम्। अतस्तान् प्रणम्य तेषां चरणोपरीमं निबन्धं समर्प्य तेषां शाश्वतीं कृपां याचे। अस्मिन् प्रसङ्गे—

वन्दे वंशीधरं देवं भुक्तिमुक्तिप्रदं परम्।
भक्तवश्यं गुणातीतं सामगानरतं सदा॥

अस्मै संस्कृतविश्वविद्यालयायाप्यस्मिन्नवसरेऽनेकान् धन्यवादान् वितरामि, येनाहमत्र मदीयमजपाजापनिबन्धं श्रावितुमाहूतः।

भारते भातु भारती। भगवत्कृपयायं संस्कृतविश्वविद्यालयोऽखिलस्य भारतस्य विश्वस्य चाप्यद्वितीयो विद्यापीठो भवतु, पूर्णां च समुन्नतिं प्राप्नोत्विति परमकृपालुं परमेश्वरं प्रार्थयामि।

एते सर्वे विषया मुख्यतो भारत्यां भाषायामेव सन्त्यतोऽपि—

स्वतन्त्रे भारते जाते भारती मातापि स्वातन्त्र्यम्।
भुनक्तु नावमन्येत नृणां वाच्यार्थवादेषु॥
भारतीयेषु सर्वत्र संस्कृतं भूयाद् विना भेदम्।
इदं कुर्यात् स मे राजा स पूज्यः सर्वकारेषु॥



# देहस्थमूलाधारादिचक्राणां विवरणम्

श्रीयोगीन्द्रकृष्णदौर्गादत्तिः शास्त्री, कोटद्वारगढवालस्थः ।

मूलाधारादिचक्राणां विवरणात् पूर्वं तेषां स्थितिज्ञानायेडा-पिङ्गला-सुषुम्णादीनां नाडीनां स्वरूपस्य स्थितेश्च ज्ञानं नितान्तमावश्यकं वरीवर्ति, अतः पूर्वं तासामेव विषये किञ्चिदभिधीयते—

मानवशरीरस्य पृष्ठभागे मेरुदण्डो वर्तते, तस्यैव बाह्यप्रदेशे वामभागे चन्द्रस्वरूपिणीडानाडी, दक्षभागे च सूर्यरूपा पिङ्गलानाडी तिष्ठति। इडानाडी शक्तिरूपा, पिङ्गला च पुंरूपाऽभिधीयते। अत एव तन्त्रसारेऽभिहितम्—

इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी।
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा॥
दक्षिणे पिङ्गलाख्या तु पुंरूपा सूर्यविग्रहा। इति।

इडापिङ्गलयोर्मध्ये च मेरुदण्डस्य मध्यभागे—

गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः।
चतुरङ्गुलविस्तारं कन्दमूलं खगाण्डवत्॥

इत्युक्तलक्षणलक्षितस्य कन्दस्य मध्यप्रदेशात् समुत्थिता शिरःपद्मपर्यन्तं स्थिता विकसितधुत्तूरपुष्पाकारा चन्द्रसूर्याग्निरूपा वक्ष्यमाणवज्रिणीचित्रिणीभ्यां समेताऽत एव त्रितयगुणमयी सती सुषुम्णानाडी सुतरां विराजते। प्रागुक्ता वज्रिणी ( वज्राख्या ) नाडी उपर्युक्तायाः सुषुम्णाया मध्यदेशे दीप्तिं कुर्वती सती प्रागुक्तकन्दद्व्यङ्गुलोर्ध्वाल्लिङ्गदेशात् शिरःपर्यन्तगामिनी वर्तते।

तस्या वज्रिणीनाड्या मध्ये सा प्रसिद्धा चित्रिणीनाडी विलसति, या हि प्रकाममुद्दीप्यमाना योगिनां योगगम्या लूतातन्तुवदतिसूक्ष्मा मेरुमध्यस्थितसुषुम्णा-वज्रिणीनाड्योरभ्यन्तरस्थान् मूलाधार-स्वाधिष्ठान-मणिपूरानाहतविशुद्धाऽऽज्ञाख्यान्

अखिलसरसिजान् भित्त्वा तेषामेवोपर्युक्तानां षण्णां पद्मानां ग्रथनरचनया देदीप्यते, अर्थादुक्तानि पद्मानि चित्रिणीनाड्यां ग्रथितानीव सन्ति ।

एतस्याश्चित्रिण्या नाड्या मध्ये मूलाधारस्य स्वयम्भूलिङ्गच्छिद्रात् सहस्रारस्थित-परमशिवपर्यन्तगामिनी विद्युत्पुञ्जसमानदीप्तिशालिनी विषतन्तुतनीयस्यतिसूक्ष्मा त्रिगुणात्मिका ब्रह्मनाडी देदीप्यते ।

एतस्या एव ब्रह्मनाड्या मुखे ब्रह्मद्वारं विलसति, यस्मिन् शिवशक्तिसामरस्य-सञ्जातामृतस्यासारः प्रसरति, यस्मादेव ब्रह्मद्वाररूपप्रदेशान्मूलाधारस्थितशिवशक्तिभ्यां निरुक्तामृतं पीयते। एतदेव च ब्रह्मद्वारं सुषुम्णाख्यनाड्या मुखं योगीन्द्रा विनिर्दिशन्ति ।

एवं चेडा-पिङ्गला-सुषुम्णादीनां नाडीनां स्थितिक्रमं निरूप्य षट्चक्रनिरूपण-क्रमः प्रदर्श्यते । तत्र षट्सु पद्मेषु प्रथमं मूलधारपद्मम् । अन्येषां पद्मानां मूलरूपतया-धिकरणरूपतया चास्य मूलाधारपद्ममिति संज्ञा सञ्जाता । एतन्मूलाधारपद्मं पायुलिङ्गयोर्मध्ये सुषुम्णानाड्या मुखलग्नमधोमुखमवस्थितम् । एतस्य कमलस्य चत्वारि रक्तवर्णानि दलानि सन्ति, तेषु पत्रेषु पूर्वादितः प्रादक्षिण्येन व श ष स रूपं सुवर्णवर्णं वर्णचतुष्टयं वर्तते । अस्मिन् मूलाधारपद्मे धरादेवताकं चतुष्कोणमण्डलं विलसति, तस्य मण्डलस्याष्टदिक्षु शूलाष्टकं मध्ये च पृथिवीबीजात्मकः पीतो लकारस्तिष्ठति । तदुक्तं निर्वाणतन्त्रे—

अधोवक्त्रं हि तत्पद्मं धरामध्ये चतुर्दलम् ।
पद्ममध्ये बीजकोषे क्षितिचक्रं मनोहरम् ॥
वलयाकाररूपेण समुद्राः सप्त संस्थिताः ।
जम्बूद्वीपं मध्यदेशे चतुष्कोणं मनोहरम् ॥
त्रिकोणं मदनागारं कन्दर्पश्चाधिदेवता ।
ऐन्द्ररूपं हि लं-बीजं गजेन्द्रवाहनं शिवे ॥ इति ।

तस्य धराबीजस्य चत्वारो बाहवो गजेन्द्रश्च वाहनम् । धराबीजान्तर्नादोर्ध्वे नवोदयमानरविप्रभाभास्वरश्चतुर्बाहुः कमलोपमचतुराननो ब्रह्मा वर्तते । अत्र—

ऐन्द्रबीजं वरारोहे लिङ्गस्य वामदेशके।
सुसिद्धं ब्रह्मसदनं नादोपरि सुसुन्दरम्॥
तत्रैव निवसेद् ब्रह्मा सृष्टिकर्ता प्रजापतिः। इति।

निर्वाणतन्त्रचतुर्थपटलवचनेन नादोपरि ब्रह्मसदनस्थितेरभिधानान्नादोर्ध्वे- बिन्दौ स्थितिरित्यवधेयम्।

"लिङ्गस्य वामदेशके" इति तु न श्रीतत्त्वचिन्तामणिकारसम्मतम्, मूले तथाऽनभिधानात्, अत्र तन्त्रेषु मतभेददर्शनाच्च।

"चतुर्वक्त्रं हंसपृष्ठे ब्रह्माणं विद्धि पार्वति" इति षट्चक्रटीकाधृतभूतसिद्धि- तन्त्रवचनदर्शनादत्र हंसपृष्ठे ब्रह्मणः स्थितिरवगन्तव्या।

### मूलाधारपद्मे डाकिनीस्थितिः

अस्मिन् मूलाधारपद्मे वसन्ती चतुर्भिर्भुजैर्युक्ता रक्तनेत्रा काञ्चनशोभां वहन्ती डाकिनीदेवी साधकानां तत्त्वज्ञानं सम्पादयति। ब्रह्मणः शक्तित्वादस्या अपि चतुर्बाहुत्वम्।

### तत्कर्णिकान्तस्त्रिकोणे कन्दर्पवायोरवस्थितिः

"वज्राख्या मेढ्रदेशाच्छिरसि परिगता" इत्यादिना निरुक्ताया वज्रिणी- नाड्या मुखप्रदेशे मूलाधारपद्मकर्णिकाया मध्ये वर्तमानं विद्युत्समानाध्वनि स्निग्धं योन्याकारं त्रिकोणम्, तदन्तः कामवायुः क्लीँ-इति कामबीजञ्च रक्तवर्णं कोटिसूर्यभास्वरं विलसति। तथा च शाक्तानन्दतरङ्गिण्यां व्यक्तमाह—

आधारे कन्दमध्यस्थं त्रिकोणमतिसुन्दरम्।
त्रिकोणमध्ये देवेशि कामबीजं सुलक्षणम्॥ इति।

तथा तत्रैव चतुर्थोल्लासे—

कर्णिकायां स्थिता योनिः कामाख्या परमेश्वरी।
तद्योनिः परमेशानि! इच्छाज्ञानक्रियात्मिका॥
अपराख्यं हि कन्दर्पमाधारे तत्त्रिकोणके। इत्यादि।

अत्र कामबीजस्थितेरभिधानात् पूर्वोक्तरीत्या कामस्यापि स्थितिरुक्तेत्यवधेयम्।

### तत्र स्वयम्भुलिङ्गाऽवस्थितिः

तस्मिन् योन्याकारत्रिकोणे द्रवीभूतसुवर्णकमनीयकान्तिर्ज्ञानिनां योगिनां तत्त्वज्ञानेन ध्यानैकतानमानसानां मुनीनाञ्च स्वरूपचिन्तया प्रकाशशीलः पूर्णचन्द्र-मण्डलप्रकाशकुण्डलिन्याः समं विलासशीलः शम्भुः ( स्वयम्भुलिङ्गम् ) वर्तते। एवञ्चा-धारत्रिकोणान्तराऽधोमुखं नवकिसलयाकारं स्वयम्भुलिङ्गं वर्तत इति निष्कर्षः।

### स्वयम्भुलिङ्गोर्ध्वे कुण्डलिन्याः स्थितिः

स्वयम्भुलिङ्गस्योर्ध्वे बिसतन्तुतनीयसी जगतां मोहजनिका मायारूपिणी ब्रह्मद्वारमुखं स्वमुखेनाच्छादयन्ती सार्द्धत्रिवलयाकारा स्वयम्भुलिङ्गोपरि सुप्ता पुष्परस-पानोन्मत्ताऽलिकुलसमं मधुरं कूजन्ती श्वासप्रश्वासक्रमेण प्राणिनां प्राणांश्च धारयन्ती कुलकुण्डली विलसति। कुण्डलिन्या एव ध्वन्यात्मकवर्णात्मकानां शब्दानां सृष्टि-र्जायते। तदुक्तं शारदायां प्रथमपटले—

भिद्यमानात् पराद् बिन्दोरव्यक्तात्मा रवोऽभवत्। इति।

तथा च—

तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्।<br>
वर्णात्मनाऽऽविर्भवति गद्यपद्यादिभेदतः॥ इति।

तथा च लघुस्तवे—

या मात्रा त्रपुषीलतातनुलसत्तन्तुस्थितिस्पर्धिनी<br>
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम्।<br>
शक्तिं कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां<br>
ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः॥ इति।

### तत्र परशक्तिस्थितिः

स्वयम्भुलिङ्गमध्ये कुण्डलिन्यूर्ध्वे जगन्निर्माणकुशला सूक्ष्मतमा विद्युत्प्रभाभास्वरा नादात्मिका ईश्वराणां परमेश्वरी स्वतेजसा जगदखिलं भासयति।

तथा च श्रीपूर्णानन्दयतयः—

तन्मध्ये परमा कलाऽतिकुशला सूक्ष्मातिसूक्ष्मा परा
नित्यानन्दपरम्परा च चपला मालालसद्दीधितिः ।
ब्रह्माण्डादिकटाहमेव सकलं यद् भासया भासते
सेयं श्रीपरमेश्वरी विजयते नित्यप्रबोधोदया ॥

### कुण्डलिनीध्यानफलम्

मूलाधारचक्राऽभ्यन्तरविवरे कोटिसूर्यप्रकाशां कुलकुण्डलिनीं ध्यात्वा साधको वाचामधीश्वरतामधिगच्छति । किञ्च, निरामयो भूत्वा परमेश्वरपरायणः सन् निरन्तरं सुरभारतीविरचितानेककाव्यप्रबन्धैश्चिरं सकलसुरगुरून् ब्रह्मविष्णुमहेश्वरादीन् विद्वद्भूसुरांश्च सेवते ।

एवं मूलाधारचक्रवर्णनं समाप्य सम्प्रति स्वाधिष्ठानचक्रवर्णनं क्रियते—

स्वाधिष्ठानपदव्युत्पत्तिस्तु गन्धर्वतन्त्रे पञ्चमपटले—"स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः" इत्येवं निरूपिता ।

लिङ्गमूलप्रदेशे सुषुम्णानाडी मध्यदेशे सिन्दूरारुणवर्णमतिमनोहरं स्वाधिष्ठानपद्मं वर्तते । तस्य च षट् पत्राणि । तेषु पत्रेषु च यथाक्रमं विद्युदाकारा बँ भँ मँ यँ रँ लँ इत्येते षड् वर्णा विलसन्ति ।

### तत्राम्भोजमण्डलम् , तत्र च वरुणबीजस्थितिः

निरुक्तस्वाधिष्ठानपद्मकर्णिकायां शुक्लवर्णमर्धचन्द्रसमेतमम्भोजमण्डलं विलसति, तस्मिंश्च शारदशशिविशदं मकरवाहनं वरुणबीजम् ( वंकारबीजम् ) अवतिष्ठते । अत्र वमिति वरुणबीजस्थित्या वरुणस्यापि स्थितिरवगन्तव्या ।

### वरुणबीजस्याङ्के विष्णोरवस्थानम्

तस्य वरुणबीजस्याङ्कदेशे विलसितो नीलजीमूतकान्तिः पीताम्बरधरः श्रीवत्सकौस्तुभविभूषिताङ्गश्चतुर्भुजो रुचिरां श्रियमादधानः श्रीविश्वम्भरो विराजते ।

### अत्र स्थिताया राकिणीशक्तेः स्वरूपम्

अस्मिन् स्वाधिष्ठानपद्मे नीलकमलकान्तिर्विविधाभरणभूषिता दिव्याम्बरधरा नानायुधोद्यतकरा राकिणीशक्तिर्विराजते ।

मूलाधारादिषट्पद्मान्तर्गतशक्तीनां स्थितौ—

विशुद्धौ डाकिनी देवी राकिणी चाप्यनाहते।
लाकिनी मणिपूरस्था स्वाधिष्ठाने तु काकिनी ।।

इति शाक्तानन्दतरङ्गिणीवचनेन तु स्वाधिष्ठाने काकिन्या मूलाधारे च शाकिन्याः स्थितिरिति प्रस्थानभेदो दृश्यते।

एतत् पद्मचिन्तनफलम्

स्वाधिष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद् यो मुनीन्द्र-
स्तस्याहङ्कारदोषादिकसकलरिपुः क्षीयते तत्क्षणेन।
योगीशः सोऽपि मोहाद्भुततिमिरचये भानुतुल्यप्रकाशो
गद्यैः पद्यैः प्रबन्धैर्विरचयति सुधाकाव्यसन्दोहलक्ष्मीः ।।

एवं द्वितीयं स्वाधिष्ठानचक्रं वर्णयित्वा तृतीयस्य मणिपूरचक्रस्य निरूपणं क्रियते।

तत्र तावन्मणिपूरपदव्युत्पत्तिर्गन्धर्वतन्त्रे—

"मणिमद्भिन्नं तं पूरं मणिपूरं ततो विदुः" इति।

स्वाधिष्ठानोर्ध्वे नाभिमूले गाढजलधरप्रभं दशदलं मणिपूराख्यं कमलं विलसति। तस्य दलानि च नादबिन्दुसहितैर्नीलप्रभाभास्वरैः ड ढ ण त थ द ध न प फरूपैर्दशभिर्वर्णैरुपेतानि। कमलस्यास्य कर्णिकायां बालार्कसदृशं रक्तोज्ज्वलं त्रिकोणं वह्निमण्डलम्। तच्च स्वस्तिकाख्यद्वारत्रययुक्तम्।

१ अत्र गाढजलधरप्रभेति विशेषणेन पद्मस्य नीलवर्णता प्रतीयते, प्रागुक्तशाक्तानन्दतरङ्गिणीवचनेन तु रक्तवर्णत्वं च स्पष्टमुक्तम्। गन्धर्वतन्त्रे तु—

तदूर्ध्वे नाभिदेशे तु मणिपूरं महत्पुरम्।
हेमाभं वैद्युताभं च बहुतेजोमयं तथा ।।

इत्यनेन हेमाभत्वादिकं पद्मस्य विशेषणत्वेनोपपादितम्। एवञ्च स्वरूपभेदे समुत्पन्ने श्रीनाथापरपर्यायश्च स्वगुरोराज्ञया ध्यानार्थमेकतरः पक्षः समाश्रयणीय इति तत्त्वम्।

तस्मिंस्त्रिकोणे वह्निमण्डले मेषवाहनं रक्तवर्णं चतुर्भुजं रमिति वह्निबीजं ध्यायेत्। अत्र वह्निबीजस्य स्थितेस्तत्र वह्नेरपि स्थितिरित्यवधेयम्, मन्त्रदेवतयो-

रभेदस्य सर्वतन्त्रसिद्धत्वात्। एवञ्च यत्र यत्र यद्देवताबीजोपस्थितिस्तत्र तत्र तद्देवतास्थितिरप्यवधेया ।

तत्र रुद्रमूर्तेरवस्थितिः

वह्निबीजस्याङ्के सिन्दूरारुणवर्णो भस्मावलिप्ताङ्गो निखिललोकवरदस्त्रिनेत्रः सृष्टिसंहारकारी वृद्धरूपी रुद्रो निवसति ।

अत्र पद्मे लाकिनीशक्तेरवस्थितिः

मणिपूरपद्मकर्णिकायां सकललोकशङ्करी पीतवस्त्रालङ्कारादिभिरलङ्कृता भुजचतुष्टयधारिणी श्यामा रुद्रशक्तिर्लाकिनी विलसति ।

मणिपूरचक्रचिन्तनफलम्

साधको नाभिस्थानगतमणिपूरकचक्रध्यानेनाविरतमवनिमण्डलस्य पालने संहरणे च नितरां समर्थो भवति, भगवती वाग्वादिनी चास्य वदनकमलं सततमेवाधिवसति ।

एवं मणिपूरकचक्रवर्णनानन्तरं क्रमायातस्यानाहतचक्रस्य वर्णना विधीयते ।

अनाहतपद्मम् , तत्कर्णिकायां वायुमण्डलञ्च

तन्त्रसारवचनानुसारेणानाहतपदव्युत्पत्तिर्निम्नप्रकारा निरीक्ष्यते—

शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ।
अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्यते ।। इति ।

मणिपूरकचक्रस्योर्ध्वप्रदेशे हृदयदेशे सुस्निग्धं बन्धूकपुष्पवदरुणवर्णं द्वादशदलेषु सिन्दूरपूरवद्रक्तवर्णैः ककारादिभिष्ठकारान्तैः क ख ग घ ङ च छ ज झ ञ ट ठ-रूपैर्द्वादशवर्णैर्युक्तं वाञ्छितादप्यधिकप्रदं चतुर्थमनाहतसंज्ञकं पङ्कजं विराजते। अस्य पद्मस्य च कर्णिकायां षट्कोणं धूम्रवर्णं वायोर्मण्डलं वर्तते। तथा च निर्वाणतन्त्रे—

एतत्पद्मस्योर्ध्वदेशे विमलं पद्मसुन्दरम् ।
शोभितं द्वादशैः पत्रैः शोणवर्णसमन्वितम् ।।
पद्ममध्ये बीजकोषे षट्कोणमण्डलं शुभम् ।
मण्डलस्य मध्यदेशे वायुबीजं मनोहरम् ।। इति ।

एवञ्च बीजकोषान्तःषट्कोणे वायुबीजस्थितिरिति गम्यते ।

### तत्र वायुबीजं तत्रेशस्थितिश्च

वायुमण्डलस्य मध्ये चानन्दमयं चतुर्बाहुसमन्वितं कृष्णसारमृगवाहनं श्रेष्ठं वायुबीजं वरीवर्त्ति । अत एव तन्त्रसारे—

अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्यते ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ।। इति लिखितम् ।

वायुबीजस्थित्या समानवर्णवाहनवायुदैवतस्थितिः पूर्ववदेव ।

वायुबीजमध्ये च त्रिलोकीकल्याणायाऽभयं वरञ्च विदधानं करुणामयं शुक्लवर्णमीश्वराख्यं शिवं विचिन्तयेत् ।

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः"
इति वचनादीश्वराख्यस्य शिवस्यानाहतपद्माऽधिष्ठातृत्वम् ।

### एतत्पद्मकर्णिकायां काकिनीशक्तेरवस्थितिः

अनाहताख्यपद्मस्य कर्णिकायामीश्वराख्यस्य शिवस्य पार्श्वे "तत्पार्श्वे ध्यानमाकुर्यात् काकिनीं परमेश्वरीम्" इति रुद्रयामलवचनादीश्वरपार्श्ववर्तिनी त्रिनेत्रा चतुर्भुजा पीतवर्णा नानाऽलङ्करणभूषिता पाशकपालवराऽभयकरा साधकानां हितं सम्पादयन्ती सहस्रारगलितामृतरसेनार्द्रीकृतहृदया कङ्कालमालिनी काकिनी शक्तिः शोभते ।

### एतत्पद्मकर्णिकान्तस्त्रिकोणाकारा शक्तिर्बाणलिङ्गश्च

निरुक्ताऽनाहतकमलकर्णिकायां वायुबीजादधः कोटिविद्युद्दीप्ता कोमला च त्रिकोणाकारा शक्तिः, तद्दक्षिणपार्श्वे कनकोज्ज्वलकान्तिः सार्द्धचन्द्रविन्दुशिरस्कः शोभातिशयसम्पन्नो बाणलिङ्गाख्यः शिवो वर्तत इति ।

### एतदनाहतपद्मचिन्तनफलम्

अभीष्टसम्पादने कल्पपादपस्वरूपस्य निष्कम्पदीपशिखाकारेण जीवात्मना संशोभितस्य भगवतः शर्वस्य निवासभूतस्य सूर्यमण्डलारुणकिरणसम्पर्केण प्रोत्फुल्लानां केशराणां शोभयाऽन्वितस्यास्याऽनाहतपद्मस्य ध्यानात् साधको बृहस्पतितुल्यः सर्व-

शास्त्रविद् वाक्पटुः सृष्टिस्थितिसंहारक्षमो ज्ञानिनां श्रेष्ठो निरन्तरकाव्यामृतरसास्वादननिपुणो नारायणसदृशो योगी परकायप्रवेशयोग्यताञ्च लभते। तथाहि श्रीतत्त्वचिन्तामणौ—

ध्यायेद् यो हृदिपङ्कजं सुरतरुं सर्वस्य पीठालयं
देवस्यानिलहीनदीपकलिकाहंसेन संशोभितम्।
भानोर्मण्डलमण्डितान्तरलसत् किञ्जल्कशोभाकरं
वाचामीश्वर ईश्वरोऽपि जगतां रक्षाविनाशक्षमः॥
गद्यैः पद्यपदादिभिश्च सततं काव्याम्बुधारावहः।
लक्ष्मीरङ्गणदैवतं परपुरे शक्तः प्रवेष्टुं क्षणात्॥ इति।

एवमनाहतपद्मवर्णनाऽनन्तरं विशुद्धाख्यपद्मनिरूपणं क्रियते—

## विशुद्धपद्मं तत्कर्णिकायां नभोमण्डलस्थितिश्च

पद्मस्यास्य विशुद्धसंज्ञाकारणं शाक्तानन्दतरङ्गिण्यां निम्नप्रकारेण प्रदर्शितम्—

विशुद्धिस्तन्यते यस्माज्जीवस्य हंसलोकनात्।
विशुद्धपद्ममाख्यातमाकाशाख्यं महाद्भुतम्॥ इति।

अनाहतचक्रस्योर्ध्वं कण्ठप्रदेशे धूम्रवर्णं षोडशसु दलेषु रक्तवर्णैरकारादिविसर्गान्तषोडशस्वरैर्दीप्तं विशुद्धाभिधानं निर्मलं पद्ममास्ते। व्यक्तमाह शाक्तानन्दतरङ्गिण्याम्—

कण्ठदेशे विशुद्धाख्यं धूम्रवर्णं मनोहरम्।
अकारादिस्वरोपेतैर्दलैः षोडशभिर्युतम्॥ इति।

एतस्य पद्मस्य कर्णिकायां वृत्ताकारं पूर्णचन्द्रसदृशं भास्वरशुक्लवर्णं नभोमण्डलं विद्यते। तस्मिन् गगनमण्डले श्वेतवर्णं करिणमधितिष्ठतः शुक्लाम्बरधरस्य पाशाभयाङ्कुशवरधारिभिश्चतुर्भिर्भुजैः सुशोभिताङ्गस्य 'हँ' इत्यात्मकस्य नभोबीजस्याङ्के गिरिजाभिन्नदेहस्त्रिलोचनः पञ्चाननः शार्दूलचर्मवसनः सदाशिवो देवो निवसति। अत्र नभोबीजस्थितेरभिधानादनभसोऽपि स्थितिः पूर्ववदेव बोध्या।

एतत्पद्मकर्णिकायां शाकिनीशक्तेश्चन्द्रमण्डलस्य चावस्थितिः।

अस्मिन् कमले सुधाधवला ( शुक्लवर्णा ) चतुर्भिः करैः शरचापबाणाङ्कुशान् धारयन्ती पीतवसना शाकिनीशक्तिर्निवसति, अस्य कमलस्य कर्णिकायां सम्पूर्णं निष्कलङ्कमृगाङ्कमण्डलं विलसति। एतच्चन्द्रमण्डलञ्च योगाभ्यासविशुद्धचेतसः साधकस्य निर्वाणमुक्तिकारणं वर्तते।

एवञ्च कर्णिकान्तर्नभोमण्डलमध्ये चन्द्रमण्डलं तत्र नभोबीजं तत्रार्द्धनारीश्वरः सदाशिवः शाकिनीशक्तिश्चेत्यवधेयम्।

निर्वाणतन्त्रेऽष्टमपटले तु—

पद्ममध्ये वराटे च जनलोकं सुसुन्दरम्।
महामोहान्ध्यशमनं तद्बाह्ये चन्द्रमण्डलम्॥

तथा—

बीजकोशे मणिद्वीपे षट्कोणंचक्रमुत्तमम्।
यन्त्रमध्ये च वृत्ताभं महासिंहासनं ततः॥
तस्योपरि सदा गौरी दक्षभागे सदाशिवः।
त्रिनेत्रः पञ्चवक्त्रश्च प्रतिवक्त्रे त्रिलोचनः॥
विभूतिभूषिताङ्गश्च रजताचलसोदरः।
व्याघ्रचर्मधरो देवो मणिमालाविभूषितः॥

तथा—

सर्वानन्दकरो देवो अर्द्धनारीश्वरो विभुः।

इत्यादिना बीजकोशबाह्ये चन्द्रमण्डलं बीजकोशान्तः षट्कोणचक्रं तन्मध्ये वृत्तं तदन्तः सिंहासनं तत्रार्द्धनारीश्वरः सदाशिव इति क्रमो दृश्यते।

### एतत्पद्मचिन्तनफलम्

यः शान्तचेताः साधको विशुद्धचक्रचिन्तने निरवधि चित्तं निदधाति, सः कविर्वाग्मी ज्ञानी तथा त्रिलोकदर्शी निखिललोककल्याणकारी रोगशोकविमुक्तश्चिरञ्जीवी भवति।

एवं विशुद्धचक्रमभिधायाज्ञाचक्रं वर्ण्यते—

## भ्रूमध्ये द्विदलमाज्ञापद्मं तत्कर्णिकायां हाकिनीशक्तेरवस्थितिः

शाक्तानन्दतरङ्गिण्यस्याऽऽज्ञाचक्रस्याज्ञा नामकरणं निम्नप्रकारेण विनिर्दिशति—

"आज्ञासंक्रमणं तत्र गुरोराज्ञेति विश्रुतम्" इति ।

विशुद्धचक्रस्योर्ध्वं भ्रुवोर्मध्ये द्विदलमाज्ञाचक्रं वर्तते । अत एवोक्तं शाक्तानन्दतरङ्गिण्याम्—

"आज्ञा नाम भ्रुवोर्मध्ये चक्रं च द्विदलं परम्" इति ।

एतच्चक्रञ्च चन्द्रसदृशं शुक्लवर्णं तथा चास्य दलद्वयं शुभ्रवर्णम् इकारक्षकारयुक्तं वर्तते । एतस्य पद्मस्य कर्णिकायां शशिसमधवला हाकिनीशक्तिः षडानना विद्याऽवराऽभयकपालडमरुजपमालासमलङ्कृतकरकमला शुभ्रचित्ता विराजते ।

## आज्ञापद्मकर्णिकायां मनसः कर्णिकान्तस्त्रिकोणे चेतराख्यशिवस्य । प्रणवस्य च स्थितिः ।

आज्ञापद्मस्य कर्णिकायां सर्वशास्त्रप्रसिद्धमतीन्द्रियं सूक्ष्मरूपं मनो निवसति । अस्य कमलस्य कर्णिकान्तस्त्रिकोणे चेतराख्यशिवलिङ्गं विराजते ।

इतराख्यशिवलिङ्गस्योर्ध्वभागे विद्युत्प्रभं शक्तित्रिकोणं वर्तते । तस्मिंश्च त्रिकोणे स्थिरतरहृदयः साधको ब्रह्मनाडीप्रबोधकारकं वेदानामादिबीजं प्रणवं विचिन्तयति ।

अत्र यद्यपि पूर्वं 'तन्मध्ये चित्रिणी सा प्रणवविलसिता योगिनां योगगम्या' इत्यादि तृतीयपद्ये प्रणवविलसितेत्यनेन चित्रिण्या एव प्रणवविलसितत्वमुक्तम्; तथाप्याज्ञाचक्रस्थितेन प्रणवेन चित्रिण्यन्तःस्थिताया ब्रह्मनाड्या अपि प्रणवविलासितत्वमुन्नेयमेव ।

ततश्चाज्ञानाम्नः पद्मस्य कर्णिकायां मनः, कर्णिकान्तस्त्रिकोणे इतराख्यं शिवलिङ्गम्, तदूर्ध्वं त्रिकोणे विद्युत्पुञ्जदीप्तिशाली प्रणवो विराजत इति फलितम् ।

## एतच्चिन्तनफलम्

आज्ञाचक्रध्याननिष्ठः साधकवरः परकायप्रवेशक्षमः सर्वज्ञः सर्वदर्शी मनसा वाचा कर्मणा च सकललोकोपकारकोऽद्वैताचारशीलः परमसिद्धियुक्तो दीर्घायुस्तथा लोकत्रयसृष्टिस्थितिपालनकर्ता च भवति ।

## आज्ञाचक्रे प्रणवघटकवर्णानामवस्थितिः

अस्मिन्ना ज्ञाचक्रे निरुक्तत्रिकोणस्यान्तः प्रणवरचनारूपेण स्थितः, अकारोकारसङ्घातरूप ओकारः प्रकाशशीलो निवसति, तस्यैवौकारस्योर्ध्वमर्द्धचन्द्राकारचिह्नं विलसति। अर्द्धचन्द्रोर्ध्वे बिन्दुरूपी मकारो निवसति, मकार एव बिन्दुरूपेण तत्र वर्तत इत्यर्थः। बिन्दुरूपिणो मकारस्याग्रे स्थितोऽसौ नादश्चन्द्रवच्छुभ्रवर्णः शोभते।

एवञ्च निरुक्तप्रणवोऽकारोकारनादबिन्दुमयोऽन्तरात्मस्वरूपः प्रदीपशिखोज्ज्वलः श्वेतवर्णश्चेति फलितम्।

## आज्ञाचक्रे प्रणवस्वरूपचिन्तनफलम्

अस्मिन्नानन्दमयसदने आज्ञाचक्रस्थितं प्रणवं परितो मनसि निलीने सति श्रीनाथचरणाऽऽराधनविहितां विषयसम्बन्धोच्छेदकारिणीं चेतसः स्थैर्यसम्पादिनीं योनिमुद्रां खेचरीमुद्रां वा बद्ध्वा निरन्तरं प्रणवानुशीलनात् साधको योग्यग्निस्फुलिङ्गान् पश्यति। पुनरभ्यासदार्ढ्यानन्तरं पद्ममध्यस्थितं त्रिकोणं तदन्तः प्रणवघटकान् वर्णानपि पश्यति।

निरुक्तायामाज्ञाचक्रकर्णिकायामग्निचन्द्रसूर्यमण्डले इव भगवान् परमशिवः साक्षाद् भवति। यथा सहस्रारकमलस्य वह्निचन्द्रसूर्यमण्डलेषु परमशिवो वर्तते, तद्वदत्रापीत्यर्थः। अयमेव भगवान् परमशिवः सर्वप्रपञ्चानां सृष्टिस्थितिसंहारान् स्वविभवेन निर्वर्तयति। तथा चायं परमशिवोऽव्ययः सर्वत्राविष्कृतरूपः साक्षी द्रष्टा।

अत्रेदमवधेयम्—परमार्थतः सृष्ट्यादिकर्तृत्वं शक्तयैव—'तस्याः पुनः पुनः सृष्टिर्जायते लीयते सदा' इत्यादि गन्धर्वतन्त्रतृतीयपटलवचनेन शक्त्या एव सृष्ट्यादिकर्तृत्वाभ्युपगमात्। एवञ्च स्वाभिन्नशक्तिकृतप्रपञ्चसृष्ट्यादिकं कूटस्थरूपेण पश्यतीति साक्षीत्यनेन सूचितम्।

## अत्र प्राणत्यागस्य फलम्

योगीन्द्रः साधकः प्राणत्यागकाले ब्रह्मनिर्वाणं मे भविष्यतीति प्रकर्षेण हृष्टमानसः सन् निरवच्छिन्नाऽऽनन्दसन्दोहरमणीये आज्ञाचक्रे प्राणान् समारोप्य योगानुशासनक्रमेण प्राणानां लयं विधाय परं पुरुषं प्रविशति, निर्वाणमुक्तिं लभत इत्यर्थः।

### आज्ञाचक्रोर्ध्वे शिवशक्तिरूपो महानादस्तद्दर्शनफलञ्च

श्रीगुरुदेवचरणकमलसेवासंप्राप्तदृढतरयोगाभ्यासेन चित्तैकाग्रतासमाहृतः साधको यदा निरुक्ताज्ञाचक्रस्योर्ध्वे वायोर्लयस्थानं महानादादेव वायोरुत्पत्तेः कारणभूते महानाद एव तस्य लयसम्भवात् शिवशक्तिमयं शान्तं शुद्धबुद्धिप्रकाश-महानादं पश्येत्, तदा तस्य करतले सदैव वाचां सिद्धिर्भूयात्। तदुक्तं शारदायां प्रथमपटले—

> बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः।
> समवायः समाख्यातः सर्वागमविशारदैः॥ इति।

राघवभट्टेनापि—

> एवमालोक्य सर्गादौ सच्चिदानन्दरूपिणीम्।
> समस्ततत्त्वसङ्घातस्फूर्त्यधिष्ठानरूपिणीम्॥
> व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान्॥

इति पाञ्चरात्रवचनमुल्लिख्य, तस्या एव नादबिन्दू सृष्ट्युपयोगावस्थारूपा-वित्यभिधाय,

> नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी।
> शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता॥
> सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः सन्निधेस्तदा।
> विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्॥

इति वचनेनापि शिवशक्त्योरभेद एव प्रतिपाद्यते।

### सहस्रारपद्मम्

अथ शिरसि स्थितं सहस्रदलकमलं निरूप्यते—निरुक्तमहानादोर्ध्वे शङ्खिन्या नाड्या अग्रभागे शून्याकारस्थाने तथा ब्रह्मरन्ध्रस्थिताद् विसर्गात् प्रकृतेरधः-प्रदेशे विसर्गस्य ब्रह्मरन्ध्रे स्थितिमाह कङ्कालमालिनीतन्त्रे द्वितीयपटले—

> ततो वायुर्महानादो ब्रह्मरन्ध्रं ततः परम्।
> तस्मिन् रन्ध्रे विसर्गञ्च नित्यानन्दं निरञ्जनम्॥ इति।

विसर्गस्य प्रकृतिवाचकत्वन्तु प्रपञ्चसारे प्रपञ्चितम्—

> बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृतिः॥ इति।

प्रकाशरूपं परिपूर्णचन्द्रवदतिशयशुक्लवर्णमधोवक्त्रं कमनीयाकृति रक्तभास्वर-केशरसमूहं ललाटादिषु विन्यस्तैरकारादिक्षकारान्तैः पञ्चाशद्वर्णैः प्रविलसितवपुः केवलानन्दरूपं सहस्रदलं पद्मं विलसति । व्यक्तमाह कङ्कालमालिनी तन्त्रे—

अकारादिक्षकारान्तैः स्फुरद्वर्णैर्विराजितम् ॥ इति,

शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे—

मातृकाक्षरसम्भूतं सहस्रारं सरोरुहम् ॥ इति च ।

अत्रेदमवधेयम्—पद्मेऽस्मिन् पत्राणां विंशतिरावर्तनानि प्रत्यावर्तनञ्च पञ्चाशत्-पत्राणि, तेषु प्रतिपञ्चाशत्पत्रेष्वकारादिक्षकारान्ताः पञ्चाशद् वर्णाः शोभन्त इति ।

### तत्कर्णिकायां चन्द्रमण्डलं तदन्तस्त्रिकोणं तदन्तः परबिन्दुश्च

एतस्य सहस्रदलकमलस्य कर्णिकायां परमामृतसमूहेषु स्निग्धं निर्मलं सम्पूर्णचन्द्रमण्डलं विद्यते । निरुक्तचन्द्रमण्डलाभ्यन्तरे विद्युत्सदृशकान्ति त्रिकोण-मस्ति । तस्य त्रिकोणस्य मध्ये सकलसुरगणैः सेवितमतिगुह्यं शून्यं परं बिन्दुरूपं स्फुरति ।

### परबिन्दोर्गोप्यत्वं परमशिवस्थितिश्च

महामोक्षस्य परं कन्दं प्रधानं मूलभूतं सूक्ष्मममाकला निर्वाणकलोपलक्षितं तन्निरुक्तं शून्यं यत्नात् सुगोप्यमस्ति, साधकैर्यस्मै कस्मैचिन्न प्रकाशनीयम् ।

एतत्पद्मकर्णिकान्तःस्थितचन्द्रमण्डलमध्यवर्तिनो हंसपीठापरनाम्नोऽन्तरात्मन उपरि सर्वतन्त्रप्रसिद्धः परब्रह्मस्वरूपः सर्वात्मा सर्वेषां हृदि जीवात्मस्वरूपः सन्नपि परमात्मस्वरूपमविमुञ्चन् परमानन्दरूपं तद्विलक्षणं शिवशक्तिसामरस्यानन्दरसं च प्राप्तः परमशिवः श्रीगुरुरूपेणामृतवदानन्दविधायकं वाक्यं साधकानां पुरुषार्थ-लाभायोच्चरन् तत्त्वमसीत्यादिश्रुतिप्रसिद्धं जीवात्मपरमात्मनोरभेदज्ञानमुपदिशति ।

अत्रेदमवधेयम्—निरुक्तः परशिव एव श्रीगुरुरूपो दीक्षागुरुरूपेण धराया-मवतीर्यामृतमयतत्तदुपास्यदेवतातत्तन्मन्त्रदीक्षया साधकानां परमपुरुषार्थं निर्वर्तयतीति । एतच्च—

मनुष्यचर्मणा नद्धः साक्षात् परशिवः स्वयम् ।
स्वशिष्यानुग्रहार्थाय गूढं पर्य्यटति क्षितौ ॥

इत्यादि कुलार्णवोक्तैरन्यैश्च प्रमाणैः प्रपञ्चितम् ।

परमशिवस्याधस्तात् सर्वेषामीश्वरो हंसः पुंप्रकृत्यात्मकोऽन्तरात्मा समास्ते। पुंप्रकृत्यात्मकान्तरात्मनो हंसत्वं तु—

हङ्कारो बिन्दुरित्युक्तो विसर्गः स इति स्मृतः ।
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृतः ॥
पुंप्रकृत्यात्मको हंसस्तदात्मकमिदं जगत् ।

इति प्रपञ्चसारवचनेन 'हं' इति पदेन पुरुष 'स' इति पदेन च प्रकृतिर्लभ्यते, ततश्च 'हंस' इति पदेन पुंप्रकृत्यात्मकोऽन्तरात्मेत्यवगम्यते ।

अत्र परशिवस्वरूपश्रीगुरुध्यानविषये शाक्तानन्दतरङ्गिण्यामाज्ञाचक्रमभिधाय—

तदूर्ध्वे तु महेशानि पद्ममूर्ध्वमुखं सदा ।
तस्योपरि महादेवि ध्यायेत् सदाशिवं प्रभुम् ॥

इति वचनमभिधायोर्ध्वमुखमित्यधोमुखसहस्रदलपद्मान्तर्गतोर्ध्वमुखद्वादश-दलपद्मोपरि सदाशिवं ध्यायेदित्युक्तम् । पादुकापञ्चकस्तोत्रेऽपि—

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
तस्य कन्दलितकर्णिकापुटे क्लृप्तरेखमकथादिरेखया ॥

इत्यादिना चाधोमुखसहस्रदलकमलस्याधस्तादूर्ध्वमुखद्वादशदलकमलकर्णि-कान्तरकथादित्रिकोणे श्रीगुरुरूपस्य परशिवस्य स्थितिमाह । परन्तु शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासेऽन्यत्र—

सहस्रारं महापद्मं नादबिन्दुत्रयान्वितम् ।
अकथादित्रिरेखासु हलक्षत्रयकोणके ॥
तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम् ।
वामावर्तेन विलिखेद् अकथादित्रिकोणकम् ॥

सहस्रारान्तरे शून्ये दिव्यतोरणशोभिते ।

चन्द्रमण्डलमध्ये तु हंसवर्णद्वयोपरि ॥
शुद्धस्फटिकसङ्काशं शुद्धक्षौमविराजितम् ॥

इति महाकालीतन्त्रप्रथमपटलवचनेन च सहस्रारपद्म एव परमशिवस्य स्थितिरभिहिता। एवं चोभयकल्पे विहिते श्रीनाथस्याज्ञया तयोरेकतरमवधार्याऽनुष्ठातव्यम्। अत एवैकादशोल्लासे कुलार्णवीये—

पारम्पर्य्यागमाम्नायं मन्त्राचारादिकं प्रिये।
सर्वं गुरुमुखाल्लब्धं सफलं स्यान्न चान्यथा॥

इत्युक्तम्।

### एतत्पद्मकर्णिकायां सर्वेषां देवानामवस्थितिः

सहस्रदलकमलकर्णिकायां शैवाः शिवस्थितिम्, वैष्णवा मानवा भगवतः परमपुरुषस्य विष्णोः स्थानम्, हरिहरोभयोपासकाः श्रीहरिहरपदम्, श्रीपराशक्तिभक्तिरसास्वादनासक्ताः शाक्ताः श्रीपरशक्तिस्थानम्, योगीन्द्राश्चामलं प्रकृतिपुरुषस्थानमालपन्ति। तदुक्तं श्रीतत्त्वचिन्तामणिकारैः परमहंसैः पूर्णानन्दयोगिभिः—

शिवस्थानं शैवाः परमपुरुषं वैष्णवगणाः
लपन्तीति प्रायो हरिहरपदं केचिदपरे।
पदं देव्या देवीचरणयुगलानन्दरसिका
मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम्॥ इति।

### सहस्रदलकमलज्ञानफलम्

अस्मिन् सहस्रदलकमले स्वेष्टदेवताऽवस्थितिं विदित्वा स्वाभीष्टदेवतादत्तचित्तः साधकः संसारेऽस्मिन् शुभाशुभसकलकर्मक्षयाद् भोगहेतुभूतकर्मान्तराऽनुदयाच्च पुनर्जन्मपरिग्रहं न करोति, तथाऽस्य साधकस्य स्वाभीष्टकार्याणि सम्पादयितुमनिष्टानि कर्माणि च परिहर्तुं समग्रा शक्तिर्जागर्ति। खेचरतासिद्धिरपि स्वयमेव वृणुते साधकमिमं वाणी चास्य मुखेऽतिविमला विलसति।

### एतत्पद्मकर्णिकान्तस्त्रिकोणे चन्द्रकलायाः स्थितिः

निरुक्तसहस्रदलकमलकर्णिकान्तर्वर्त्तित्रिकोणे शशिनः षोडशभागैकभागरूपा प्रातःकालीनसूर्यसदृशारुणवर्णा सूक्ष्ममृणालसूत्रस्य शतभागैकभागरूपा परशक्तिस्वरूपा क्षयोदयरहिता सततप्रकाशवत्यधोवक्त्रा प्रचुरामृतवर्षिण्यमानाम्नी कला विलसति। तस्याः स्वरूपं तु—

अमा षोडशभागेन देवि प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥

इति निगद्यते।

### तच्चन्द्रकलान्तर्निर्वाणकलायाः स्थितिः

तस्या अमाकलाया अन्तर्गता परात्परतरा केशाग्रसहस्रभागैकभागरूपातिसूक्ष्मा प्राणिनां चैतन्यस्वरूपा ब्रह्मानन्ददायिन्यर्धचन्द्रवत्कुटिलाकारा द्वादशसूर्यसमप्रकाशा निर्वाणकला विलसति। अमाकला-निर्वाणकलयोः स्वरूपं कङ्कालमालिनीतन्त्रेण निरूपितमस्ति। यथा—

अत्र नित्योदिता बुद्धिक्षयहीना अमाकला।
तन्मध्ये कुटिला निर्वाणाख्या सप्तदशी कला॥ इति।

### तदन्तर्बिन्दुस्वरूपाया निर्वाणशक्तेरवस्थितिः

एतस्या निर्वाणकलाया मध्यदेशे निखिलप्रपञ्चसृष्टेरादौ वर्तमाना, अत एवाऽपूर्वाऽनन्तादित्यप्रभा त्रिभुवनजननी सूक्ष्मतमाऽत्यन्तगुह्या सामरस्यामृतजनितपरमामृतधाराधरा प्राणिमात्रस्य जीवात्मस्वरूपा योगिनां हृदये तत्त्वज्ञानसम्पादिका परंबिन्दुस्वरूपा निर्वाणशक्तिर्विलसति।

अत्र निर्वाणकलान्तर्निर्वाणशक्तिस्थितेरभिधानेऽपि नादोपरि तस्याः स्थितिरित्यवधेयम्। यदुक्तं कङ्कालमालिनीतन्त्रे द्वितीयपटले—

निर्वाणाख्यान्तरगता वह्निरूपा निबोधिका।
नादोऽव्यक्तस्तदुपरि कोटयादित्यसमप्रभा॥
निर्वाणशक्तिः परमा सर्वेषां योनिरूपिणी॥ इति।

### निर्वाणशक्तेरन्तः परब्रह्मस्थानम्

तस्या निर्वाणशक्त्या अभ्यन्तरस्य शून्ये नित्यस्वरूपं योगिभिः स्वानुष्ठितयोगमात्रवेद्यं नित्यानन्दाख्यं तत्त्वज्ञानप्रकाशकं निर्मलं परब्रह्मस्थानं वर्तते।

### संप्रदायभेदेनास्यानेकाः संज्ञाः क्रियन्ते

तथाहि—वेदान्तिनो ब्रह्माभिधानम्, वैष्णवा वैष्णवं पदम्, योगिनो हंसाख्यं हंसनामकम्, अन्ये तु किमप्यनिर्वचनीयमात्मसाक्षात्कारस्थानं तन्मोक्षरूपमालपन्ति।

तथा हि श्रीतत्त्वचिन्तामणौ श्रीभगवत्पूर्णानन्दपादाः—

तस्या मध्यान्तराले शिवपदममलं शाश्वतं योगगम्यं
नित्यानन्दाभिधानं सकलसुखमयं शुद्धबोधप्रकाशम् ।
केचिद् ब्रह्माभिधानं पदमिति सुधियो वैष्णवं तल्लपन्ति
केचिद्धंसाख्यमेतत् किमपि सुकृतिनो मोक्षवर्त्मप्रबोधम् ॥

एवञ्च सम्प्रदायभेदेन संज्ञाभेदेऽपि शैवशाक्तवैष्णवादीनां सर्वेषामेवोपासकानां चरमलक्ष्यभूतं पदमिदमित्यवधेयम् ।

अनेन षट्चक्रक्रमवर्णनेन—

सहस्रारम्बुजा रूढा सुधासाराभिवर्षिणी ।
तडिल्लतासमरुचिः षट्चक्रोपरि संस्थिता ॥
गुरुमूर्तिः श्रीमाता प्रसीदतु ।



# अजपारहस्यम्[1]

श्रीगोविन्दगोपालमुखोपाध्यायः, संस्कृतविभागाध्यक्षः, यादवपुरविश्वविद्यालयस्य ।

मान्यमान्या कुलपतिमहोदयाः ! समवेता विविधदिग्भागसमागता आगमप्रवीणाः सज्जनाश्च !

निरवग्रहोऽयमनुग्रहो भवतां यदिदानीं वाराणसेयसंस्कृतविश्वविद्यालयायोजिते सुमहत्यस्मिन् तन्त्रसम्मेलने विसर्जनाधिवेशने मादृशेष्वर्वाचीनेष्वाध्यक्ष्यं समर्पितम्। मन्यामहे यत् परमपूज्यपादानां मदीयाचार्यवर्याणां महामहोपाध्यायश्रीगोपीनाथकविराजमहाभागानामनुग्रहशक्तिर्भवतामाग्रहशक्तिश्चैवंविधाघटनघटने सक्रिये । स्नेहस्य निम्ना गतिरिति कृत्वा भवद्भिर्न्यस्तोऽयं भारः स्वाज्ञानज्ञानसत्त्वेऽपि सादरं स्वशिरसि गृहीतः ।

विसर्जनदिवसे तावन्मुख्यतोऽस्माभिरागमशास्त्राणाममरपदवीप्रापकत्वं स्मरणीयम्। एतदर्थमेवागमतन्त्रशास्त्रादीनां पुनरुज्जीवनमनुशीलनं चापेक्ष्यते। आशास्महे सम्मेलनमुपलक्ष्य समवेता वयं नवीनोत्साहेन तत्तदागमसूक्तिमुक्ताचयने तथा स्वात्मानं नियोक्ष्यामहे यथा न केवलमस्माकमभ्युदयनिःश्रेयससिद्धिः; अपि तु सनातनपुण्यक्षेत्रस्यास्य भारतवर्षस्य विलुप्तमहिमोद्धारेण स्वगौरवे पुनः प्रतिष्ठापनं च सम्पद्येव। "अमृतत्वस्य तु नाशाऽस्ति वित्तेन। येनाहं नामृता स्यां किमहं तेन कुर्याम्" इत्यादिकं हि भारतवर्षस्य सनातनी मर्मवाणी। तदमृतत्वलाभस्यैकं मुख्यं साधनं सर्वगुह्यतममजपेतिसंज्ञकम्। तदधिकृत्यैव संक्षेपतो गुर्वाचार्यप्रदर्शितदिशा किञ्चिदालोचयितुं व्यवसिता वयमद्य विसर्जनदिवसीयेऽधिवेशने।

सुप्राचीनकालादात्मानुसन्धानस्याद्वितीया राजपद्धतिर्जपकर्म। उपनिषत्सु यथात्मतत्त्वस्य विविधवाचोयुक्त्या समुपदेशस्तथा जपविधिश्च दृश्यते। यथा बृहदारण्यके

---

१. वाराणसेयसंस्कृतविश्वविद्यालयेनायोजितस्याखिलभारतीयतन्त्रसम्मेलनस्यावसरे (११-१-६५) दिनाङ्के परिचर्यागोष्ठ्यध्यक्षपदेन प्रदत्तमिदं भाषणं विदुषा लेखकेन-- सम्पादकः ।

सुप्रसिद्धस्य "असतो मा सद् गमय, तमसो मा ज्योतिर्गमय, मृत्योर्मा अमृतं गमय" इति मन्त्रस्याभ्यारोहजपकर्मत्वेन विधानं श्रूयते। एवं योगशास्त्रेऽपि तपःस्वाध्यायादि-रूपक्रियायोगस्य यमनियमाद्यात्मकस्याष्टाङ्गयोगस्य विधानेऽपि मुख्यत ईश्वरप्रणि-धानार्थं प्रणवजप एव विधीयते। मन्त्र-यन्त्र-तन्त्रात्मकानामागमानां त्वयमेव मुख्यो विषयः। वैष्णवशास्त्रादिष्वपि हरिनामजपस्य माहात्म्यं भूरिशो गीयते। एवञ्च ज्ञानिनां योगिनां भक्तानाञ्च यथाक्रमं ब्रह्मावाप्ति-परमात्मोपलब्धि-भगवत्साक्षात्कृतिरूप-साध्यभेदेऽपि साधनविषये त्वभेद एव। एकमेव जपरूपं साधनमाश्रित्य सर्व एवाध्वनः पारमाप्नुवन्ति। न केवलमस्मद्देशीयानामध्यात्मतत्त्वबुभुत्सूनामेव जपकर्मणि पक्षपातः; अपि तु विभिन्नदेशीयानां साधकानामपि परममालम्बनमेतज्जपकर्म। सार्वभौम-स्यास्य साधनस्य परमरहस्यानुसन्धानं यथाशास्त्रं सर्वैरेव कर्तव्यम्।

मन्त्ररूपाया वाच आवर्तनमेव जपः। परा-पश्यन्ती-मध्यमा-वैखरीरूपेण वाचश्चातुर्विध्यं सुप्रसिद्धमेव। वैखरीरूपां वाचमाश्रित्यैव प्रथमतो जपक्रिया प्रवर्तते। वैखर्याः पुनः कण्ठताल्वाद्यभिघातनिष्पन्नत्वात् कृतकत्वं विनाशित्वं च। अतो यावद् वैखर्या न मध्यमायां परिणतिस्तावन्नित्याया वाच आभासोऽपि न समुपलभ्यते। मध्यमा हि वाक् सेतुरूपा, याऽनित्यां वैखरीरूपां वाचं नित्यायां पश्यन्त्यां संयोजयति। "अन्तः संजल्परूपा हि सूक्ष्मा वागनपायिनी" इत्यादिरूपेण पश्यन्त्या वाचः उपवर्णनं शास्त्रेषु तत्र तत्र दृश्यते। अपायस्वभावायाः स्थूलाया वैखर्या वाचो यदाऽनपायस्वरूपायां सूक्ष्मायां वाचि प्रवेशो भवति, तदा जपक्रियाया अजपेति संज्ञा भवति। अस्यां भूमौ स्वकृतिनिष्पाद्याया जपक्रियाया विरामो भवति, प्रयासनिरपेक्षमेव जपकर्म स्वतः प्रचलति। रहस्यं त्वस्यैतदेव यत् प्राणप्रवाहपतिता वाक् तदा स्थौल्यं जडत्वं च परिहरति। आगमिकास्त्वेतामेवावस्थां नादत्वेन वर्णयन्ति। वर्णात्मिकाया वाच एवं ध्वन्यात्मिका परिणतिः प्रबुद्धकुण्डलिनीशक्तिमाहात्म्यादेव भवति। तदा साधकस्याय-मनुभवः समुदेति यन्न तेन जपः क्रियते, परन्तु जपः स्वयं समुद्भवति। स्वतः समुद्भूतस्यैवंविधस्याखण्डनादप्रवाहरूपस्य जपकर्मणः संज्ञा अजपेति।

तस्य तु नादप्रवाहस्याकृतिर्हंसात्मिकेति योगिभिर्गीयते। अत एव मन्त्र-विज्ञानरहस्यविदां परमपूज्यर्षिवर्याणां श्रीमत्प्रत्यगात्मानन्दसरस्वतीनामुक्तिः—

विश्वेऽस्मिन् सर्वतो नित्यं हंसो हंसो जपक्रिया।
सर्वस्य प्राणमूलत्वात् प्रोतत्वात् प्राणकर्मणा॥

जागरेऽजागरे वाऽपि कृतकोऽकृतकोऽपि वा।
हंसो जागर्त्यविच्छेदमन्तर्बहिर्विराज्यणौ ॥

प्राणस्य यथा सर्वजगदात्मता, एवमेव हंसरूपजपक्रियाया अपि विश्वात्मकता। एषा हि हंसात्मिका जपक्रियाऽस्माकमगोचरीभूतापि नित्यं प्रचलति, साधनपरिनिष्ठितायां विशुद्धायां बुद्धावेव तस्या उपलब्धिर्जायते। अत एवाजपाया द्वैविध्यम्—जागराजागरभेदेन। यदा सचेतनावस्थमजपास्पन्दनमुपलब्धुं समर्थास्तदाऽस्या जागररूपः। तथा चास्माकमचेतनावस्थायामनुपलब्धाया अस्या अजागररूपः। अस्मत्सम्बन्धितयैवास्या द्वैविध्यं स्वरूपतस्तु सदा जाग्रद्रूपत्वान्नास्त्यस्या अवस्थाभेदः। यथा व्यष्टिभूतेषु तत्तज्जीवेष्वेषाऽजपाक्रिया, तथा समष्टिरूपेऽस्मिन् विश्वेऽपि वितता हि तत्क्रिया। अत एव श्रूयते हंसस्य सर्वव्यापित्वं शुक्लयजुर्वेदसंहितायां हंसवत्यामृचि—

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसद्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजाऋतजाऽद्रिजा ऋतं बृहत् ॥

अजपाशब्दस्य निर्वचनं तु पूज्यैः स्वामिपादैरेवमुपदर्शितमस्मिन् सूत्रे—

अजं पातीति चाद्व्याप्तेः।

व्याख्यातं तु स्वविरचिताभिरेव कारिकाभिः—

अनादिभूतभव्यानां प्रवाहपरिपालनात्।
मधुकैटभविघाताच्च रक्षणात् परमेष्ठिनः ॥
अजप इति नाम्ना वै ख्यातो जपो निरन्तरः।
आदिति सर्वतो व्याप्तिः सीमास्पन्दनवृत्तिता ॥
यत्किञ्चित् स्पन्दते तद्वा अजपाजपतत्परम्।

अत्र 'अज'शब्देनानादिसृष्टिप्रवाह एव सूच्यते, तस्य प्रवाहस्य पालनं येन भवति, तथाविध एव जपोऽजप इत्युच्यते। अन्ते पुनराकारसंयोजनस्यायमेव सङ्केतो यदस्य सृष्टिप्रवाहपरिपालनरूपस्य कर्मणो मर्यादाऽभिविधश्च यथायथं प्राह्या। यदेव परिस्पन्दतेऽस्मिन् विश्वे तदेव अजपाजपतत्परं बोध्यम्। स्पन्दनात्मकं निखिलं विश्वं व्याप्यैवास्याधिकारः। सीमा त्वेवं स्पन्दनस्य सुनिर्दिष्टा आकारसंयोजनेन।

पुनश्चाजपाया द्वैविध्यं चिन्त्यम्—सङ्कर-शङ्करभेदेन। तत्र सङ्कराजपा मालिन्यस्पृष्टत्वाद् न बिन्दुमुखीना भवति, परन्तु बहिर्मुखीनैव तस्य धारा। सङ्करशब्दे दन्त्यमुख्यत्वमिदमेव सूचयति यदत्र खण्डत्वापादनमेव मुख्यतः क्रियते, अत एवाखण्डनादप्रवाहस्य नात्रावसरः। अतः सङ्कराजपाहानं शङ्कराजपोपादानं च कर्तव्यम्। तथा चोक्तम्—

> अपयोगो जपस्य स्यादजपां सङ्करां श्रितः।
> जपस्योपयोगस्त्वजपां हि शङ्करां गतः॥

रजस्तमोमयश्चेत् प्राणस्पन्दस्तदाऽजपायाः सङ्कररूपापत्तिः, सत्त्वप्रधानत्वे पुनः शङ्कराकारपरिग्रहः। एवं सङ्कराजपा सर्वप्राणिषु 'हंसो हंसः' इत्याकारेण प्रवहति, अत एव जीवस्यापीयं संज्ञा हंस इति। शङ्कराजपायां त्वाकृतिविपर्यासे 'सोऽहम्' इति रूपं परिस्फुरति। विसर्गस्य हकाराभिमुखीनत्वे यदिदमोत्वापादनं तदेव लयसूचकम्। इत्थं मरणप्रवाहपतितस्य प्राणस्पन्दस्य समुद्धरणममृतत्वापादनं चाजपासाधनस्य परमं रहस्यमिति शम्॥



# जपरहस्यम्

## अजपाविज्ञानस्य स्वरूपविमर्शः

श्रीकृष्णेश्वरझा, मुजफ्फरपुरस्थरा० ध० सं० महाविद्यालयप्राचार्यः ।

दुर्गे शिवेऽभये माये नारायणि सनातनि ।
जये मे मङ्गलं देहि नमस्ते सर्वमङ्गले ॥

जगति यावन्तः शाक्त-शैव-वैष्णव-प्रभृतयः सहस्रशः सम्प्रदायाः सन्ति, तेषु सर्वेषु पश्यामो वयं जपानुष्ठानस्य महीयो महत्त्वम् । जपो हि न केवलं धर्मार्थ-काममोक्षाणां चतुर्णामेव पुरुषार्थानाम्; अपि तु परमात्मनोऽनिर्वचनीयस्य प्रकाशस्य, स्वेष्टदेवतायाश्चिराभिलषितस्य साक्षात्कारस्य, बहुविधानुषङ्गिकैहिकामुष्मिक-फलानाञ्च साधनं विद्यते । तथा चोक्तं मेरुतन्त्रे—

कामक्रोधादिभिर्व्याप्ते जनैस्त्रीभिर्विनिर्जिते ।
क्व शिष्यः क्व गुरुर्मन्त्रः क्व तपः क्व च सिद्धयः ॥
जप एव कलौ श्रेयान् शालग्रामार्चनं तथा । इति ।

वैष्वक्सेन्यां च—

साधनं पुरुषार्थानां सन्ति यागाः सहस्रशः ।
विशेषतः कलियुगे जपयागः प्रशस्यते ॥ इति ।

वेदेषु पुराणेषु धर्मशास्त्रेषु तन्त्रशास्त्रेषु च जपानुष्ठानस्य भूयसा प्रपञ्चेन कृतं विधानमुपलभ्यते । यथाविधि विहितानि कर्माणि हि फलप्रदानि भवन्ति, नियमव्यतिरेकेण विहितानि न्यूनातिरिक्तानि वा कृतानि कर्माणि तु न फलप्रदानि भवन्ति । तदुक्तम्—

तद्विधानकृतं कर्म जपहोमार्चनादिकम् ।
देवताप्रीतिदं भूयाद् भुक्तिमुक्तिफलप्रदम् ॥ इति कुलार्णवे ।

'विधिवज्जपमारभेत्' इति यामले च।

जपो नाम विधानेन मन्त्रवर्णोच्चारणमिति केचित्। मन्त्ररहस्यार्थानुस्मरणपूर्वकं गुरुदेवतामन्त्रवर्णात्मनामैक्यानुभावनं जप इति परे। भास्कररायमहाभागास्तु सौभाग्यभास्करे—अवस्थापञ्चकशून्यषट्कविषुवसप्तकचक्रनवकविभावनादिरूपं चिह्नं जपस्य लक्षणम्। वरिवस्यारहस्ये तु—'एवमवस्थाशून्यविषुवन्ति चक्राणि पञ्च षट् सप्त। नव च मनोरथांश्च स्मरतोऽर्णोच्चारणं तु जपः॥' इत्यस्य जपलक्षणपद्यस्य व्याख्यायाम्—मन्त्रस्यार्थाननुसन्दधानस्य विद्याया अक्षराणामष्टपञ्चाशतो मध्ये आद्यकूटद्वितयबिन्द्वादिनवकद्वयप्रहाणेनावशिष्टानां चत्वारिंशतोऽक्षराणामुच्चारणं जपो जपपदवाच्यमित्यर्थ इत्याहुः। माननीयाः श्रीकविराजमहोदयास्तान्त्रिकवाङ्मये—विधिपूर्वकमनेकविधमन्त्रवर्णोच्चारणं बाह्यस्य, मध्यमाभूमौ नादेन सह मन्त्रस्य स्वभावतो ध्वननम्, परमभावमभिलक्ष्य भूयो भूयो भावनावान्तरस्य जपस्य लक्षणमुपदिष्टवन्तः। उक्तञ्च—

> सन्नियम्येन्द्रियग्रामं प्रोच्चरेन्नादमान्तरम्।
> एष एव जपः प्रोक्तो न तु बाह्यजपो जपः॥ इति।

स च जपो बाह्याभ्यन्तरभेदेन द्विविधः। बाह्यो वैखरीनादस्य विलासः। आभ्यन्तरश्च मध्यमानादस्य विलासः। तत्र यद्यपि बाह्यस्यैव जपस्य साधकैः प्रथममनुष्ठीयमानत्वेन तस्यैव च मध्यमाभूमिप्रवेशप्रयोजकत्वेन पूर्वं विचारः समुचित आसीत्, तथापि बाह्यस्य बहुविधबाह्यसाधनसापेक्षतया महाकायत्वेन बहिरङ्गत्वेन च, आभ्यन्तरस्य चान्तरमात्रसाधनसापेक्षतया लघुकायत्वेनान्तरङ्गत्वेन च परमाभिलषितस्यात्मप्रकाशस्य साक्षात्कारणत्वेन चास्यैव प्रथमं विचारमाचरामः।

असावाभ्यन्तरो जपः सूक्ष्मतमस्वरूपेण कण्ठजपस्वरूपाद् वैखरीजपादुद्भवन् मध्यमाभूमौ व्यक्तीभवति। तत्र बाह्यजपकालिकध्यातृध्येयध्यानात्मकत्रिपुटज्ञाने निरस्ते सति शनैः शनैरवस्थान्तरस्योदयेन कण्ठावरोधे जाते नादेन सहैव विना प्रयत्नं मन्त्रवर्णानां भवति ध्वननम्। तादृशनादरूपेण परिणताया दिव्यविग्रहाया अनेककोटिब्रह्माण्डजनयित्र्या आदिशक्तेः परितः परिस्फुरन् प्रकाशो गुरुवरानुपमानुकम्पातोऽन्तर्मुखया चित्तवृत्त्या साक्षात्कृतो भवति। अस्यैव च प्रकाशस्य साक्षात्काराय

तान्त्रिका विद्वांसस्तन्त्रशास्त्रोक्तं मार्गं योगिनो योगशास्त्रोपदिष्टं मार्गमनवरतोपनिषद्वाक्यार्थानुशीलिनो वेदान्तिनश्चोपनिषत्प्रदिष्टं मार्गमाश्रयन्ति, ध्यायन्ति च निरन्तरं निरञ्जनं परमं शब्दब्रह्म। तच्च पराख्यनादस्वरूपम्। परा च वर्णाद्यवयवविशेषरहिता स्पन्दशून्या चेतना जगदुपादानकारणीभूता मूलाधारचक्रे कुण्डलिनीरूपेण वर्तमाना प्रोद्भासते। अस्या एव च पराया विवर्तस्वरूपा पश्यन्ती सस्पन्दा चेतना नाभिप्रदेशे स्वाधिष्ठानचक्रे विलसन्ती वर्तते। अस्या अपि विवर्तभूता स्पन्दसहिता चिदचिद्भागमिलिता हृदयप्रदेशेऽनाहतचक्रे द्योतमाना विद्यते। मध्यमायाश्च विवर्तरूपा स्पन्देन युता श्रवणेन्द्रियग्रहणयोग्या प्राणिमात्रव्यवहारप्रयोजिका कण्ठप्रदेशे विशुद्धाख्ये चक्रे विलसन्ती वैखरी नरीनृत्यते, ततश्चैतस्मादचिन्त्यवैभवाच्छब्दब्रह्मणः सकाशाद्विश्वमुद्भूतं शब्दे एव च विधृतं तिष्ठतीति शास्त्रसिद्धान्तः। तदुवाच शब्दतत्त्वविदांवरो भर्तृहरिः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति।

तन्त्रशास्त्ररहस्यज्ञानां मतेन जपकाले जप्यमानमन्त्रावयवेषु लक्षणघटकस्यावस्थापञ्चकस्य शून्यषट्कस्य विषुवसप्तकस्य च चिन्तनमत्यावश्यकम्। तत्र ज्ञानेन्द्रियकर्मेन्द्रियद्वारा स्वस्वविषयग्रहणव्यवहारो जागरावस्था, इयञ्च प्रकाशरूपत्वेन विभावनीया। मनोबुद्ध्यहङ्कारचित्तरूपैश्चतुर्विधैरन्तःकरणैर्व्यवहारः स्वप्नावस्था, सा गलेऽनाहतचक्रे चिन्तनीया साधकैः। आत्मसुखाज्ञानविषयिकाया अविद्यावृत्तेर्लयेन लीनप्रायस्य जीवस्य ज्ञानं सुषुप्त्यवस्था। सा ललाटे तृतीयबिन्दौ (हृल्लेखाया ऊर्ध्वबिन्दाविति यावत्) चिन्तनीया। चिदभिव्यञ्जकनादस्य वेदनं तुर्य्यावस्था। अस्याश्च प्रकाशोऽर्धचन्द्ररोधिनीनादात्मकेषु मन्त्रावयवेषु चिन्तनीयः। आनन्दैकघनस्वरूपा मनुष्यवागगोचरा तुर्य्यातीतावस्था, सा च नादान्तशक्तिव्यापिनीसमनोन्मनासु विभावनीया। अत ऊर्ध्वं काऽपि नास्त्यवस्थेति ध्येयम्। शून्यषट्केषु पञ्चानां शून्यानां मयूरपिच्छाग्रगतचन्द्राकारत्वोक्तेः पञ्चानां साकारत्वाभिधानेनोन्मन्यां स्थितस्य नीरूपस्य षष्ठस्य महाशून्यस्य निराकारत्वेनैव तत्र चिन्तनीयत्वमभिप्रेतम्। अत्रत्यः परमरहस्यमयो विचारः सविस्तरं वरिवस्यारहस्ये प्रकटितः श्रीमद्भिर्भास्कररायैः। अत्रेदमपि रहस्यमवगतव्यं यत् प्रणवस्य बीजमन्त्रस्य वा प्रथमे त्रयोऽवयवा जाग्रत्स्वप्नसुषुप्तिद्योतकाः। तदनन्तरस्था यावन्तः

सूक्ष्मतराः सूक्ष्मतमा वाऽवयवास्ते सर्वे एव तुर्य्यावस्थायास्तुर्य्यातीतावस्थाया वान्तर्गताः सन्तीति। अवयवानाञ्च तेषां नामानि बिन्द्वर्धचन्द्ररोधिनीनादनादान्तशक्तिव्यापिनीसमनोन्मना इति ज्ञातव्यानि। तदुक्तम्—"मध्ये फालं बिन्दुर्दीप इवाभाति वर्तुलाकारः। तदुपरिगतोऽर्धचन्द्रोऽन्वर्थः कान्त्या तथाऽऽकृत्या॥ अथ रोधिनी तदूर्ध्वं त्रिकोणरूपा च चन्द्रिकाकान्तिः। नादान्तस्तडिदाभः सव्यस्थितबिन्दुयुक्तलाङ्गलवत्॥ तिर्य्यग्बिन्दुद्वितये वामोद्गच्छत्सिराऽऽकृतिः शक्तिः। बिन्दूद्गच्छत्त्र्यस्राकारधराव्यापिका प्रोक्ता॥ ऊर्ध्वाधो बिन्दुद्वयसंयुतरेखाऽऽकृतिः समना। सैवोर्ध्वबिन्दुहीनोन्मना तदूर्ध्वं महाबिन्दुः॥" इति वरिवस्यारहस्ये।

एवं विषुवानामपि चिन्तनमावश्यकम्। तेषु प्राणात्ममानसानां संयोगः प्राणविषुवम्। प्राथमिके कूटनादे बीजचतुष्कस्याधारोत्थितेन नादेन सह साधकात्मनश्चैकेन नादमयत्वविभावनं मन्त्रविषुवम्। मूलाधारादिचक्रषट्कस्याध ऊर्ध्वञ्चैकैको ग्रन्थिर्विद्यते, तेषां भेदनमार्गेणैव सुषुम्णानाडी मूलाधाराद् ब्रह्मरन्ध्रं व्याप्नोति। तेनैव पथा नादस्य मन्त्रवर्णानाञ्च नाडीसंयुक्तत्वेन भावनयोच्चारणं नाडीविषुवम्। तृतीयकूटस्थरेफादिषु सप्तसु स्थानेष्वाधारादारब्धस्य नादस्याभिघातादुत्तरोत्तरक्षणीयकांस्यतालध्वनिवत्सूक्ष्मतरा दशा सम्पद्यते। तत्र तादृशस्य सूक्ष्मतरस्य नादस्य शक्तौ लयचिन्तनं प्रशान्तविषुवम्। शक्तिस्थानादूर्ध्वं पुनरुज्जीवितस्य नादस्य सूक्ष्मतमस्य व्यापिकामुल्लङ्घ्य समनायां लयचिन्तनं शक्तिविषुवम्। पुनः समनोर्ध्वं समुज्जीवितस्यातिशयसूक्ष्मतमस्य नादस्योन्मन्यां लयः कालविषुवम्। तथा सप्तदशोत्तराष्टशतोत्तरायुतत्रुटिपर्य्यन्तं विद्याऽवयवस्थानसंलग्नतापूर्वकं नादोच्चारणे कृते सति तत्त्वस्य स्वसंविदभेदस्य बोधो भवति। तदीदृशमिदमुच्चारणं तत्त्वविषुवम्।

एतदत्र चिन्तनीयम्—शक्तिमध्यस्थितनादस्य सत्त्वे तत्त्वोदयः कथं भवतीति। अत्र शक्तिविषुवं यावदेव कालेन नादस्य सम्बन्धस्तिष्ठति, समनापर्य्यन्तमेव कालस्य सीमितत्वात्, नादस्य तु कालस्य सीमानमतिक्रम्यापि विद्यमानत्वात्, कालातीतोन्मनां यावन्नादचिन्तनस्य कालविषुवे सर्वसम्मतत्वात्। किञ्च, कालविषुवमेव परमं तत्त्वमिति न भ्रमितव्यम्; तदूर्ध्वमपि तत्त्वविषुवस्याङ्गीकारात्, तत्त्वाभिव्यञ्जकस्य नादस्य तत्रापि सत्त्वात्। यावत्तत्त्वाभिव्यञ्जको नादः सर्वथा न विनश्यति; तावत्तत्त्वावगतिर्न भवति, किन्तून्मनाया ऊर्ध्वमुन्मनाभेदेन सहैव नादे विलयमुपगते स्वभावत एव तत्त्वोदयो भवति। अतः सप्तसु विषुवेषु तत्त्वविषुवमेव

चैतन्याभिव्यक्तेः परमं पदमिति तान्त्रिकवाङ्मये महामहोपाध्यायाः श्रीकविराजमहाशयाः स्पष्टमाख्यातवन्तः। इदमपि च ते तत्र प्रोक्तवन्तो यदिदमेव पञ्चानामवस्थानां षण्णां शून्यानां सप्तानां विषुवानां च तरङ्गैरस्पृष्टम्, विश्वस्य विश्रामस्थानममन्दानन्दसन्दोहस्वरूपं परमं पदम्। एतदेव च कोटिभास्वत्प्रभाभासुरं परमशिवस्वरूपम्। तान्त्रिकाणां योगिनां स्वानुभवसिद्धमिदं यदुन्मनापर्यन्तं जपनीयमन्त्रावयवानां सप्तदशोत्तराष्टशतोत्तरसहस्रवारमुच्चारणेन नादस्य सर्वथा विलयस्तत्त्वज्ञानस्य च समुदयः सम्भवतीति।

किञ्च—

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥
नार्थज्ञानविहीनं शब्दस्योच्चारणं फलति।
भस्मनि वह्निविहीने न प्रक्षिप्तं हविर्ज्वलति॥

इत्यादिवचनेनार्थज्ञानरहितमन्त्रोच्चारणस्य निन्दया पापानुमानात् "पुरुषार्थानिच्छद्भिः पुरुषैरर्थाः परिज्ञेयाः। अर्थानादरभाजां नैवार्थः प्रत्युताऽनर्थः॥" इति वचनेन चानर्थस्यैवोत्पत्तेः श्रवणाच्च मन्त्रार्थस्मरणमपि जपकालेऽत्यावश्यकम्। ते चार्था अनेकविधाः। तथाहि—"वाच्यवाचकभावेन सर्वे मन्त्राः प्रतिष्ठिताः। यद्देवताया यो मन्त्रः सा वाच्या स च वाचकः॥" इति वचनेन यस्या देवताया यो मन्त्रोऽभिहितः सा देवतैव तस्य मन्त्रस्य वाच्योऽर्थः, स च मन्त्रस्तस्या देवताया वाचकः। वरिवस्यारहस्ये तु सर्वतन्त्रस्वतन्त्रैर्भास्करराचार्यैर्बहवो मन्त्रार्था अभिहिताः। येषु भावार्थसम्प्रदायार्थनिगर्भार्थकौलिकार्थरहस्यार्थमहातत्त्वार्थाश्च प्राधान्यं भजन्ते।

तत्र मन्त्रावयवभूतानामक्षराणामर्थो भावार्थः। सर्वकारणकारणीभूतः परात्परः परमेश्वरः सर्वेषां मन्त्राणां मन्त्रेश्वररूपतयाऽऽदिगुरुर्विद्यते। तस्य मुखाज्जपनीयमन्त्रस्योत्पत्तेरवतरणक्रमस्य च ज्ञानमेव सम्प्रदायार्थः। परमेश्वरगुरुजापकात्मनां चैक्यानुसन्धानं निगर्भार्थः। चक्रदेवताविद्यानिष्कलनिरवयवपरमेश्वराभिन्नगुरुणात्मनैक्यानुसन्धानं कौलिकार्थः। मूलाधारे लसन्ती बिसतन्तुतनीयसी परःसहस्रसूर्यप्रकाशा विद्यैव ममात्मास्तीति साधकस्य निरन्तरभावनैव रहस्यार्थः। तथा निष्कलेनाणुनाऽणुतरेण महता महत्तरेण निर्लक्ष्येण भावातीतेन व्योमातीतेन परात्परेण

तत्त्वेन सह विश्वातीतनिष्कलनिर्लक्ष्यस्वगुरुप्रबोधितस्य निर्म्मलस्वभावस्य स्वात्मनः साधकद्वारैक्यानुप्रवेशो महातत्त्वार्थः।

प्रोक्तेभ्योऽर्थेभ्योऽन्येऽपि बहवः शब्दरूपार्थनामार्थशाक्तार्थादयोऽर्थाः सन्ति प्रतिपादिताः। येषां ज्ञानं रहस्यादिग्रन्थेभ्यः सुलभम्। एवमुक्तानां मन्त्रार्थानां ज्ञानेन सविधानं जपानुष्ठानं सम्पद्यते। पाशात्मकं सविकल्पजालं समूलमुन्मीलितं भवति। निर्गुणं निर्विकल्पं विश्वातीतं सच्चिदानन्दमयमात्मनः स्वरूपञ्च प्रकाशते। ईदृशप्रकाशोपलम्भ एव च जपस्य परमं रहस्यम्।

अथाजपाजपस्याप्याभ्यन्तरतया तस्य स्वरूपं प्रदर्शयामः। न जप्यते नोच्चार्य्यतेऽसौ; अपि तु श्वासप्रश्वासयोर्गमनागमनाभ्यां सम्पाद्यत इति जपूघञर्थे के स्त्रियां टापि नञ्समासे चाजपेति शब्दकल्पद्रुमः। वयन्तु—अजं ब्रह्म तदभिन्नं जीवात्मानं श्वासप्रश्वासयोर्गमनागमनद्वारा पाति रक्षति या साजपा हंसात्मिका भगवती, तस्या जपोऽजपाजप इति ब्रूमः। तदुक्तं कुलार्णवे—

हंसात्मिकां भगवतीं जीवो जपति सर्वदा।
अस्याः स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः॥ इति।

स च मन्त्रः—

वियदर्धेन्दुलसितस्तदादिः सर्गसंयुतः।
अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः सुरपादपः॥

इत्युक्तेहंस इत्येवं स्वरूपः।

अस्य मन्त्रस्य देवता—

उद्यद्भानुस्फुरिततडिदाकारमूर्धाम्बिकेशम्,
पाशाभीतिं वरदपरशुं सन्दधानं कराब्जैः।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलम्,
सौम्याग्नेयं वपुरवतु नश्चन्द्रचूडं त्रिनेत्रम्॥

इति तन्त्रसारानुसारमर्धनारीश्वरः "ऋषिर्हंसः समाख्यातः परहंसश्च देवता' इति वीरचूडामणिमतेन च परमहंसो देवता उभयोस्तन्त्रयोर्विरोधो नात्रशङ्कनीयः। अर्धनारीश्वरस्यैव परमहंसस्वरूपत्वात्। ऋषिर्हंसः, छन्दो गायत्री हं बीजम्, अः

शक्तिः, सोऽहं कीलकम्, प्रणवस्तत्त्वम्, उदात्तः स्वरो मोक्षार्थे जपे विनियोगः सिद्धः। तदाह सुरेन्द्रसंहितायाम्—

ऋषिर्हंसोऽव्यक्तपूर्वो गायत्री छन्द उच्यते।
देवता परमादिस्तु हंसो हं बीजमुच्यते॥
अः शक्तिः कीलकः सोऽहं प्रणवस्तत्त्वमेव हि।
उदात्तः स्वर इत्येवं मनोरस्य प्रकीर्तितः।
मोक्षार्थे विनियोगः स्यादेवं कुर्य्यात् सदा नरः॥ इति।

ततश्चाङ्गन्यासादिकर्म कृत्वा मूलाधारादिचक्रेषु वर्तमानान् सहस्रदलकमलकर्णिकाऽवस्थितहंसरूपपरमात्मनोऽभेदमुपगतान् गणेशादीन् देवान् ध्यात्वा,

हंसो गणेशो विधिरेव हंसो हंसो हरिर्हंसमयश्च शम्भुः।
हंसो हि जीवो गुरुरेव हंसो हंसोऽहमात्मा परमार्थरूपः॥

इत्येवंविधां हंसैक्यभावनां साधको विदधीत।

अथ गुदमेढ्रान्तरालस्थे पीतवर्णे चतुर्दले व श ष सेति चतुर्भिरक्षरैः समलङ्कृते कामरूपपीठेत्यपरनामधेये त्रिकोणाकारे मूलाधारे तरुणतरमरुणगात्रं त्रिनयनं गणेशलिङ्गमूले बालसूर्य्यसमानवर्णे ब भ म य र लैर्वर्णैः समलङ्कृते स्वाधिष्ठानसंज्ञके चक्रे कुण्डिकामक्षमालाञ्च द धत म भ य वरदहस्तममलमूर्तिं प्रजापतिम्, नाभिप्रदेशे ड ढ ण त थ द ध न प फेति दशभिरक्षरैः कृतदले मणिपूरनामके चक्रे कौस्तुभश्रीवत्सशङ्खचक्रगदापद्मादिभिः सुशोभितं मार्तण्डद्युतिं चिन्मयं नारायणम्, हृदये ककारादिठकारान्तैर्द्वादशभिरक्षरैः समलङ्कृते, इन्द्रगोपकान्तिसदृशकान्तिशालिनि, पूर्णगिरिपीठेत्यपरनामधेयेऽनाहतसंज्ञके महाचक्रे कोटिपूर्णचन्द्रसमानवर्णचर्माम्बरं जटाजूटोज्वलं शिवम्, कण्ठदेशे षोडशैरक्षरैर्विभूषिते षोडशदलकमले धूम्रवर्णे जालन्धरपीठापरनामधेये विशुद्धाख्ये चक्रे शान्तं तेजोभासुरं व्याप्तसमस्तचराचरं सच्चिन्मयं जीवम्, भ्रुवोर्मध्ये हक्षेति वर्णद्वयलसिते शारदशर्वरीशसदृशे ओड्याणपीठापरनामके आज्ञाचक्रे विश्वोतीर्णं स्वच्छन्दमक्षरविग्रहं गुरुवरम्, आज्ञाचक्रस्योपरिष्टाद् मस्तके सर्ववर्णप्रोद्भासिते ईषद्रक्तकेसरे सततामृतवर्षिणि नित्योदितचन्द्रे त्रिशृङ्गेऽधोमुखसहस्रदलकमले कैलाशपरसंज्ञके चक्रे च हंसरूपिणं परं शिवं च ध्यात्वा मानसोपचारैः सम्पूज्य शक्तिसहितेभ्यस्तत्तद्देवेभ्यो यथाविधि निवेदयेत्।

शक्तयश्च गणपतेः सिद्धिः, विश्वयोनेः सरस्वती, भगवतो नारायणस्य लक्ष्मीः, पार्वतीपतेः पार्वती, जीवात्मनोऽविद्या, श्रीमद्गुरोः परापरज्ञानशक्तिः, हंसरूपिणः परमात्मनश्च विद्याशक्तिरिति ध्येयम्। यथा चोक्तम्—

शक्तिः सिद्धिर्गणेशस्य ब्रह्मणश्च सरस्वती।
लक्ष्मीर्नारायणस्यापि पार्वती च पिनाकिनः॥
अविद्या चैव जीवस्य गुरोर्ज्ञानं परापरम्।
मोक्षबीजात्मिका विद्या शक्तिश्च परमात्मनः॥

इति पुरश्चर्यार्णवे।

भवति चास्य जपस्य प्राणिनां जन्मक्षणादेवारम्भः मृत्युक्षणे च विसर्जनम्। प्रत्यहमर्थाद्यतनसूर्य्योदयादारभ्य श्वस्तनसूर्य्योदयं यावत् षट्शताधिकैकविंशसहस्रसंख्याको जपो विना जपेनैव भवतीतीयं वस्तुतोऽजपा हंसाख्या गायत्री। इयञ्च मूलाधारे लसन्त्याः कुण्डलिन्याः सकाशात् समुद्भूता प्राणधारिणीति प्राणाविद्येति महाविद्येति च गीयते योगिप्रवरैः। वस्तुत इयमेव प्रत्यक्षा गायत्री। गायतस्त्राणकरणाद्धि गायत्री भवति। गानं च श्वासप्रश्वासयोर्गमनागमनात्मकम्। यावच्चेदं ज्ञानं तावदेव च प्राणात्मनः सत्त्वमिति "गायन्तं त्रायते यस्माद्गायत्रीत्वं ततः स्मृता" इति वचनम्। सर्वथाऽस्यामेव समन्वेति। किञ्च, नाभिप्रदेशादुद्गच्छद्भिरुच्छ्वासप्रश्वासैः प्राणात्माहंसाभिधात्माकारेण परिणतो हृदयाग्रेऽवतिष्ठमानः हकारात्मना बहिर्भूत्वा सकारात्मनाऽन्तर्भवति। इदमेव च बहिरन्तर्भवनरूपं परमशिवस्य नटराजराजस्य प्रतिक्षणं जायमानं ताण्डवम्। यस्य च साक्षात्कारेऽधिकारोऽगण्यैः पुण्यैः श्रीमद्गुरुवरचरणाऽनुपमैः कारुण्यैश्च कस्यापि विशुद्धान्तःकरणस्य योगिप्रवरस्य भवति न सर्वस्य। अत एव—'अजपा नाम गायत्री योगिनां मोक्षदायिनी' इत्युक्तं योगशास्त्रे।

नानया सदृशी विद्या नानया सदृशो जपः।
न च वाऽनया सदृशं ज्ञानं भूतं भविष्यति वा॥

अस्याः सान्द्रानन्दमय्याः परायाः सङ्कल्पमात्रेण भवति सर्वविधेभ्यः पापेभ्यो विमुक्तिः। अस्याः सम्बोधमात्रेण च जीवन्मुक्तिरिति नात्र संशयलेशोऽपीति भगवतः शिवस्य सिद्धान्तः। सङ्कल्पस्वरूपं चाद्यतनसूर्य्योदयादारभ्य श्वस्तनसूर्य्योदयपर्य्यन्तं श्वासोच्छ्वासरूपेण षट्शताधिकैकविंशतिसहस्रसंख्याकमजपागायत्री जपमहं करिष्य इति ज्ञेयम्। किञ्च, तत्तच्चक्रावस्थितगणेशादिभ्यः शक्तिसहितेभ्यः प्रतिदिनं जपं निवेदयेच्च। तदयमत्र निवेदनक्रमः—"सिद्धिशक्तिसहिताय गणेशाय

षट्शतसंख्याकमजपाजपमहं निवेदयामि नमः। लक्ष्मीशक्तिसहिताय नारायणाय षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः। पार्वतीशक्तिसहिताय महेश्वराय षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः। अविद्याशक्तिसहिताय जीवात्मने सहस्रसंख्याकमजपाजपमहं निवेदयामिनमः। परापर ज्ञानशक्तिसहिताय गुरवे सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः। सूर्य्यकोटिप्रकाशाय चन्द्रकोटिसुशीतलाय विद्याशक्तिसहिताय परमात्मने सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः" इति। तथाचोक्तं वीरचूडामणौ—

षट्शतानि गणेशस्य षट्सहस्रं प्रजापतेः।
षट्सहस्रं गदापाणेः षट्सहस्रं पिनाकिनः॥
सहस्रमात्मने चैव सहस्रं परमात्मने।
सहस्रं गुरवे चैव सङ्कल्पोऽयं यथाविधि॥ इति।

तथा हंसोपनिषदि—ब्रह्मविद्याप्रबोधोपायः क इति गौतमप्रश्नस्योत्तरे सनत्कुमारः 'हंसः' इति महामन्त्रस्यैव सविधानमुपदेशं चकार। तत्र च गुदमवष्टभ्य मूलाधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिःप्रदक्षिणीकृत्य मणिपूरकञ्च गत्वाऽनाहतमतिक्रम्य विशुद्धौ प्राणान्निरुध्याज्ञामनुध्यायन् ब्रह्मरन्ध्रं च ध्यायन् त्रिमात्रोऽहमिति सदा ध्यायन् तिलेषु तैलमिवाधाराद् ब्रह्मरन्ध्रपर्य्यन्तं शुद्धस्फटिकसदृशनादमेव परमात्मानमवगच्छेदिति प्रोक्तमस्ति। अस्याकृतिवर्णनप्रसंगे चाग्नीषोमौ पक्षौ, ओंकारः शिरः, बिन्दुः नेत्रम्, मुखं रुद्रः, रुद्राणी चरणौ, बाहू कालः, अग्निश्च पार्श्वद्वयमित्येष कोटिसूर्य्यप्रतीकाशः परमहंसः परमात्मा, येनेदं चराचरमभिव्याप्तं वर्तत इत्युक्तम्। तत्रोपनिषदि प्रोक्तायास्तदीयाष्टप्रकारायां वृत्तेः कार्यम्। अजपोपसंहारो दशविधनादरहस्यञ्च योगिमात्रं ज्ञेयं प्रतिभाति। तथाहि—हंसानुध्यानवशान्मनोऽपि हंसो भवति, मनोहंसश्च जपकोट्या नादमनुभवति। स च नादो दशविधः—चिणीति प्रथमः, चिञ्चिणीति द्वितीयः, घण्टानादस्तृतीयः, शंखनादश्चतुर्थः, तन्त्रीनादः पञ्चमः, तालनादः षष्ठः, वेणुनादः सप्तमः, मृदङ्गनादोऽष्टमः, भेरीनादो नवमः, मेघनादो दशमः। यत्र दशमस्यैव नादस्य ब्रह्मसारूप्यहेतुत्वम्, नवमं यावत्साधनामात्रमित्यवगतं भवति।

एवञ्च तस्मिन् ब्रह्मणि मनसि लीने सति सङ्कल्पविकल्पयोरभावेन पुण्यपापोभये दग्धे सति स्वयं ज्योतिः शान्तः सदाशिवः प्रकाशते। किञ्च, स्वर्गादूर्ध्वलोकं गन्तुकामो

हरिर्हंसः पूर्वपश्चिमाकाशाभ्यां पक्षाभ्यामुत्पतन् सत्त्वप्रधानान् देवानुपासकांश्च स्वात्मनि सन्निधाय समस्तं विश्वं पश्यन् ब्रह्मलोकं यावद् गच्छतीत्यर्थकेन "सहस्राक्ष्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गं स देवान्। सर्वानुरस्य यदद्य सम्पश्यन् याति भुवनानि पश्य" इति मन्त्रेण शुक्लयजुर्वेदस्य दशमाध्यायस्थेन "हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्" इति मन्त्रेण चाजपाजपस्यै सङ्केतः कुतो ज्ञायत इति संक्षेपः।

अथ बाह्यजपं विचारयामः। तत्र तावत्—

वेदादिशाबरान्तानां मन्त्राणां सिद्धिहेतवे।
पुरतश्चरणीयत्वात् पुरश्चरणमुच्यते॥

इति यामलस्य "धर्मार्थकाममोक्षाणां साधनं मन्त्र उच्यते। तत्सिद्धये पुरो यच्च चर्य्यते तत्प्रकीर्तितम्॥ पुरश्चरणकर्माख्यं वेदादौ शाबरान्तके॥" इति मेरु-तन्त्रस्य "जीवहीनो यथा देहः सर्वकर्मसु न क्षमः। पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्तितः॥" इति योगिनीहृदयस्य च वचनैः कस्यापि जपनीयमन्त्रस्य पुरश्चरणमावश्यकं प्रतीतं भवति। तच्च पुरश्चरणमेकाङ्गं द्व्यङ्गं त्र्यङ्गं चतुरङ्गं पञ्चाङ्गमित्यादिषोडशाङ्गं सप्तदशाष्टादशाङ्गं यावद् भवतीति मेरुतन्त्रे वर्णितमस्ति, किन्तु तेषु पञ्चाङ्गस्यैव प्राशस्त्यं प्रतिपादितं विद्यते। तथाचोक्तं कुलचूडामणौ—

पञ्चाङ्गानि महादेवि जपो होमश्च तर्पणम्।
अभिषेकश्च विप्राणामाराधनमपीश्वरि॥
पूर्वपूर्वदशांशेन पुरश्चरणमुच्यते। इति।

वैद्यवक्त्रेऽप्याह—

अस्य पञ्चाङ्गयागस्य कलान्नार्हन्ति षोडशीम्।
विशेषतः कलियुगे जपयागः प्रशस्यते॥ इति।

यच्च कलियुगे—

'जपात् सिद्धिर्जपात् सिद्धिर्जपात् सिद्धिर्न संशयः।'
यथा महागुणैर्वश्यो जायते गुणवान् प्रभुः।
तथाऽहं त्वञ्च विष्णुश्च जपादेव फलप्रदाः॥

इत्यादिमेरुतन्त्रवचनैः केवलं जपस्यैवाङ्गरहितस्यानुष्ठानं वदन्ति। तत्र, तेषामङ्गसहितजपानुष्ठानपरत्वेनापि व्याख्यानस्य सम्भवात्।

संसारे दुःखभूयिष्ठे यदीच्छेच्छ्रेयमात्मनः।
पञ्चाङ्गोपासनेनैव मन्त्रजापी सुखं व्रजेत्॥

इति कुलमूलावतारस्य विशेषवचनेन पञ्चाङ्गोपासनस्यावश्यकत्वाञ्च। पञ्चाङ्गानि तु कल्पोक्तमन्त्रजपसंख्याको जपः, तद्दशांशो होमः, होमदशांशस्तर्पणम्, तर्पणदशांशो मार्जनम्, मार्जनदशांशसंख्याकं ब्राह्मणभोजनमित्येतानि समगवन्तव्यानि। तथा च यथा क्षेत्रे सलिलसेकादिसहकारिकारणसाहाय्येन वीजमङ्कुरं जनयितुं समर्थम्, तथैव पञ्चाङ्गादिपुरश्चरणरूपसहकारिकारणसाहाय्येनैव मन्त्रोऽपि साधकस्य सिद्धिर्जनयितुं समर्थो भवति; अत एव कस्यापि मन्त्रस्य कल्पोक्तसंख्याको जपः करणीयः। इदन्त्वत्र ध्यातव्यम्—

कल्पोक्तैव कृता संख्या त्रेतायां द्विगुणा भवेत्।
द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा॥

इति कलौ तत्कल्पोक्तसंख्यातश्चतुर्गुणा साऽवधेयेति। अथ गुरोः सकाशाद्दीक्षया प्राप्तस्य मन्त्रस्य विज्ञानमपि नितरामावश्यकं तथा कीलकज्ञानञ्च। यथोक्तं विशुद्धेश्वरतन्त्रे—

मन्त्रं नीत्वा गुरोः पार्श्वे गुरुभक्तिपरायणः।
मन्त्रश्रोत्रास्यहृन्नेत्रप्राणान् विज्ञाय तत्त्वतः॥
यत्नाच्च कीलकं ज्ञात्वा कुर्य्यान्मन्त्रपुरस्क्रियाम्॥ इति।

तथा च मन्त्राणां श्रोत्रं प्रणवः, रेफः मुखम्, स्वराश्च चक्षुषी, तद्भिन्नाश्च वर्णा हृदयम्, प्राणास्तु सर्वतन्त्रेषु गुप्ता गुरुकृपातोऽवगन्तव्याः। तदुक्तम्—"मन्त्राणां प्रणवः श्रोत्रं मुखं रेफः प्रकीर्तितः। स्वराश्च चक्षुषी ज्ञेया मन्त्रविद्भिरनारतम्॥ अतिरिक्ताश्च ये वर्णा हृदयं परिकीर्तितम्। असवोऽस्य परिज्ञेयाः सर्वतन्त्रेषु गोपिताः॥" इति भूतडामरबीजकोशे। एवं मन्त्रचैतन्यसूतकमृतकदोषशमनसेतुमहासेतुनिर्वाणज्ञानानि तदतिरिक्तानि जपाङ्गानि प्रदर्शयामः। तत्र मन्त्रचैतन्यं नाम मन्त्रगुरुदैवसाधकात्मनामैक्यभावना। मन्त्राणामुच्चारणं जातकसूतकं मृतकसूतकञ्च विसर्जनं तद्दोषद्वयनिवृत्तये जप्यमन्त्रस्याद्यन्ते प्रणवं कृत्वा दशवारं पञ्चविंशवारं पञ्चाशद्वारं वा मन्त्रं जपेत्तेन च जातकसूतकनिवृत्तिर्भवति। दशवारं पञ्चविंशवारं वा जपेन मृतकसूतकनिवृत्तिर्भवति। ब्राह्मणक्षत्रियवैश्यसाधकानां कृते प्रणवः,

तद्भिन्नानां चन्द्रानुस्वारसंयुक्ताश्चतुर्दशस्वराः सेतुरिति मेरुतन्त्रे। रुद्रयामले तु ब्राह्मण-क्षत्रिययोः प्रणवः, वैश्यस्य फडिति, शूद्रस्य च ह्रीमिति सेतुः। महासेतुश्च सुन्दर्य्याः कालिकायाश्च स्वं स्वं बीजमेव। तारायाः कूर्चबीजम्, अन्यासां बधूबीजम्। तदुक्तं मेरुतन्त्रे—

निःसेतुकं यथा तोयं क्षणान्निम्नं प्रसर्पति।
मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति यज्वनाम्॥
तस्मात् सर्वेषु मन्त्रेषु चतुर्वर्णा द्विजादयः।
पार्श्वयोः सेतुमादाय जपकर्म समारभेत्॥ इति।

प्रणवं मातृकाद्यश्च समुच्चार्य्य मूलमन्त्रं वाग्भवबीजञ्च समुच्चार्य्य समस्तां मातृकां पुनः प्रणवमित्येवं पुटितमूलं मणिपूरके प्रजपेदिति निर्वाणम्। कुल्लुकामन्त्रस्तु तत्तद्देवतानां भिन्न इति जपनीयस्य मन्त्रस्य कुल्लुकाया ज्ञानं गुरूपदेशाद्वा शास्त्राद्वा कर्तव्यम्। सेत्वादीनां चिन्तनप्रकारस्तु—

कुल्लिकां मूर्ध्नि सञ्चिन्त्य हृदि सेतुं विचिन्तयेत्।
महासेतुं विशुद्धौ च सहस्रारे समुद्धरेत्॥
मणिपूरे तु निर्वाणं महाकुण्डलिनीमधः।

इति यामलस्य वचनादवगन्तव्यः। मन्त्रशिखाज्ञानमपि साधकस्यावश्यकम्।

तमोयुक्ते यथा गेहे न किञ्चित् प्रतिभासते।
शिखाहीने तथा मन्त्रे न सिद्धिः कल्पकोटिभिः॥

इति सिद्धेश्वरतन्त्रात्।

शिखेव शिखामन्त्रस्याकुण्ठता सामर्थ्यमिति यावत्। एतेन मन्त्रशिखा-प्रयोगेण मन्त्रस्य सामर्थ्यं सिद्धं भवति। प्रयोगस्तु—मूलाधारस्थस्वयम्भूलिङ्गवेष्टनी-भूतां सार्धत्रिवलयाकारां विसतन्तुतनीयसीं ह्रीं बीजार्थभूतां कुण्डलिनीहूँबीजोत्थ-ध्वनिनोत्थाप्य सुषुम्णाध्वना स्वाधिष्ठानादिचक्रभेदेनोद्गच्छन्तीं विद्युत्प्रभां विद्युज्ज्वलां मधुरं कूजन्तीं तां ब्रह्मरन्ध्रोपरि वर्तिन्यमृतमये परमशिवे मग्नां विभाव्य, पुनस्ततो निर्गत्याधःपतन्तीममृताप्लुतामन्तर्देहममृतं क्षरन्तीं स्वस्थानमूलाधारगतां स्मरेदिति। एवमेव साधक आत्मशुद्धिभूतशुद्धितत्त्वशुद्धिद्रव्यशुद्ध्यादीनि जपाङ्गतयाऽवश्यं जानीयात्। तेषाञ्च विवरणमत्र लेखविस्तरभयान्नाकरवाम।

अथ प्रसङ्गतो मालां विचारयामः। तत्र सर्वतः प्रथमं वर्णमालास्वरूपमुपपादयामः। तस्याः सर्वत्र मुख्यत्वादस्योद्घोषितत्वात्। तदभावे रहस्यमाला वीरस्य, अवीरस्य तु स्फटिकादिमाला विहिता। तथा च वरमालयाष्टोत्तरशतजपे विधेये प्रकारद्वयम्, तत्र पूर्वं क्लीबवर्णचतुष्टयोपरि जपित्वा, अकारादिलकारान्तेषु वर्णेषु जपेत्। एवञ्च चतुःपञ्चाशत्संख्याको जपो भवति। क्षकारं केवलं मेरुभूतमुच्चरेदेव, न तु तत्र मन्त्रमपि जपेत्। पुनश्च विलोमक्रमेण लकाराद्यकारान्तेषु वर्णेषु जपित्वा विलोमेनैव क्लीवचतुष्टयोपरि जपेत्, ततश्चाष्टोत्तरशतसंख्याको जपो निष्पद्यते। अपरश्च प्रकारः—अनुलोमविलोमक्रमेणाकारादिलकारान्तेष्वेव शतसंख्याकं जपं विधाय, अ क च ट त प य शेत्येतेष्वष्टसु वर्गेष्वष्टधा जपेनाष्टोत्तरशतसंख्याको जपः सम्पद्यते। एतदत्र विचारयितव्यम्—यदनयोरुभयोः प्रकारयोर्मध्ये यः कोऽपि येन प्रकारेण नित्यं जपं विदधाति स काम्ये जपे कर्तव्ये तदितरमेव प्रकारमाश्रयेत्, न त्वभ्यस्तेन नित्यजपप्रकारेणैव काम्यमपि कुर्वीत। प्रकारद्वयकथनस्य काम्यनित्यभेदापेक्षत्वात्, काम्यजपक्रमाद् भिन्नक्रमेण नित्यं जपं कुर्य्यादिति तत्तात्पर्य्यात्। तदुक्तं मुण्डमालातन्त्रे—

अनुलोमविलोमस्थक्लृप्तया वर्णमालया।
आदिवर्णक्रमेणैव लान्तञ्च परमेश्वरि॥
क्षकारं मेरुरूपं तु लङ्घयेन्न कदाचन।
मेरुहीना च या माला मेरुलङ्घया च या भवेत्।
अशुद्धा तु भवेदत्र सा माला निष्फला भवेत्॥
चित्रिणी बिसतन्त्वाभा ब्रह्मनाडीगता च या।
तया संग्रन्थिता ध्येया सर्वकामफलप्रदा॥
अष्टोत्तरशतजपे त्वादौ क्लीबं समुच्चरेत्।
ऋ ॠ ऌ ॡ वर्णचतुष्टयं क्लीबं प्रचक्ष्यते॥
वर्गाणामष्टकं वापि काम्यभेदक्रमेण तु।
अकचटतपयशा इत्येवं चाष्टवर्गकम्॥ इति।

यामलमते वर्णमालाघटकान् वर्णान् सबिन्दून् ब्रह्मनाड्या ग्रथितान् भावयन् मेरुतया कल्पितं क्षकारमनुलोमावृत्त्यन्ते विलोमावृत्त्यन्ते सकृदेवोच्चरेत्, न तु तत्र मन्त्रं जपेत्। इदमेव कुलमूलावतारस्य सारसंग्रहस्यापि च मतम्। तथाहि—

सबिन्दुवर्णमुच्चार्य्य पश्चान्मन्त्रं जपेत् सुधीः।
क्षं मेरुं कल्पयित्वा तु जपेत्तन्नाभिलङ्घयेत् ॥

इति यामले। कुलमूलावतारादौ च—

ब्रह्मनाडीगतानादिक्षान्तान् वर्णान् विभाव्य च।
ऊर्णं बिन्दुयुतं कृत्वा स्वेष्टं मन्त्रं जपेन् सुधीः॥
अकारादिषु संयोज्य तथा कादीषु च क्रमात्।
क्षार्णं मेरुमथो तत्र कल्पयेज्जगदीश्वरि ॥
तदा लिपेर्भवेदक्षमालार्धशतसंख्यया।
अनया सर्वमन्त्राणां जपः सर्वार्थसाधकः॥ इति।

अनया वर्णमालया जप्ता वैरिमन्त्रा अपि शीघ्रफलप्रदा भवन्ति। तथा च—

प्रत्येकार्णयुता मन्त्रा जप्ता स्युः शीघ्रसिद्धिदाः।
वैरिमन्त्रा अपि नृणामन्ये मन्त्राश्च किं पुनः॥ इति।

इदमत्रावधेयम्—अक्षमालापदेन स्फटिकाक्षरुद्राक्षमालादीनामेव ग्रहणमिति बहवो वदन्ति, तन्न विचारसहम्। किन्तु, तदा लिपेर्भवेदक्षमालार्धशतसंख्ययेति, वचनाद्वर्णमालैव मुख्याक्षिमालास्फटिकादिष्वक्षमालाप्रयोगो गौण एवेति ज्ञेयम्। रहस्यमाला महाशंखरचितपञ्चाशत्संख्याकमणिभी रचिताऽतिगोपनीया वीरस्यैव साधकस्योपयुक्ता। महाशंखश्च कर्णनेत्रान्तरालस्थोऽस्थिविशेषः। तदुक्तं त्रिशक्तिरत्ने—

महाशङ्खमयी माला पञ्चाशन्मणिनिर्मिता।
रहस्यमाला सम्प्रोक्ता गोपनीया प्रयत्नतः॥
कर्णनेत्रान्तरालस्थो महाशङ्खं प्रकीर्तितः।
तदभावे तु कस्यापि कर्तव्याऽवयवस्य वै॥ इति।

अथावीरस्य स्फटिकादिरचितासु मालासु रुद्राक्षमालाऽतिप्रशस्तेति नातिरोहितं पुरश्चरणचन्द्रिकारुद्रयामलमेरुतन्त्रादितन्त्रग्रन्थाऽध्ययनशीलानाम्। रुद्राक्षस्य सर्वदेवमन्त्रसिद्धिकरत्वं सर्वदेवप्रियत्वं सर्वविधपापहरत्वञ्च सर्वथा साधितम्।

रुद्राक्षाः सर्वदेवानां मन्त्रसिद्धिविधायकाः।
उच्छिष्टो वा विकर्मस्थो युक्तो वा सर्वपातकैः॥
मुच्यते सर्वपापेभ्यो नरो रुद्राक्षधारणात्।

इत्यादि वचनात् । तैश्च रुद्राक्षैर्मुखे मुखं पुच्छे पुच्छं संयोज्य ब्राह्मणीरचितेन कन्यारचितेन वा कार्पाससूत्रेण गोपुच्छाकारां सर्पाकारां वा मालां रचयेत् । तत्र सार्धत्रिरावृत्या ब्रह्मग्रन्थिश्च जप्यमन्त्रोच्चारणपूर्वकमेव दद्यात् । तेन येन मन्त्रेण तत्र ब्रह्मग्रन्थिः कृता वर्तते, तदितरमन्त्रस्य जपं तत्र मालायां न कुर्वीत ।

येन मन्त्रेण या माला कृता तन्तुजपे तथा ।
अन्यमन्त्रजपाच्छापो देवतायाः प्रजायते ।। इत्युक्तेः ।

संस्कारश्च तस्याः सद्यो जातमन्त्रेण पञ्चगव्ये प्रक्षाल्य, अघोरमन्त्रेण धूपयित्वा, तत्पुरुषमन्त्रेण लेपयित्वा, ईशानमन्त्रेण प्रत्येकं शतधाऽभिमन्त्रणाद् भवति । जपकाले मालासातर्जन्या वाम हस्तेन वा न स्प्रष्टव्या, न वा हस्तात् पातयितव्या । जपसमये मेरुलङ्घनं परिवर्तनसमये च सङ्घट्टनमपि नैव कर्तव्यम् । जपक्रमश्च—भुक्तिमुक्तिपुष्टिकामनया मध्यमाङ्गुलिस्थां मालामङ्गुष्ठया, मुक्तिकामनया मध्यमाग्रभागेन चालयेत् । किञ्च, विद्वेषोच्चाटनकामनया तर्जन्यङ्गुष्ठसंयोगेन मारणकामनया च कनिष्ठाङ्गुष्ठसंयोगेन च जपेत् । जपादन्यत्र काले जपमाला नैव प्रकाशयेत्, जपमालामुद्रामन्त्रगुरूणामतिगोपनीयत्वात् । यथाह पुरश्चरणचन्द्रिकायाम्—

अन्यकाले इमां मालां पूजयित्वा तु गोपयेत् ।
गुरुं प्रकाशयेद् विद्वान्न तु मन्त्रं प्रकाशयेत् ।।
अक्षमालाञ्च मुद्राञ्च गुरोरपि न दर्शयेत् ।
भूतराक्षसवेतालाः सिद्धगन्धर्वचारणाः ।।
हरन्ति प्रकटं यस्मात् तस्माद् गुप्तं जपेत् सुधीः ।। इति ।

करमाला तु नित्यजपे एव प्रशस्ता, मालाया अभावे तु काम्यं जपमपि कुर्य्यादेव, किन्तु नायमुत्तमः पक्षः ।

नित्यं जपं करे कुर्य्यान्न तु काम्यं कदाचन ।
काम्यं चापि करे कुर्य्याद्यदि माला न विद्यते ।।

इति मुण्डमालावचनात् । सा च बालातन्त्रीयाऽनामामध्यादारभ्य तर्जनीमूलं यावद्दशसु पर्वसु नियता, मध्यमाया मध्यमन्त्यं चेति पर्वद्वयं मेरुत्वेन कल्पितम् । तन्त्रा-

न्तरीत्या त्वनामामध्यमारभ्य कनिष्ठानुक्रमेण तर्जनीमूलपर्य्यन्ता करमाला प्रशस्ता। सनत्कुमारमते त्वनामामध्यमारभ्य कनिष्ठादिक्रमेण तर्जनीमूलं यावत्प्रशस्ता। अष्टवारजपे त्वनामामूलमारभ्य कनिष्ठादिक्रमेण तर्जनीमध्यपर्य्यन्तमेव प्रयोजयेत्। शक्तिविषये त्वनामिकामूलादारभ्य प्रादक्षिण्यक्रमेण मध्यमामूलपर्य्यन्तमष्टस्वेव पर्वसु प्रशस्ता सा। अथवाऽनामामूलमारभ्य तर्जनीमूलपर्य्यन्तं नवस्वेव पर्वसु। एवञ्च द्वादशावृत्त्याऽष्टोत्तरशतं जपसिद्धिर्भवति। अनया करमालया जपकाले चाङ्गुलीनां वियोगं गणनोल्लङ्घनञ्च न कुर्वीत। तलञ्च किञ्चित्सङ्कोचयेत्, करञ्च नैव दर्शयेदिति नियमः। जपसंख्याश्चाक्षतैर्हस्तपर्वैर्धान्यैः पुष्पैश्चन्दनैर्मृत्तिकया च नैव कुर्वीत। लाक्षाकुसीदसिन्दूरगोमयकरीषकैर्गुडिकां कृत्वा तयैव गुडिकया जपसंख्यां कुर्वीत चेति।

अयं च बाह्यो जपो वाचिकोपांशुमानसभेदेन त्रिविधः। श्रवणेन्द्रियगोचरं मन्त्रोच्चारणं वाचिकः, स एव किञ्चिच्छ्रवणयोग्य उपांशुः, अर्थमुद्दिश्य बुद्ध्यैव मन्त्रोच्चारणं मानसः। तथा च—

जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः।
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम्॥
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः।
मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः॥ इति।

जपाङ्गत्वं दीक्षायामपि विद्यते, किन्तु दीक्षाया वर्णकलावेधादिविषयकत्वेन आणव्यादीक्षायाश्च स्मार्तमानसादिभेदेन चानकेविधत्वाल्लेखस्य विस्तरभिया विवरणं न कुर्मः। एवञ्च जपस्थानासनमुद्रान्यासानामपि चानन्त्येन तद्विवरणादपि विरमामः। जप्यमन्त्रविनाशकारकाश्चात्याहारादयः षडेव सन्ति, तान् साधको यत्नेन परिहरेत्। तदुक्तं यामले—

अत्याहारः प्रयासश्च प्रजल्पो नियमाग्रहः।
जनसंगोष्ठलौल्यञ्च षड्भिर्मन्त्रो विनश्यति॥ इति।

किञ्च, विश्वासास्तिक्यकरुणाश्रद्धानियमसन्तोषादींश्च महताप्युपायेनात्मन्याधातुं यतेत। तदप्युक्तम्—

विश्वासास्तिक्यकरुणाश्रद्धानियमनिश्चयैः ।
सन्तोषैः शुद्धकर्मादिगुणैर्युक्तो जपेन् प्रिये ।। इति ।

एवं भूतस्य जपस्य गुर्वधीनतया शिष्यसम्बन्धितया च तयोर्लक्षणं लिखामः—

गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः ।
उकारः शिव इत्युक्तस्त्रितयात्मा गुरुः परः ।।

किञ्च, पाशहरो गुरुरिति मेरुतन्त्रे । तथा च—

पाशबद्धः पशुः प्रोक्तः पाशमुक्तः सदाशिवः ।
तस्मात् पाशहरो योऽत्र स गुरुर्नान्य उच्यते ।। इति ।

शिष्यश्च—हितसत्यमितभाषी विश्वासविनयाद्युपेतः शमादिसाधनगुणशील-समन्वितो विचक्षणश्च मन्त्रग्रहणयोग्यः ।

यत्तु—

पञ्चमेन विना देवि चण्डीमन्त्रं कथं जपेत् ।
यदि पञ्चमकारेषु भ्रान्तिं चेत्कुरुते प्रिये ।
तस्य सिद्धिः कथं देवि चण्डीमन्त्रं कथं जपेत् ।।

इत्यादि कुलार्णवतन्त्रादिधृतवचनचयालोचनेन पञ्चमकारघटकपञ्चमेन विना मकारपञ्चकेन विना वा जपो नैव सिद्ध्येदिति । किञ्च—

यथैवान्तश्चरा राज्ञः प्रियाः स्युर्न बहिश्चराः ।
तथाऽन्तर्य्यागनिष्ठा ये प्रिया मे देवि नापरे ।।

इति देवीं प्रतिकुलार्णवीयशिववाक्येन चान्तर्य्यागस्यावश्यकत्वम्, तस्य च मकारपञ्चकनिष्पाद्यत्वं प्रोक्तम् । तत्कौलमार्गमाश्रितानां कुलाचार्य्यसदर्चाचतुराणामेव साधकानां साधनं न सर्वेषाम् । ब्रह्मज्ञानोत्तरमेव हि तत्रैव कुलार्णवे—

तृप्त्यर्थं सर्वदेवानां ब्रह्मज्ञानं विधाय च ।
सेवते मधुमांसानि तृष्णया चेन् स पातकी ।।

'यः सेवते सुखार्थाय मद्यादीनि स पातकी' इत्यादिवचनैस्तत्सेवनस्य साधारणानां निषेधात् । मकारपञ्चकपदेन पञ्चतत्त्वमभिधीयते । तच्च मद्यमांस-मत्स्यमुद्रामैथुनात्मकम् । मद्यञ्च पानसद्राक्षमाध्वीकादिभेदेन सुधया सह द्वादश-विधम् । भक्ष्यो मत्स्यो भक्ष्यं मांसञ्च प्रोक्षणद्वारा पवित्रीकृतम् । मुद्रापदेनात्र मृष्टतण्डुलपृथुकगोधूमचणकादयो गृह्यन्ते ।

पृथुकास्तण्डुला मृष्टा गोधूमचणकादयः ।
तस्य नाम भवेद्देवि मुद्रा मुक्तिप्रदायिनी ।

पञ्चमं त्वापारप्रसिद्धम् ।

किञ्च, अन्तर्य्यागस्य च गुरुदेवतात्मतर्पणस्वरूपतया मद्यादीनाञ्च तत्साधनतया तत्राप्युपयोगः पञ्चतत्त्वस्य कुलाचारपूजाधिकारिभिरेव विधातव्यो नान्यैः। वस्तुवस्तु कुण्डलिनीपरशिवयोः सहस्रदलकमलकर्णिकान्तर्विहारकालिकपरस्परसामरस्यात्मकमैथुनादुत्पन्नेन शक्तिरसात्मकमद्येनैव तर्पणभावनाऽन्तर्यागपदार्थः। तस्य प्रयोगश्च चितारी ( ऐं ह्रीं श्रीं )—पूर्वक एकैकवारतर्पणात्मको मानसोऽवगन्तव्यः। एतमेवाभिप्रायं मनसि निधाय बहवः प्राचीनाः साधका मद्यादिकरणकबाह्यतर्पणात्मकमन्तर्य्यागं न विधाय मानसमेव विदधतीति मिथिलासम्प्रदायः।

अलिना पिशितं मीनं मुद्रां मैथुनमेव च।
मकारपञ्चकं यत्र तत्र देवी न संशयः॥

इति कुलचूडामणिवचनव्याख्यानप्रसङ्गे विद्वदुपाध्यायैस्तारिणीपारिजाते—शिवशक्तिसामरस्योद्भवं शक्तिरसात्मकं मद्यम्, सुषुम्णाशङ्खिनीनाड्यौ मत्स्यः, उन्मना एव च मुद्रेति प्रोक्तम्।

न मद्यं माधवीमद्यं मद्यं शक्तिरसोद्भवम्।
सुषुम्णाशङ्खिनी मत्स्यं मुद्रा उन्मन्यनुत्तमा॥

इति वचनं चोपात्तम्। अत एव आसवपानविचारप्रसङ्गेनोपाध्यायैर्ब्राह्मणस्य मदिरापानं ब्राह्मण्यापहारकमुक्तम्। एतत्समर्थयन्ति च—

ब्राह्मणो मदिरां दत्वा ब्राह्मण्यादेव हीयते।
स्वगात्ररुधिरं दत्वा ब्रह्महत्यामवाप्नुयात्॥
क्षीरेण ब्राह्मणैस्तर्प्या घृतेन नृपवंशजैः।
माक्षिकैर्वैश्यवर्णैस्तु आसवैः शूद्रजातिभिः॥
यत्रावश्यं विनिर्दिष्टं मदिरादानपूजनम्।
ब्राह्मणस्ताम्रपात्रे तु मधु मद्यं प्रकल्पयेत्॥

इत्यादीनि भैरवतन्त्रभैरवीतन्त्र-कुलचूडामणि वचनानि। तदेवं यथामति विचारितं जपरहस्यम्, प्रदर्शितमजपाविज्ञानस्य स्वरूपम्।

किञ्च, योगिजनमात्रविचारणीयेऽत्र विषये मम साहसमिदं यदि मनागपि विदुषां मानसमानन्दयेत्तर्हि सफलोऽयं श्रम इति। एतावदेवाभिधाय निबन्धमिमं भवानीपतेश्चरणयोः समर्पयन्तः—

जपेन देवता नित्यं स्तूयमाना प्रसीदति।
जपात्सिद्धिर्जपात्सिद्धिर्जपात्सिद्धिर्न संशयः॥

इति सिद्धान्तं स्मारयन्तो लेखविस्तराद्विरमामः।

इति शुभम्॥



# मन्त्रार्थनिर्देशः

श्रीरघुनाथशर्मा, वेदान्तविभागाध्यक्षचरः, वा० सं० वि० वि० वाराणसी।

अथेदं स्मर्यते योगसूत्रेषु स्वाध्यायादिष्टदेवतासंप्रयोग इति। तत्र यद्यपि—अधीयते इत्यध्यायः, बाहुलकात् कर्तरि घञ्। स्वस्याध्यायः स्वाध्यायः स्वशाखारूपो वेदस्तथाप्यत्र स्वाध्यायपदं मन्त्रसामान्ये लाक्षणिकम्, तात्पर्यानुपपत्तेर्लक्षणबीजत्वाभ्युपगमात्। एवं चेष्टदेवताया यो मन्त्रस्तज्जपादिष्टदेवताप्रसादपुरस्सरमिष्टदेवतासंप्रयोगो भवतीति तदर्थः। ततः परम्—'तज्जपस्तदर्थभावनम्' इति द्वितीयं सूत्रम्। तत्र यद्यपि प्रणवस्य जपः प्रणवार्थभावनञ्च निर्दिष्टम्; तथापि तदपि मन्त्रसामान्यजपतदर्थभावनयोरुपलक्षणम्। तत्र को नाम मन्त्रार्थः, कतिविधश्चेति जिज्ञासायां मन्त्रार्थानां षाड्विध्यं तेषां स्वरूपं च दर्शितं योगिनीहृदये—

मन्त्रसङ्केतकस्तस्या नानाकारो व्यवस्थितः।
नानामन्त्रक्रमेणैव पारम्पर्येण लभ्यते॥
षड्विधं तं तु देवेशि कथयामि तवानघे।
भावार्थः संप्रदायार्थो निगर्भार्थश्च कौलिकः॥
तथा सर्वरहस्यार्थो महातत्त्वार्थ एव च। इति।

[ योगिनीहृदये २, १४-१६ ]

अयमभिसन्धिः—तस्या आदिशक्तेर्मन्त्रसङ्केतको नानाकारः। तदीयविद्यायाः साङ्केतिकार्थः षट् प्रकारः, परन्तु तस्या मन्त्रोऽपि नैकः, येनैकस्यैव मन्त्रस्य षडर्थाः स्युः, किन्तु नानाविधो मन्त्रो लोपामुद्रा-कामराजादिभेदात्। ततश्च केचिदर्थाः कादिविद्याया एव, केचित्तु हादिविद्याया एव, केचित्तूभयसाधारणाः। संहत्य षड्विधः सङ्केतः। तत्र कस्या विद्यायाः कोऽर्थः? इति तु व्यवस्था पारम्पर्यक्रमेणैव लभ्यत इति नवीनाः, प्राञ्चस्तु यद्यपि हादिविद्याया एव षडर्था इत्यभिमन्यमाना इह चक्रेश्वरीमन्त्रान् षडर्थपरतयोदाहरन्ति; तथापि तदयुक्तम्; हादिविद्यायाः षडर्थपरत्वेन लपने क्लिष्टत्वादिति। तस्मात् प्रागुक्तं नव्यमतमेव न्याय्यम्।

तत्रादावक्षरार्थः—

अक्षरार्थो हि भावार्थः केवलः परमेश्वरि। इति।

[ योगिनीहृदये २, १६ ]

अस्यार्थः—न क्षरन्तीत्यक्षराणि, नित्यपरशिववाचकत्वात्। ताल्वोष्ठव्यापारस्तु तेषामभिव्यञ्जको न तु जनकः। अत एवाक्षराणि, अक्षराण्येव तेषामर्थोऽभिधेयः। एवं च श्रीसौभाग्यविद्याऽवयवपञ्चदशाक्षराणामर्थो भावार्थः। तत्र सौभाग्यविद्यारूपस्य मन्त्रराजस्य स्वरूपमुक्तं योगिनीहृदये—

योगिनीभिस्तथा वीरैर्वीरेन्द्रैः सर्वदा प्रिये।
शिवशक्तिसमायोगाज्जनितो मन्त्रराजकः॥ इति।

अस्यार्थः—योगिन्यो विमर्शांशभूतेच्छाज्ञानक्रियात्मिकाः सरस्वती-पृथिवी-रुद्राण्यस्तिस्रः, वीरा उपासका अशुद्धशुद्धमिश्रभेदेन त्रयः, वीरेन्द्राः प्रकाशांशभूत-वामाज्येष्ठारौद्र्यभिन्ना ब्रह्मविष्णुरुद्रास्त्रयः, शिवशक्त्योः समायोगः सामरस्यं चैकम्, एवं दश। हृल्लेखाक्षरत्रयं देव्या वाचकत्वेन प्रसिद्धमेव। ह्रींकारवाच्या, ह्रींकारवेद्या इति नामविंशतौ कथनात्। तत्र ककारत्रयं ब्रह्मादिपरम्, लकारत्रयं पृथिव्यादिपरम्, हकारसकाराविकारश्च वीरपराः, एकारः सामरस्यपरः, शिवशक्तिवाचकयोरकारेकारयोर्योगेन जनितत्वात्। अस्या विद्यायाः पञ्चदशाक्षरत्वं च प्रणवमादाय विज्ञेयम्।

अथ सम्प्रदायार्थः, तदुक्तं योगिनीहृदये—

सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः।
विश्वाकारप्रथायास्तु महत्त्वं च यदाश्रयम्॥

अस्यार्थः—सम्यग् याथार्थ्येन कर्णे शिष्यस्य प्रदीयत इति सम्प्रदायः। महाबोधरूपो महतो देशकालाकारैरनवच्छिन्नस्य प्रकाशस्य बोधः। परिज्ञानं रूपं यस्य तादृशो गुरुमुखे स्थितः। गुरुश्चात्र स्वात्मपरमार्थप्रकटनपरो विवक्षितः, तस्यैव मुखे स्थितः, नान्यस्यानाकलितागमशास्त्रस्य।

अत्र प्रमाणम्—

सर्वज्ञो हि शिवो वेत्ति सदसच्चेष्टितं नृणाम्।
तेनासौ नानुगृह्णाति किञ्चिज्ज्ञस्य गुरोर्गिरा॥ इति।

विश्वं शिवादिक्षित्यन्तं षट्त्रिंशत्तत्त्वात्मकं तदाकारप्रथा चिच्छक्तिस्तस्या महत्त्वं तदाकारकारित्वं यदाश्रयम्, गुरुमुखस्थितसम्प्रदायार्थवासनानिमित्तकमिति।

विश्वाकारप्रथैव पराविद्या, मूलविद्येति चोच्यते। अस्यां च विद्यायां वाच्यवाचको-भयस्वरूपं दर्शितं योगिनीहृदये—

हकाराद् व्योम सम्भूतं ककारात्तु प्रभञ्जनः।
रेफादग्निः सकाराच्च जलतत्त्वस्य सम्भवः॥
लकारात् पृथिवी जाता तस्माद् विश्वमयी च सा।
गुणाः पञ्चदश प्रोक्ता भूतानां तन्मयी शिवा॥
यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता।
सा सा सर्वेश्वरी देवी स स सर्वो महेश्वरः॥ इति।

सा च पराविद्यारूपा शिवा सप्तत्रिंशद्वर्णरूपिणी षट्त्रिंशत्तत्त्वानि प्रतिपादयति। एतदप्युक्तं तत्रैव—

व्याप्ता पञ्चदशार्णैः सा विद्या भूतगुणात्मिका।
पञ्चभिश्च तथा षड्भिश्चतुर्भिरपि चाक्षरैः॥
स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी।
सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी॥ इति।

यद्यपि पुराणेषु तन्त्रेषु च विद्यायां पञ्चदशाक्षराणीति घण्टाघोषः श्रूयते, अतो नाधिकाक्षरसद्भावो युक्तः। तत्सद्भावे वा पञ्चदशाक्षरीसमाख्याविरोधः, इत्युभयतः पाशारज्जुः; तथापि द्वाविंशतेर्व्यञ्जनानां स्वराङ्गत्वेन स्वराणां च पञ्चदश-त्वादुक्तसंख्योपपत्तिः। स्वरव्यञ्जनभेदेन विद्यायाः सप्तत्रिंशत्प्रभेदितत्वं चैव-मुपपद्यते—पञ्चभिरक्षरैर्वाग्बीजस्यावयवैः, षड्भिरक्षरैः कामराजबीजस्यावयवैः, चतुर्भिरक्षरैः शक्तिबीजस्यावयवैः, पञ्चदशार्णैः स्वांशभूतैरत एव नित्यैर्व्याप्तेयं परा विद्येति। तत्र प्रथमे बीजेऽकारचतुष्टयम्, ईकारश्चेति पञ्च स्वराः, शिष्टानि षड् व्यञ्जनानि, एवमेकादश। द्वितीयं बीजेऽकारपञ्चकमीकारश्चेति षट् स्वराः, शिष्टानि व्यञ्जनानि सप्त, एवं त्रयोदश। तृतीयबीजेऽकारत्रयमीकारश्चेतिं चत्वारः स्वराः, शिष्टानि व्यञ्जनानि पञ्च, एवं नव; इत्येवं विभागेन अक्षरावयवास्त्रयस्त्रिंशत्। बीजत्रयान्ते बिन्दवस्त्रय इति षट्त्रिंशत्, तत्समष्टिरेका। एवं सप्तत्रिंशत्प्रभेदिनी विद्या समष्टिरूपा। एवं सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी इयं परा हादिविद्या, तन्त्राभिमतानि षट्त्रिंशत्तत्त्वानि च। शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकाल-

नियतिकलारागविद्यापुरुषप्रकृतिमहदहङ्कृतिमनोदशेन्द्रियपञ्चतन्मात्रपञ्चमहाभूता - नीति तत्त्वानि ।

इदानीं विद्याक्षराणां षट्त्रिंशत्तत्त्ववाचकत्वं प्रदर्श्यते । तदुक्तं योगिनीहृदये—

तस्माद् व्योमगुणः शब्दो वाय्वादीन् व्याप्य संस्थितः ।
व्योमबीजैस्तु विद्यास्थैर्लक्षयेच्छब्दपञ्चकम् ॥
तेषां कारणरूपेण स्थितं ध्वनिमयं परम् ।
भवेद् गुणवतां बीजं गुणानामपि वाचकम् ॥
कार्यकारणभावेन तयोरैक्यं विवक्षया ।
महामायात्रयेणापि कारणेन च बिन्दुना ॥
वाय्वग्निजलभूमीनां स्पर्शानाञ्च चतुष्टयम् ।
उत्पन्नं भावयेद् देवि स्थूलसूक्ष्मविभेदतः ॥
रूपाणां त्रितयं तद्वत् त्रिभी रेफैर्विभावितम् ।
प्रधानं तेजसो रूपं तद् बीजेन हि जन्यते ॥
विद्यास्थैश्चन्द्रबीजैस्तु स्थूलसूक्ष्मो रसः स्मृतः ।
सम्बन्धो विदितो लोके रसस्याप्यमृतस्य च ॥
वसुधाया गुणो गन्धस्तल्लिपिर्गन्धवाचिका ।
भुवनत्रयसम्बन्धात् त्रिधात्वं तु महेश्वरि ॥
अशुद्धशुद्धमिश्राणां प्रमातॄणां परं वपुः ।
क्रोधीशत्रितयेनाथ विद्यास्थेन प्रकाश्यते ॥
श्रीकण्ठदशकं तद्वदव्यक्तस्यापि वाचकम् ।
प्राणरूपस्थितो देवि तद्वदेकादशः परः ॥
एकः सन्नेव पुरुषो बहुधा जायते हि सः ।
रुद्रेश्वरसदेशाख्या देवता मितविग्रहाः ॥
बिन्दुत्रयेण कथिता अमितामितविग्रहाः ।
शान्तिः शक्तिश्च शम्भुश्च नादत्रितयबोधनाः ॥
वागुरामूलवलये सूत्राद्याः कवलीकृताः ।
तथा मन्त्राः समस्ताश्च विद्यायामत्र संस्थिताः ॥
गुरुक्रमेण संप्राप्तः सम्प्रदायार्थ ईरितः । इति ।

अस्यार्थः—यस्माद् व्यापकगुणा व्याप्येषु तिष्ठन्ति, तस्माद् व्योम्नो व्यापकस्य गुणः शब्दो वायुतेजोजलपृथिवीर्व्याप्य तिष्ठतीति पञ्चविधः शब्दो भवति। अतो विद्यास्थैः पञ्चभिर्व्योमबीजैर्हकारैः शब्दपञ्चकं लक्षयेदुपासकः। यतस्तत्तद् बीजं तत्तद्गुणविशिष्ट-तत्तद्भूतवाचकम्। मन्त्रे भूतवाचकत्वेनाक्षरान्तराणामनिर्देशात्। स्थूलो वायुगत एकः, सूक्ष्मा अग्न्यादिगतास्त्रय इत्येवं स्पर्शचतुष्टयमीकारचतुष्टयेन जातं विभावयेत्। वह्निवारिभूमिष्ठं रूपत्रयं रेफत्रयेण जातं विभावयेत्। विद्याबीजस्थैः सकारैर्जातं स्थूलं सूक्ष्मं च रसं चिन्तयेत्। अत्र द्वित्वेऽपि बहुत्वप्रयोगः, पादा मे सुकुमारा इत्यादिवत्। वसुधाया गन्धवत्या वाचकं बीजं लकारः, तेन लकारत्रयेण जातं भुवनत्रयस्य गन्धत्रयं विभावयेत्। अशुद्धाः प्रमातारो भेदधीमात्रसाराः शिवाहं भावभावना-विहीनाः सकलाः पशवः। शुद्धाः प्रमातारः पक्कमलविज्ञानाः शिवतन्मात्रसारा विज्ञान-केवलाः पशवः। मिश्राः प्रमातारः पुर्यष्टकसूक्ष्मशरीरमात्रसम्बन्धाः प्रारब्धकर्मानु-भवार्थमनेकयोनिषु संभूय तत्तत्कर्मफलानुभवेन कर्मद्वयसाम्ये सति सुपक्कमल-कर्माणो गुरुं विनाऽपि शिवानुग्रहशालिनः क्रियाज्ञानसाधारणाः प्रलयाकलाः पशव इद्दशानां प्रमातॄणां शरीरत्रयं ककारत्रयजन्यं ककारत्रयबोध्यञ्च जानीयात्।

ये वीरकर्मठभिन्ना अनन्ता जीवास्ते विद्यास्थेनाकारदशकेन वाच्याः। प्राणरूपो विराट् पुरुषो जीवसमष्टिरूपत्वात् स त्वेकादशेन विद्यास्थेनाकारेणोच्यते। नियतिः कालो रागो विद्या कला माया शुद्धविद्या ईश्वरः सदाशिवः शक्तिः शिवश्चे-त्येकादशतत्त्वानां वाचकानि विद्यास्थानि बिन्द्वक्षराणि नादाक्षराणि च। अत्र तत्त्वातीतविशेष्यकः सकलतत्त्वप्रकारकोऽभेदसंसर्गको बोधः, सप्तत्रिंशतः पदानां परस्परं सामानाधिकरण्येन लब्धः। सकलतत्त्वानां तत्तद्वर्णजन्यत्वन्त्वार्थिकोऽर्थः। तत्त्वानां वर्णानाञ्च कार्यकारणभावं विनाऽभेदान्वयानुपपत्तिनिरूपार्थापत्ति-लभ्यत्वादिति सम्प्रदायार्थः।

अथ निगर्भार्थः—शिवगुर्वात्मानो यस्मिन्नभेदेन गोचरास्तादृशबोधविषयोऽर्थो निगर्भार्थः। परमशिवे निर्गुणतां प्रथमोपस्थितवाग्भवकूटजन्यबोधविषयां संपाद्य स्वगुरोरपि तद्रूपत्वं द्वितीयकूटप्रतिपादितं निष्कलाभेदानुसन्धानदार्ढ्येन बुद्ध्वा तत्कृपाकटाक्षनिरीक्षणसामर्थ्येन स्वस्यापि निष्कलशिवात्मकत्वं तृतीयकूटप्रतिपादितं भावयेत्। तदेष हादिविद्यायां निगर्भार्थः। हादिविद्यायां हसशब्दो ह्रस्वपरः। छान्दसत्वेन रेफवकारयोर्लोपात्। ह्रस्वाः स्थूलरूपोज्झिताः। संस्कारात्मनैव स्थिताः

कलागुणादयो यस्मिन् स सकलः। द्वितीयकूटस्थप्राथमिकाक्षरत्रयं निष्कलब्रह्मपरमेव। तद् धलत्याकर्षति। अभेदेनानुसन्धत्ते, सोऽयं हसकलहो गुरुः। सोऽपि हल्लेखावाच्यः शिव एव, गुरोः शिवरूपत्वात्। तृतीयकूटे सकलपदमुपासकविशेषपरम्, सत्स्वात्मपरम्; सोऽपि हल्लेखार्थो निष्कल इति निगर्भार्थः। तदेतत्सर्वं योगिनीहृदयं समीक्ष्योक्तम्।

अथ कौलिकार्थः-श्रीचक्रम्, श्रीमाता, श्रीविद्या, श्रीगुरुः, आत्मा चेति पञ्चानामैक्यं कौलिकार्थं इत्युच्यते। तत्र त्रिभिर्लकारैस्त्रीणि चतुरस्राणि जातानि वाच्यानि च। चतुरस्रं भूमण्डलं प्रति जनकताया वाचकताया वा भूबीजे लकारे युक्तत्वात्। अत एव षोडशदलाष्टदलाग्नीषोमात्मकपद्मद्वयाङ्कितं वृत्तं जलमण्डलं प्रति जनकता वाचकता वा जलविशेषात्मकचन्द्रमण्डलबीजानां त्रयाणां सकाराणामुपपद्यते। प्रति हल्लेखं हकारो रेफः कामाख्यबिन्दुर्विसर्गाख्यबिन्दुद्वयमनुस्वारोऽर्धचन्द्रो रोधिनी-नादो नादान्तः शक्तिर्व्यापिका समना उन्मना इति चतुर्दशभिः संभूय द्विचत्वारिंशताऽक्षरैः शक्त्यनलात्मकं पञ्चशक्तयश्चत्वारो वह्नय इत्येवं नवयोन्यात्मकं चक्रं द्विचत्वारिंशत्त्रिकोणात्मकं जातम्।

अथवा हकारत्रयरेफत्रयेङ्कारत्रयैर्नवभिर्नवयोनिचक्रं जातम्। ककारत्रयेण कोणत्रयम्, हकारत्रयेण बिन्दुरिति। एवमिदं चक्रं देवताशरीरान्तर्भूतम्, अनेन प्रकारेण विश्वं मन्त्रमयं मन्त्राभिन्नं चेति। एवं चक्रदेव्योरैक्यम्।

चक्रादीनां प्रागुपदर्शितानामैक्यं कौलिकार्थः। तदुक्तं योगिनीहृदये—

> एवं विश्वप्रकारा च चक्ररूपा महेश्वरी।
> देव्या देहे यथा प्रोक्तो गुरुदेहे तथैव हि॥
> तत्प्रसादाच्च शिष्योऽपि तद्रूपः संप्रजायते।
> इत्येवं कौलिकार्थस्तु कथितो वीरवन्दिते॥ इति।

अथ सर्वरहस्यार्थः—सर्वरहस्यार्थः पूर्वोक्तसर्वार्थेभ्यो रहस्यम्, परप्राप्तिरूपत्वात्। तत्र यैषा कुण्डलिनी शक्तिः सा मदभिन्नेति मन्त्ररूपमहावाक्यजन्यः शाब्दबोधस्तद्विषयो रहस्यार्थः। कुण्डलिनीस्वरूपं तु दर्शितं योगिनीहृदये—

> मूलाधारे तडिद्रूपे वाग्भवाकारतां गते।
> अष्टात्रिंशत्कलायुक्तपञ्चाशद् वर्णविग्रहा॥
> विद्या कुण्डलिनीरूपा मण्डलत्रयभेदिनी।
> तडित्कोटिनिभप्रख्या बिसतन्तुनिभाकृतिः।
> व्योमेन्दुमण्डलासक्ता सुधास्रोतःस्वरूपिणी।
> सदा व्याप्तजगत्कृत्स्ना सदानन्दस्वरूपिणी।
> एष स्वात्मेति बुद्धिस्तु रहस्यार्थो महेश्वरि॥ इति।

अस्यार्थः—मूलाधारपद्मे विद्युन्निभे, वाग्भव एकारस्तदाकारे तद्वाच्ये च त्रिकोणे, यद्वा वाग्भवाकारतां गता ई इतिच्छेदेन ईकारवाच्यस्य त्रिकोणस्य लाभः। तत्र स्थिता एकारवाच्या कुण्डलिनी रूपा विद्या। ईकारे एकारस्य स्थितिश्चावयवेऽवयविनः स्थितिमभ्युपेत्य। सा च विद्या श्रीविद्यैव। सा चाष्टात्रिंशत्कलायुक्तपञ्चाशद्वर्णविग्रहा—तत्र वह्नेर्दशकला यकारादिदशवर्णवत्यः, सूर्यस्य द्वादशकलाः ककारादिचतुर्विंशतिवर्णवत्यः, सोमस्य षोडशकलाः षोडशस्वरवत्यः, एवमष्टात्रिंशत्कलास्तद्युक्ता पञ्चाशद्वर्णविग्रहा वैखरीरूपा मण्डलत्रयभेदिनी—मूलाधारे वह्निमण्डलमनाहते सूर्यमण्डलम्, आज्ञाचक्रे चन्द्रमण्डलं चेति त्रयं निर्भिद्य चिद्गगने द्वादशान्तोर्ध्वगते यदिन्दुमण्डलं तत्रासक्ता, तदा सङ्गेन जातं यत्सुधास्रोतोऽमृतलहरी तत्स्वरूपा। हः सूर्यः, सश्चन्द्रः, कोऽग्निस्तान् भिनत्ति हन्तीति—हसकहा सा—लहरी—लकारहरी चेत्यप्यर्थोऽवसेयः। इति द्वितीयकूटार्थः। अष्टात्रिंशत्कलायुक्तपञ्चाशद्वर्णविग्रहा—इत्यर्थस्तु हृल्लेखयोक्तः। 'सदा व्याप्तजगत्कृत्स्ना सदानन्दस्वरूपिणी' इति तु तृतीयकूटार्थः। अत्र कृत्स्नपदगम्यः सकलपदेनोपासक उच्यते। तत्सामानाधिकरण्येन प्रागुक्तस्वरूपायाः कुण्डलिनीशक्तेरुपासकस्य चाभेदो बोध्यत इति।

अथ महातत्त्वार्थः—अखण्डे महतो महीयसि, अणोरणीयसि इन्द्रियागोचरे भावनैकगोचरे परमसूक्ष्मस्य सर्वगस्य आकाशस्यापि जनके पारमार्थिकसद्रूपे चिदानन्दस्वरूपे षट्त्रिंशत्तत्त्वातीते षट्त्रिंशत्तत्त्वाऽभिन्ने च विश्वमये शिवे स्वाभेदस्य मनसा विभावनेन जीवशिवयोरैक्यसिद्धिर्महातत्त्वार्थः। ईदृशार्थस्याखण्डत्वेन तज्ज्ञानस्यापि निर्विकल्पकार्यविलक्षणविषयिताशालित्वेन तज्जनकस्य मन्त्रस्यापि तत्त्वमस्यादिवन्महावाक्यत्वेऽपि तस्मात् पदपदार्थविभागेन जायमानस्य ज्ञानस्य सखण्डत्वावश्यंभावेऽप्युपक्रमादिप्रमाणषट्कनिर्णीततात्पर्यानुसारेण सर्वपदलक्षणया पाश्चात्याखण्डार्थबोधकल्पनमपेक्ष्य परशिवोक्त्या तात्पर्यग्रहेण तादृशेऽखण्डेऽर्थेऽखण्डस्य मन्त्रस्यैव शक्तिरिति कल्पयितुं युक्तत्वाद् महातत्त्वार्थस्य प्रागुक्तस्वरूपस्य मन्त्रार्थत्वमुपपद्यते। इदञ्च भावार्थस्याक्षरार्थत्वकथनेनेतरेषामर्थानामक्षरारूढत्वानावश्यकत्वं परशिवेनैव ध्वनितम्। न चैवं सति संप्रदायार्थादीनामक्षरारूढतासंपादनप्रयासो व्यर्थ एवेति शङ्क्यम्। तेषामर्थादीनामखण्डत्वाभावेन तदावश्यकत्वात्। यद्यपि बहुपदार्थविशिष्टः सखण्डोऽप्यर्थो व्याप्त्युपाध्यादिपदैः प्रकृतिप्रत्ययाद्यर्थविभागमन्तरेणैव प्रतिपाद्यमानो दृष्टस्तेन न्यायेन निगर्भार्थादावखण्डस्यैव मन्त्रस्य शक्तिरिति सुवचम्, शक्तिग्रहश्च परशिववचनादेव, ईश्वरेच्छाया एवं शक्तित्वस्य तार्किकैरभ्युपगमात्। तेन कामराजलोपामुद्रयोः किं बहुना मनुचन्द्रादिभेदभिन्नानामेकैकं पञ्चाशतोऽपि मन्त्राणामेकार्थत्वं तत्तदुपासकामङ्गलोपाभावाश्च संगच्छते, तथापि संभवत्यक्षरार्थत्वेऽखण्डशक्तिकल्पनस्यान्याय्यत्वात्तथोक्तम्। न चैवं भावार्थस्यैवाक्षरार्थत्वमित्यभ्युपगमविरोध इति वाच्यम्। 'अक्षरार्थो हि भावार्थः केवलः परमेश्वरि' इत्यत्र केवलपदेन भावार्थस्तु केवलमक्षराणां वृत्त्यैव लभ्यः, अन्ये तु शब्दार्थापत्त्य-

र्थार्थापत्तिभ्याम्, व्यञ्जनया मानसा अप्यर्था यथायथं संभवन्तीति ध्वननादिति। महातत्त्वार्थरूपं परं स्वात्मतत्त्वमस्तीति केन प्रमाणेन नावसीयत इत्याकाङ्क्षाया-मुक्तं योगिनीहृदये—

तदा प्रकाशमानत्वं तेजसां तमसामपि।
अविनाभावरूपत्वं तस्माद् विश्वस्य सर्वतः।
प्रकाशते महातत्त्वं दीव्यक्रीडारसोज्ज्वले॥ इति।

अस्यार्थः—तमसां जडस्वभावानां घटादीनां तेजसां जडप्रकाशानां वृत्तिरूप-ज्ञानानाञ्च प्रकाशमानत्वम्, तत्तद्भावावच्छिन्नचैतन्यनिष्ठावरणभङ्गः, तदैव यदा ब्रह्मणः प्रकाश इति शेषः। 'घटमहं जानामि' इति ज्ञाने हि घटो जीवात्मा च वृत्तिरूपे ज्ञाने विषयः, सा वृत्तिस्तु ब्रह्मैकभास्या, ब्रह्म तु स्वप्रकाशमिति स्थितिः। तमेव 'भान्तमनुभाति सर्वम्' इति श्रुतेः। अत एव जानामीत्येवंरूपेण तमेव भान्तमनुभात्ये-तत्समस्तं जगदित्याचार्यभगवत्पादाः। तार्किकैस्त्वयं घट इत्येव घटज्ञानाकारः। 'घटमहं जानामि' इति तु ज्ञानमनुव्यवसायात्मकं भिन्नमेवेति स्वीक्रियते। औप-निषदैस्त्वनुव्यवसायेऽपि व्यवसायविषयविषयकत्वस्यावश्यकत्वे किमन्तर्गडुनाऽ-नुभवविरुद्धेन व्यवसायेन वृत्त्यतिरिक्तेन ज्ञानेनेति मन्वानैस्तदीयमनुव्यवसायमेव व्यवसायस्थानीयं स्वीकृत्य वृत्तिरूपज्ञानभासनं तु ब्रह्मणैवेति, नानुव्यवसायान्तरापेक्षाया अनवस्थाकलुषिताया अवकाश इत्यास्थीयते। उक्तञ्च तन्त्रराजे—

यज्ज्ञानमिदमोज्ज्ञानं यज्ज्ञानमहमस्तथा।
द्वयोरपि च यज्ज्ञानं तज्ज्ञानं विद्धि मे वपुः॥ इति।

एवं सति प्रतिज्ञातं ब्रह्म प्रकाशत एव। ततश्च यदा यदा ब्रह्मप्रकाशः, तदा तदैव विश्वप्रकाश इत्यविनाभावनियमाद् ब्रह्म विश्वाभिन्नम्। न चैतावता ब्रह्मविश्व-ज्ञानयोः कालिकव्याप्तिरेव सिध्येन्न विषययोरभेद इति वाच्यम्? ब्रह्मघटाभिन्नं घटज्ञानविषयत्वादित्यनुमानेन तस्यापि सिद्धेः। तदेतदत्र पद्ये सूचितमविना-भावरूपत्वमित्यनेन। किञ्चाविनाभावरूपत्वमपृथकत्वमभेदः। पद्ये सर्वत इत्यस्य शर्वत इत्यर्थः, सशयोरभेदात्। शिवेन सह विश्वस्याभेदरूपं महातत्त्वं दिव्यक्रीडा-रसोज्ज्वले साधकेऽपि प्रकाशते, दिव्या सर्वोत्तमा या क्रीडा उपासना तस्या रसेनोज्ज्वले निर्मलचित्त इति तदर्थात्। तदेवं सर्वेषां मन्त्राणां महातत्त्वार्थः परब्रह्मरूपः परमशिव एवेति स्थितमिति शम्॥

योगिनीचित्तमालम्ब्य षडर्थाः संप्रदर्शिताः।
मन्त्राणां तेन भगवान् प्रसीदतु परः शिवः॥



# समयाचारकौलाचारयोर्भेदः

श्रीव्रजनन्दनशास्त्री, दतियास्थपीताम्बरासंस्कृतपरिषन्मन्त्री ।

जयतु जयतु स्वामी देशिको वीतरागो
जयतु च वनखण्डी चन्द्रमौलेर्निवासः ।
जयतु जयतु पीठं देविपीताम्बराया
जयतु जयतु माता पीतवस्त्रा पराम्बा ॥

नानानिगमागमेषु निर्दिष्टा भारतीयसाधना संस्कृतिश्च लोकस्य भिन्नरुचित्वाद् विभिन्नाभिः श्रेयोप्रेयःपूरिताभिर्धाराभिरनेकरूपतां भजते । तेषां भिन्ना भिन्ना साधनासरणयः साधकैराचारशब्देनाभिधीयन्ते । आगमेषु साधकानामभ्युदय-निःश्रेयससिद्ध्यर्थं समयाचारकौलाचारवीराचारादय आचाराः समुपवर्णिताः । भगवता परमकारुणिकेन सर्वविद्याकरेण श्रीशङ्करेण शिवां प्रति पूर्वं तावत् समयाचारशब्दो व्याख्यायते । समयशब्दस्त्वनेकार्थवाची श्रीललितासहस्रनाम-भाष्ये श्रीभास्कराचार्येण समयाचारतत्परेति नाम व्याख्यावसरे प्रतिपादितं यद् दहराकाशे चक्रभावनया या पूजा क्रियते, सैव समयपदवाच्या । समयाचार-प्रतिपादकानां वशिष्ठ-शुक-सनक-सनन्दन-सनत्कुमारैर्विरचितानां पञ्चशुभागमसंहिता-ग्रन्थानां समयशब्देनाभिधानम् । साम्यशब्दोऽप्यस्य पर्यायवाची । इत्थं च शक्ति-शिवयोः साम्यमेव समयः, तदनुसारञ्च समया श्रीभगवती समयश्च शङ्करः । साम्यं तु पञ्चविधमेव–अधिष्ठानम् , अनुष्ठानम् , अवस्थानम् , नाम रूपं चेति ।

( १ ) अधिष्ठानं पूजाधिकरणं चक्राद्यर्चनम् ।

( २ ) अनुष्ठानसाम्यं सृष्ट्यादिकृतम् ।

( ३ ) अवस्थानं नृत्यादिकाः क्रियाः ।

( ४ ) नामसाम्यं भैरवादिः ।

( ५ ) रूपसाम्यमारुण्यादयः ।

अन्यच्च रुद्रयामलीयदशपटलेपूपदृष्ट आचारोऽपि समयाचारत्वेन ग्राह्यो भवति । षड्विधैक्यानुसन्धानरूपे महावेधसंस्कारे मूलाधारान् षट् चक्रान् भेदयित्वा

सहस्रदलकमलप्राप्तायाः पराशक्तेः कुण्डलिन्याः पुनराधारचक्रावरोहणकालोऽपि समयपदभाक्।

ललितात्रिशत्यां सनकादिमुनिध्येयेति नाम्ना समयाचारस्यैव ग्रहणं ज्ञेयम्। "कुलकुण्डालया कौलमार्गतत्परसेविता" इति व्याख्यावसरे श्रीभास्कररायाचार्यस्यायमाशयो यच्छ्रीविद्योपासनायां समयकौलमिश्राख्यं मतत्रयं सम्मतम्। शुकादिपञ्चशुभागमोक्तो वैदिकमार्गानुसारी य आचारः स एव समयाचारः। चन्द्रकुलादिभिरष्टतन्त्रैः प्रतिपादितं मतं मिश्रमतम्।

एतानि तन्त्राणि कुलाचारं समयाचारं चानुसरन्ति। समयाचारनाम्न एकस्य तन्त्रग्रन्थस्याप्युपलब्धिः, तत्र पूजासङ्केत एव समयशब्दवाच्यः विजयादिद्रव्याणां ग्रहणं समयपदेन संभाव्यते।

इत्थं समयशब्दस्यानेके अर्था भवन्ति। तेष्वर्थेषु पञ्चशुभागमोक्त आचार एव प्रधानतमत्वेन ग्राह्यः।

दौर्भाग्यान्नोपलभ्यन्ते पञ्चशुभागमाः। सौन्दर्यलहर्या लक्ष्मीधराटीकायामेव तद्विषयकाणि प्रमाणानि समुद्धृतानि। सम्प्रति हि सैव टीका समयाचारस्याधारभित्तिः। वेदान्तसूत्राणां शाक्तभाष्ये प्रथमाध्याये समयाचारस्य निरूपणमपि लक्ष्मीधराटीकानुसारि।

श्रीपुराणसंहितायामपि सनत्कुमारसंहितानामके प्रकरणे नागमविषयलेशोऽपि। अचार्यप्रवरैः श्रीगौडपादाचार्यैः सुभगोदयनामा ग्रन्थो व्यरचि। तमुद्दिश्यैव भगवत्पादेन श्रीशङ्कराचार्येण सौन्दर्यलहरी प्रणीता। तत्सम्प्रदायस्थितैवैषा लक्ष्मीधराटीका समयाचारमित्थं विवेचयति—

अष्टमश्लोकस्य टीकायां श्रीचक्रस्योभयप्रकारकं पूजनं बाह्याकशदहराकाशभेदात्। भूर्जस्वर्णादिपट्टेषु यन्त्रं निर्माय तत्र सावरणं परदेवतायाः यजनं बाह्याकाशपदेन गृह्यते। अयमेव कौलाचारः। हृत्कमलेषु चक्रपूजैव समयाचारः। सा सहस्रदले विशेषरूपेण भवति। विभिन्नकामनापरैः साधकैरन्यचक्रेष्वपि समयचारमवलम्ब्य पूजा विधीयते। कादिठान्तवर्णैर्युते हृदयकमले समाराधिता श्रीसुन्दरी सर्वानभीष्टान् प्रददाति भक्तेभ्यः। होमतर्पणयोरपि तत्र विधानं सम्यगरूपेण परिलक्ष्यते। किमन्यद् भोगमोक्षयोः प्राप्तिरपि हृदयाकाशपूजयैव। कौलाचारमते

श्रीचक्रान्तर्गतत्रिकोणमध्यस्थबिन्दौ पराशक्तेः पूजनं भवति। अयमेव पूर्वकौलाचारः, उत्तरकौलास्तु प्रत्यक्षसुन्दरीशक्तेर्योनिपूजनं कुर्वन्ति। इत्थं श्रीचक्रयजनं प्रत्यक्षसुन्दरीपूजनं च द्विप्रकारकी कौलपूजा। मिश्रकौलपूजनं बाह्यमाभ्यन्तरं चाधारचक्रस्थितायाः कुलकुण्डलिन्याः समाराधने रूढः कौलशब्दः। अत एव तैरुपासिता श्रीभगवत्यपि कौलिनीत्युच्यते। अत्र प्रत्यक्षमपञ्चकं ग्राह्यम्। समयाचारे मानसिकेन मपञ्चकेन पूज्यते पराशक्तिः। समयमते सहस्रदलकमलान्निर्गतायाः सुधायाः पानमेव मद्यम्। कामक्रोधादीन् पशून् ज्ञानखड्गेन घातयित्वा तेषां मांसभक्षणं मांसम्, इन्द्रियनिरोधो मत्स्यः, आशातृष्णादयो मुद्रा, मनसः सुषुम्णया योग एवात्र मिथुनीभावः, दक्षिणमार्गे मपञ्चकमित्थम्—मननं मन्त्रो मनो मौनं मुद्राश्च। तथा च वाममार्गीयमपञ्चकानामनुकल्पेनापि समाराधनं पराम्बायाः पराशक्तेः पूजायां मपञ्चकस्य महती समुपयोगिता वर्तते। ब्रह्मानन्दस्याभिव्यञ्जकाः पञ्चमकाराः। तदुक्तं कल्पसूत्रे—"आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम्, तस्याभिव्यञ्जकाः पञ्चमकारा एतैरर्चनं गुप्त्या प्राकट्यान्निरयः, परन्तु गुप्तरूपेणैव समाराधनं श्रेयस्करम्। प्रकटरूपेण मपञ्चकप्रयोगस्य केचिद् विद्वांसो निन्दां कुर्वन्तो वेदमार्गाद् बहिर्भिन्नं ह्ययं मार्गं च वदन्ति, तदलीकमेव। श्रीत्रिपुरामहोपनिषदि द्वादश्या ऋचाभ्युक्तम्—"परिस्रुतं झषमाद्यं पलं च" श्रीलक्ष्मीधरेणापि पञ्चमकारविरोधे वहु प्रलपितं समालोचितं च। कौलानां सामयिकानां चायमेव विरोधो वेदेऽपि संदृश्यते—

न यातव इन्द्रजूजुवुर्नो न वन्दना शविष्ठवेद्याभिः सशर्धदर्यो।
विषुणस्य जन्तोर्मा शिश्न देवा अपितु ऋतं नः॥ (ऋ० सं० ५-३-३-५)

अस्मिन् मन्त्रे "शिश्नदेवा" इति पदं कौलाचारं सङ्केतयति। शिश्नपदं तु सामान्यतः पुल्लिङ्गद्योतकम्। किन्तु श्रीबालमुकुन्दवक्शीभिर्निरुक्तविवृतौ स्त्रीपुरुषयोर्द्वयोः प्रतीकं प्रतिपादितम्। पाश्चात्यविद्वद्भिरस्य पदस्यार्थो बहु विदूषितः। परन्तु यास्काचार्येण "शिश्नदेवा" इति पदं "अब्रह्मचर्या" इति व्याख्यातम्। तेन सपत्नीकाः साधकाः सर्वप्रकारेण पूजाधिकारिण इति संसिद्ध्यति, तन्नान्येषामभिमतम्। एष एव विरोधः पौराणिककाले दक्षयज्ञादिप्रसङ्गेषु शैववैष्णवकलहरूपेण परिणतः।

मपञ्चकस्य प्रत्यक्षग्रहणं लक्ष्यीकृत्यैव दोषारोपणस्यावसरो कौलेषु प्राप्तो धर्मतत्त्वज्ञानविहीनैर्यथार्थस्तु कौलधर्मो वेदविहितो वैधानिकश्च, नात्र सन्देहलेशोऽपि। यदि चेन्मपञ्चकमवैधं मन्येत, तदा तु विधिवाक्यानामनेकानां परित्यागो भविष्यति, बहुषु वैदिकयज्ञेषु कौलाचारस्योपलब्धत्वात्। तथा च ब्राह्मणग्रन्थेषु सूत्रग्रन्थेषु पूर्वमीमांसायामुपनिषत्सु च मपञ्चकस्य वैधता स्वीकृता केवलं साधनाव्याजेनेन्द्रियलौल्याद् मकाराणां सेवनं सर्वथा गर्ह्यम्।

महामहिमवत्याः श्रीविद्यायाः समाराधने श्रीचक्रार्चनमतीवोपयोगि यन्त्रं देवतायाः शरीरं मन्त्रश्चात्मा। कौलाचार-समयाचारयोर्मते यन्त्रोद्धार इत्थम्—

बिन्दुत्रिकोणवसुकोणदशारयुग्मं मन्वस्रनागदलशोभितषोडशारम्।
वृत्तत्रयं च धरणी सदनत्रयं च श्रीचक्रमेतदुदितं परदेवतायाः ॥

इदमेव नवावरणात्मकं श्रीचक्रस्य रूपम्। अस्य लेखनप्रकारा बहवः, गहनतमोऽयं विषयः। अत्र तु केवलं समयाचारकौलाचारमतानुसारं लेखनरीतिः पूजनक्रमश्च निर्दिश्यते। यन्त्रार्चने मुख्यतो द्वौ क्रमौ—सृष्टिः संहारश्च। तत्राद्यः समयाचारमनुसरति, द्वितीयस्तु कौलाचारम्। श्रीचक्रान्तर्गतत्रिकोणस्थबिन्दौ परदेवता-पूजनानन्तरं क्रमशः त्रिकोणाष्टकोणदशारयुग्मचतुर्दशाष्टषोडशदलभूपुरेषूत्तरोत्तरं विकासमयं पूजनं सृष्टिक्रमानुवर्तिनां समयाचारावलम्बिनाम्, कौलानां तु बिन्दुत्रिकोण यजनानन्तरं भूपुरादारभ्य क्रमशो बिन्दुपर्यन्तं नवावरणानां क्रमिकपूजनं संहार-क्रमनुवर्तते।

प्रसिद्धमेव तत्र तन्त्रेषु यन्नवभिः त्रिकोणैः श्रीचक्रस्य निर्माणं भवति। तेषु पञ्चकोणाः शक्तेः शिवस्य च चत्वारः। शिवत्रिकोणा अधोमुखाः शक्तित्रिकोणाश्चोर्ध्व-मुखा भवन्ति समयाचारे, कौलाचारे तु पञ्चशक्तत्रिकोणा अधोमुखाश्चत्वारः शिवत्रिकोणाश्चोर्ध्वमुखाः। इदमेव क्रमवैपरीत्यं समयकौलयोः। इदं तु प्रसिद्धमेव यदेकतश्चत्वारः, एकतः पञ्च। इत्थं त्रिकोणानां सम्मेलनेन शिवशक्त्योर्विग्रहीभूतं श्रीचक्रम्। नवचक्रेषु त्रिकोणाष्टकोणदशारयुग्मचतुर्दशाराख्यानि पञ्चशक्तिचक्राणि। तथा च बिन्द्वष्टदलषोडशदलचतुरस्राणां शिवचक्रं नाम। एषां चक्राणां परस्परं सम्बद्धत्वाच्छिवशक्त्योरविनाभावेन श्रीचक्रस्य संस्थितिः।

चक्रोक्तदेवतानां निरूपणमादितन्त्रराजदक्षिणामूर्तिसंहितादिग्रन्थेषु सविस्तरं प्रपञ्चितम्, अत्र तु केवलं निर्देशमात्रम्। इत्थं चक्रराजस्य पूजने समयाचारिणः सृष्टि-क्रममाश्रयन्ते कौलाश्च संहारक्रमम्।

तथा च सहस्रारे यद्बिन्दोः स्थानं तदेव चन्द्रमण्डलत्वेन सुधासिन्धुत्वेन च योगिभिर्व्यवह्रियते। तत्रैव श्रीचक्रं विभाव्य समयाचारिणो योगिनः स्वेष्टदेवतां समाराधयन्ति। अस्मिन् मते तत्रैव महाशक्तेः कुण्डलिन्या निवासः, नाधस्तनाधारे सहस्रारादेव महाशक्तिरधोऽवरोहति। एषैवावरोहणक्रमः श्रीशङ्कराचार्येण सौन्दर्यलहर्यां प्रदर्शितः। अयमेव श्रौतक्रमः "ऊर्ध्वमूलमवाक्शाख एष अश्वत्थः सनातनः" ऊर्ध्वमूलशब्देनात्र सहस्रारस्यैव निर्देशः। अस्यैव 'परमव्योमसंज्ञा'।

कौलास्त्वाधारचक्रस्थितां स्वयम्भूलिङ्गवेष्टितां कुलकुण्डलिनीं प्रबोध्य क्रमश-श्चक्रेषु प्रकाशयन्तीं सहस्रारे आरोहणं मन्वते।

इत्थं समयावलम्बिनोऽवरोहणक्रममाश्रयन्ते कौलाश्चारोहणक्रममिति ॥



# श्रीदेवीपूजाप्रकारः

श्री ए० नटराज अय्यरः, मद्रपुरीस्थः।

मद्रपुर्यां गुहानन्दमण्डलीति विश्रुता श्रीविद्योपासकानां सभा काचिद् वर्तते। तस्या अध्यक्षाः श्रीचिदानन्दनाथा इति दीक्षानामाङ्किताः श्री एन्० सुब्रह्मण्यार्याः ते श्रीगुहानन्दनाथावधूतेभ्यो लब्धदीक्षा दक्षिणदेशे श्रीविद्याविषये तन्त्रशास्त्रेषु च पारङ्गताः श्रीकामकोट्यादिमठाधिपैरपि बहुमानिता अभूवन्। ते च त्रिंशद्वर्षात् पूर्वं श्रीविद्योपासकानुद्दिश्य एतां सभामारब्धवन्तः। दाक्षिणात्यश्रीविद्यासपर्या-विधावतीवनिष्णातास्तेषां शिष्या बहवो दक्षिणदेशे वर्तन्ते।

श्रीचिदानन्दनाथैः श्रीगौडपादकृतश्रीविद्यारत्नसूत्रव्याख्यातृभिः प्रदर्शितरीत्या श्रीविद्यासपर्या निदिध्यासनरूपेति मतमवलम्ब्य पूजादिकं समस्तमप्यद्वैतशास्त्रानु-सारेणैव व्याख्यातमुपदिष्टं च। गुरुमुखाद् अद्वैतशास्त्रोपदेशप्राप्त्यानन्तरमपि साक्षात्कारो यदि न भवति तदाकृतोपासकतया भवितव्यम्। तदुपासनाबलादेव प्रतिबन्धकनिवृत्तिद्वारा सर्वं साधयितुं शक्यते। तद्विधोपासनेषु श्रीविद्यासपर्यैव सन्निहिततमेति चिदानन्दनाथानामाशयः। एतदनुसृत्यैव बहवो ग्रन्था अत्रभवद्भिर्लिखिताः। एवंविधाद्वैतवासनापूर्विका सपर्यैव परापरपूजेति मध्यमाधिकारिणामुपदिष्टवन्तः। अनधिगतवेदान्तशास्त्राणामपरपूजाप्युपदिष्टा। तादृश्यपरपूजादार्ढ्येन चित्तशुद्धिं सम्पाद्येह जन्मनि जन्मान्तरे वा परापरपूजायां योग्यता भवतीति तेषामाशयः।

श्रीचिदानन्दनाथैर्लिखितेषु पुस्तकेषु सपर्यापद्धतिर्नित्याह्निकं च संस्कृत-भाषायां वर्तेते, अन्ये द्राविडभाषायां सन्ति। श्रीविद्यावासनाविमर्श इति ग्रन्थमात्र-माङ्गलभाषयाऽनूदितो भवति। एतेषु ग्रन्थेषु यथाऽद्वैतवासनापूर्वकपूजैव विशेषतः कार्येति स्वमतं सम्यगुपपादितं भवति। सपर्यागतपूजा मन्दिर-प्रवेशमारभ्य उद्वासनापर्यन्तं गतानां खण्डानामेकैकशोऽद्वैतभावनाविधिः सम्यक् प्रतिपादितो भवति। अन्यग्रन्थेष्वप्येतदेवोद्घोषितम्। एवंविधं मतं कथं निर्दिष्टमिति स्थालीपुलाकन्यायेन ग्रन्थेभ्य उद्धृत्य लिख्यते।

'गुरुतत्त्वविमर्शः' इत्याख्ये ग्रन्थे गुरुपादुकामन्त्रार्थः प्रतिपादितः। तत् संक्षिप्येणोच्यते—

तारत्रयकुमारीं सेहं हंसः शिवाख्यमनुयुक्ताम्।
द्वादशबीजैर्लक्ष्यां श्रीगुहनाथस्य पादुकां वन्दे ॥

एतत् स्वकृतगुरुपादुकास्तोत्रादुद्धृतम्। अस्मिन् श्लोके गुरुपादुकामन्त्रस्वरूपं निरूपितं भवति। तत्र तारत्रितयविमर्शप्रणवत्रयं कुमारीति बालाबीजत्रयम् 'हंसः शिवः सोहं, सोहं हंसः शिवः, हंसः शिवः सोहं हंसः' इति महावाक्यत्रयम्, हंसखफ्रेंहसक्षमलवरयूं इति बीजानां द्वादशकम्। एतेषां मेलनेन पादुकामन्त्रो भवति। विमर्शप्रणवानां वाच्यार्थस्त्वंपदवाच्यार्थ एव। तेषां लक्ष्यार्थस्तु कूटस्थस्वरूपप्रत्यगात्मा। विमर्शप्रणवानां पञ्चकं क्रमेण जाग्रत् स्वप्न-सुषुप्ति-तुरीय-तुरीयातीतदशास्वभिमानिनो विश्वतैजसप्राज्ञसाधकारूढा भवन्ति। साधारणतो जनानां जाग्रदादित्रयमेव ज्ञातं भवति। तस्मात् तारत्रयग्रहणमेव पादुकामन्त्रे उक्तम्। प्रणवानामर्थ एवं प्रतिपाद्यते—ऐं इति वाग्भवबीजः सकलवेदात्मकः। वेदैस्तत्पदवाच्यस्य परमेश्वरस्य विमर्शः क्रियते जाग्रदभिमानिना द्वैतवृत्तिसहितेन विश्वपदाभिदायिना जीवेन। ह्रीं इति द्वितीयेन बीजेन स्वप्नदशाभिमानिना तैजसाभिधानेन साक्षिवृत्त्या कल्पिताग्नीषोमात्मकभोगभोग्यभोक्तृरूपस्वप्नप्रपञ्चविमर्शो निरूप्यते। हकारस्य शिवरूपत्वात् सोमस्वरूपहकारस्यार्थः। रकारोऽग्निस्वरूपः। अनयोरर्हंकाररेफात्मकाग्नीषोमयोः सामरस्यरूपप्रकाशविमर्शात्मककामकलास्वरूपम् ईंकारेण प्रतिपादितं भवति। 'श्री' इति तृतीयेन बीजेन सुषुप्त्यभिमानिना पाशेन स्वस्यानन्दस्वरूपस्य विमर्शनं सूचयति। शं सुखं राति ददाति ईं शुद्धकुण्डलिनीरूपमहंपदलक्ष्यार्थमानन्दमिति श्री। एवं सर्वबीजैः महावाक्यार्थः प्रतिपादितः। तदनन्तरं कुमारीबीजत्रयमुच्यते—तत्र ऐं इति प्रथमवर्णेन तत्पदलक्ष्यार्थः, क्लीं वर्णेन त्वंपदलक्ष्यार्थः, शक्तिबीजेन असिपदलक्ष्यार्थो निर्दिष्टा भवन्ति। तस्माद् बीजत्रितयेन महावाक्यार्थः सूचितः।

'हंसः शिवः सोहम्' इत्यादिमहावाक्यत्रयं स्वरूपनिरूपणहेतव इति सम्प्रदायवाक्यैः संयोज्य स्वपरमपरमेष्ठिगुरुपादुकामन्त्रेषु घटितं भवति। तस्मात् सर्वमपि महावाक्यार्थमेव।

द्वादशबीजेषु प्रथमचतुष्टयसम्मेलनेन खेचरीबीजं भवति। खे ब्रह्मणि चरतीति खेचरी। हकारेण परमेश्वरः, सकारेण शक्तिः, खकारेण शुद्ध-ब्रह्म च निर्दिष्टा भवन्ति। शुद्धब्रह्म च तत्त्वंपदलक्ष्यार्थयोरैक्यभावनया जातानुभवरूपज्ञानं सूचयति। फ्रेंबीजगतफकारो वामभाव्यसूचनाद् निवृत्तिज्ञानं रेफ ऐक्यविमर्शनम् एंकारः, आधाररूपसत्तास्फूर्तिं निरूपयन्ति। तस्मात् खेचरीबीजः प्रकाशविमर्शरूपब्रह्मस्वरूपमतद्व्यावृत्तिरूपनिवृत्तिद्वारेण प्रतिपादिवाखण्डाकारवृत्त्या जगज्जीवब्रह्मैक्यं बोधयति।

अवशिष्टाष्टबीजसम्मेलनेन आनन्दभैरवबीजं भवति। आनन्दभैरवगतबीजा एव नवनाथबीजा इत्युच्यन्ते नवनाथा गुरवः। ते अज्ञाननाशनेनात्मज्ञानं बोधयन्ति। तस्मात् ते ज्ञानरूपिणः श्रुतिरूपिणश्च, श्रुतयः शब्दप्रभवाः। शब्दश्चाकाशगुणकः। आकाशश्च भूतचित्तचिदाकाशा इति त्रिधा भवति। ते क्रमशः कण्ठभ्रूमध्यसहस्रारेषु गृह्यन्ते। भूताकाशशब्दार्थौ द्वैतवृत्त्या, चित्ताकाशशब्दार्थः साक्षिवृत्त्या, चिदाकाशशब्दार्थोऽखण्डाकारवृत्त्या गृह्यते। चिदाकाशोऽप्युपाधिवशाद् नवधा भिद्यते। ते च क्रमेणाज्ञाचक्रादूर्ध्वं सहस्रारपर्यन्तप्रदेशे वर्तन्ते। बिन्दु-अर्धचन्द्राद्युन्मन्यन्तानेतान् नवसूक्ष्मोपाधीनधिष्ठाय शिवतत्त्वस्वरूपाखण्डाकारवृत्तिभूतजीवब्रह्माभेदबोधकापरोक्षज्ञानप्रदायकमहागुरुः प्रकाशते। एतैरुपाधिभिर्युता एव नवनाथाः। एषु नवमा उन्मनी मनोवागतीतत्वात् समनास्थानेन संयुज्यते। तस्मादष्टधाभूतचिदाकाशो हसक्षमलवरयूं इति बीजाक्षरैर्निर्दिष्टो भवति। एवमष्टविधाखण्डाकारवृत्तिभिस्तुरीयातीतप्रणवभूतखेचरीबीजगतवर्णचतुष्टयैः सह द्वादशबीजा भवन्ति। एतेषामुपरि मूलाक्षरमध्ये ऐक्यं गता एव परमहंससंन्यासिनो जीवन्मुक्ताश्च। तस्मादर्थज्ञानपुरस्सरं गुरुपादुकामन्त्रस्मरणेन वेदान्तविचारः संग्रहेण क्रियते।

'श्रीविद्यासपर्यवासनाविमर्शः' इति ग्रन्थे श्रीललितात्रिपुरसुन्दर्याः सपर्यागतैकादशखण्डानां वासना सविस्तरं निरूपिता। श्रीचिदानन्दनाथानां ग्रन्थेष्वेष एव मुख्यतमो भवति। अत्र प्रतिपादितविषयेभ्य एतदुद्ध्रियते—

बिन्द्वादिभूपुरान्तानि नवचक्राणि भैरवि।
ईक्षणादिप्रवेशान्ता सृष्टिरीशेन निर्मिता॥

चतुरस्रादिबिन्द्वन्तनवचक्राणि सुन्दरि ।
जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः ॥

इति शिवदृष्टिवचनबलेन श्रीचक्रस्याऽध्यात्मवासनोपदिष्टा भवति। तत्र बिन्द्वादिभूपुरान्तानां चक्राणां वासना भावनोपनिषदि सम्यग् निरूपिता । चतुरस्रादि-बिन्द्वन्तजीवकृतप्रपञ्चो विस्तरेण नोक्तः कुत्रापि। तच्चिदानन्दनाथैः सप्रमाणं सम्यक् प्रतिपादितमस्मिन् ग्रन्थे विस्तरभयात् किञ्चिदुद्ध्रियतेऽधुना ।

मन एव श्रीचक्रम्। नवचक्राणि मनोवृत्तयः। तदधिष्ठात्री वृत्तिप्रतिबिम्बित-चिच्छक्तिरेव। एतत्सर्वं वेदान्तशास्त्रेऽङ्गीकृतदृष्टिसृष्टिवादानुगुण्येन वर्तते। जीवस्य दृष्ट्यनन्तरं सृष्टिरित्यङ्गीकारेण मनसः प्राबल्यं निरूपितम्। मनोवृत्तिप्रतिफलित-चिच्छक्तिरेव तत्तच्चक्रेश्वर्यः। एतन्मतं प्राचीनग्रन्थेष्वपि निर्दिष्टम्।

"विश्वविषयस्फूर्तिजनिका या मनोवृत्तयः, ता एव क्रमेण चतुरस्रादिबिन्दुं चक्रान्तक्रमेण विद्यमानाः शक्तयो ज्ञेयाः।"

करणेन्द्रियचक्रस्थां देवीं संवित्स्वरूपिणीम् ।
विश्वाहङ्कृतिपुष्पैस्तु पूजयेत् सर्वसिद्धये ॥ इति ।

एतत्समस्तमनन्तानन्दनाथैः संक्षिप्य श्रीविद्यागद्यकाव्ये उक्तम्। तदत्र गृह्यते ।

(१) त्रिपुराचक्रे श्रीप्रकटयोगिनीयुतजाग्रद्दशासाक्षिचिच्छक्तिः ।
(२) गुप्तयोगिनीयुतत्रिपुरेशीचक्रेशी स्वप्नदशासाक्षिचिच्छक्तिः ।
(३) गुप्ततरयोगिनीसहितत्रिपुरसुन्दरीचक्रेशी सुषुप्तिदशासाक्षिचिच्छक्तिः ।
(४) सम्प्रदाययोगिनीयुतत्रिपुरवासिनीचक्रेशी ईश्वरविचारवृत्त्यधिष्ठातृ-चिच्छक्तिः ।
(५) कुलोत्तीर्णयोगिनीयुतत्रिपुराश्रीचक्रेशी गुरूपसदनाकारवृत्त्यारूढ-चिच्छक्तिः ।
(६) निगर्भयोगिनीयुतत्रिपुरमालिनीचक्रेशी श्रवणवृत्त्यारूढचिच्छक्तिः ।
(७) रहस्ययोगिनीयुतत्रिपुरासिद्धाचक्रेशी मननवृत्त्यारूढचिच्छक्तिः ।
(८) अतिरहस्ययोगिनीयुतत्रिपुराम्बाचक्रेशी निदिध्यासनवृत्त्यारूढचिच्छक्तिः ।
(९) परापरातिरहस्ययोगिनीमहात्रिपुरसुन्दरी सविकल्पसमाधिवृत्त्यारूढ-चिच्छक्तिः ।

प्रमाणवचनानि विस्तरभयान्नोक्तानि।

अस्मिन्नेव ग्रन्थे सामान्यविशेषार्घ्ययोर्वासना विस्तरेण निरूप्यते। श्रीविद्या-सपर्या श्रीचिदानन्दनाथस्य मते मननिदिध्यासनरूपज्ञानयज्ञः। सपर्यायां प्रयोज्यानि तीर्थान्यर्घ्यद्रव्याणि च ज्ञानसाधनानि ज्ञानप्रतिनिधयो वा भवितुमर्हन्ति। "आपो वा इदं सर्वम्", "ओमापो ज्योतीरसोऽमृतं ब्रह्म" इत्यादिश्रुतिवाक्यानि पूजाद्रव्यभूतजलं ज्ञानस्यैव प्रतिनिधिरिति प्रतिपादयन्ति।

वर्धनीकलशप्रतिष्ठायां "कलशस्य मुखे विष्णुः" इत्यादिवाक्यैरभिमन्त्रणं क्रियते। वेदवेदाङ्गान् अपरा विद्या इत्युपनिषदुद्घोषयति। ब्रह्मविष्ण्वादयः कार्यरूपाः। तस्माद् वर्धनीकलशजलमपराज्ञानरूपं भवति। अपराज्ञानं हि जगज्जीवपरयोर्ज्ञानम्। एवंविधा अपरा ज्ञानविचारणद्वारा पराज्ञानस्य जिज्ञासा जायते। विचारणया खलु मनोनैर्मल्यं भवति। निर्मलमनसा यथार्थज्ञानस्य स्वरूपं निर्धार्यते। यथार्थज्ञानं तु सामान्यज्ञानं विशेषज्ञानमिति द्विप्रकारं भवति। 'इदं जगत्' इति ज्ञाने इदंपदेन सामान्यज्ञानम्, जगत्पदेन विशेषज्ञानं च गृह्यते। 'इदं जगत्' इति ज्ञाने नामरूपात्मकजगतो ज्ञानमयथार्थविशेषज्ञानं मायिकत्वात्। विचारणया यदाज्ञानं नाशितं भवति, तदेदं ब्रह्म इति ज्ञानं जायते। अज्ञाननाशानन्तरमपीदन्ता समस्त्येव। एतदेव सत्तासामान्यमित्युच्यते। एवंविधसामान्यविशेषरूपज्ञान एव सामान्यविशेषरूपावर्घ्यौ भवत इति महर्षीणामभिमतम्, तस्मादपराज्ञानगतनामरूपांशनिरसनेन जातमिदन्तारूपमधिष्ठानज्ञानं शङ्खगतसामान्यार्घ्यं भवति। एषा इदन्ता आत्मगोचरवृत्त्या यदा सच्चिदानन्दरूपविमर्शशक्त्यभिन्नः शिव इति ज्ञानं विशेषज्ञानं भवति, तदेव विशेषार्घ्यम्। एवंविधज्ञानं शुद्धसत्त्वप्रधानेऽन्तःकरणे जायते। तस्मात् पात्रस्थापनार्थं लिखितमण्डलं पात्राधारः पात्रं च मनसो विविधपरिणामानीति विस्तरतो वासनाग्रन्थे प्रतिपाद्यते। तस्माज्जीवजगतोऽशुद्धोपाधिभागस्याखण्डस्याखण्डैकरसविशेषार्घ्येण शोधनमेव तर्पणस्य रहस्यार्थः।

मन्त्रपुष्पानन्तरं कामकलाध्यानं विधीयते। कामकलास्वरूपमस्मिन् ग्रन्थे साधारणत उच्यते, विशेषतस्तु कामकलाविलासव्याख्यायां द्राविडभाषया प्रतिपादितम्। 'कामकला' इति पदमपि मन्त्ररूपेण गृह्यते सपर्यापद्धतिग्रन्थे। तद्विमर्शश्चा-

त्रैवोक्तः। 'कामकला' इति पदगतवर्णानां विभागः क्रियते—( क्+अ+अ ), ( म्+अ ), ( क्+अ ), ( ल्+अ+अ )।

क्=माया, अ=तदवच्छिन्नं चैतन्यमीश्वरः, अ= अशुद्धं चैतन्यम्, म्= अविद्या, अ= तदवच्छिन्नं चैतन्यं जीवः। मायावच्छिन्नं चैतन्यम्, अविद्यावच्छिन्नं चैतन्यं च शुद्धचैतन्यमेव। क्= आकाशम्, अ+तदुपहितचैतन्यम्, ल्=पृथ्वी, अ= तदुपहितचैतन्यमशुद्धचैतन्यम्। पृथिव्याद्याकाशान्तः परिदृश्यमानः सर्वः प्रपञ्चो ब्रह्मैव। एवं कामकलापदमेव महावाक्यबोधकं भवति। एवंविधवासनाज्ञानेन सर्वे मुमुक्षवोऽहंब्रह्मोपासनां कृत्वा कृतार्था भवेयुरिति कृत्वा श्रीचिदानन्दनाथै-रुपासकानुद्दिश्य बहवो ग्रन्था लिखिताः। ते सर्वे द्राविडभाषायां वर्तन्ते। मन्दाधि-कारिणस्तु निष्कामनया पूजां कुर्वन्तः क्रमेण चित्तशुद्धिं प्राप्य वेदान्तविचारं कुर्युरिति मन्त्रादिषु पूजायां चानुगृहीता एव।

दक्षिणदेशे वर्तमानपूजाविषयं प्रति किञ्चिदुच्यते। अशीतिसंवत्सरात् पूर्वं कालहस्तीसमीपस्थकार्वेटनगरराज्ये मूर्धाभिषिक्तराजानो द्राविडकर्णाट-कान्ध्रदेशेषु निवसतः प्रसिद्धोपासकानाहूय तैरनुष्ठितं नित्याह्निकक्रमं पूजाक्रमं विशेषपूजाविधींश्चालोड्य आन्ध्रलिपिना पुस्तकं मुद्रितवन्तः। तत्र ललिताक्रम-श्चण्डीक्रमश्च विस्तरतः प्रपञ्चितः। एतत्क्रममनुसृत्यैव बहुभिः पूजादिकं क्रियते। अधुनैतत् पुस्तकं न लभ्यते, प्राचीनोपासकगृहेष्वेव दृश्यते। तन्नूतनवावरणपूजा-विधिरन्यैरपि मुद्रितो विक्रीयते। एतत् कार्वेटनगरपुस्तकं समीपकाले मुद्रितमपि प्राचीनसम्प्रदायमनुसृत्य लिखितत्वात् प्राचीनदाक्षिणात्यपरम्परागतपूजाविधिं सम्यग् उपदिशति। काञ्चीक्षेत्रे दुर्वासोमहर्षिभिरनुगृहीतः सौभाग्यचिन्तामणि-रिति ग्रन्थः श्रीकाञ्चिकामाक्ष्याः पूजाक्रमम्, उपासनाक्रमम्, दीक्षाक्रममित्यादिविषयान् विस्तरशो बोधयति। इदमनुसृत्य बहव उपासकाः पूजां कुर्वन्ति। करुणानन्द-मण्डलीति नाम्ना च तेषां संघः मद्रपुर्यामेव वर्तते। चिदम्बरक्षेत्रे पतञ्जलिमहर्षिभि-र्निर्मितः पतञ्जलिपूजाक्रमो देवपूजकैर्दीक्षितैरुपयुज्यते। तन्नूतक्रममनुसृत्य प्रतिदिनं रात्रौ द्वितीयपूजाकाले "रहस्यपूजा" इति यन्त्रपूजा क्रियते। दक्षिणकाञ्चीक्षेत्रेऽगस्त्य-महर्षिकृतपूजाकल्पोऽर्चकानां समीपे वर्तते। तत्पन्थानमनुसृत्य शारदनवरात्रि-समये त्रिपुरसुन्दरीपूजाऽनुष्ठीयते। केरलेषु देवीनवावरणपूजा न प्रसिद्धा, किन्तु लोल्लक्ष्मीधरैर्निर्दिष्ट आन्तरपूजारूपसमयमार्गो नम्बूदिरिब्राह्मणैरनुष्ठीयते।

बाह्यपूजायां शान्तिदुर्गापूजैव केरलेषु प्रसिद्धा। विशिष्टदिवसेष्वाषाढमासे भृगुवासरेषु जन्मदिनेषु शान्तिदुर्गापूजाऽनुष्ठीयते; "भगवतीसेवा" इत्येतदुच्यते। भूमौ विस्तरेण यन्त्रं विलिख्य दीपत्रयं निधाय तेषु क्रमेण गुरुगणपतिदुर्गादीनां बाह्यषोडशोपचारविधिना पूजां कुर्वन्ति। श्रीललितादेव्याः पूजाक्रमेषु तन्त्रेषत् क्रमभेदः दृश्यते। एकस्मिन् विषये सर्वेऽप्यैकमत्यं प्रदर्शयन्ति, तत् पञ्चमकाराणामदर्शनमेव। एतदेव दक्षिणोत्तरयोः पूजाविधौ भेदः। तन्त्रेषु कल्पसूत्रादिषु च मकाराणां निर्देशे कृतेऽपि कथं दक्षिणमार्गप्रवर्तका महर्षयस्तन्नोपदिष्टवन्त इति वक्तव्यम्। मकारपञ्चकस्य तत्त्वमेभिरङ्गीक्रियते, न तु द्रव्यरूपेण पूजायामुपयुज्यन्ते। मकारपञ्चकमुपयुञ्जानानामुपासकानां विषये द्वेषबुद्धिर्वा अलक्ष्यबुद्धिर्वा दाक्षिणात्यानां नास्ति। उपासकधुरन्धरान् प्रति प्रणाम एव। श्रीचिदानन्दनाथा उपन्यासेषूपासनाभेदविचारो न कर्तव्यः, सर्वे पन्थान ऋषिप्रोक्ताः, तत्तत्कुलाचाराननुसृत्य उपासकधुरन्धरा वर्तन्ते। तेषु तारतम्यं नास्ति। सर्वेऽस्माकं पूज्याः। क्रमभेदाल्लक्ष्यभेदो नास्ति। सर्वे क्रमाः सहस्रनामादिष्वङ्गीकृता इति बुद्ध्वोद्घोषितवन्तः।

मकारपञ्चकानां तत्त्वाङ्गीकारे प्रत्यक्षतोऽनुष्ठानाभावे कारणं वक्तव्यं भवति। एतद्विमर्शनं सम्यक्कृतं श्रीचिदानन्दनाथैः स्वकृतश्रीविद्यासपर्यावासनाविमर्शनामकग्रन्थे। वामाचार-दक्षिणाचार-प्रतिपादकग्रन्थाः सर्वेऽपि दूर्वासःप्रभृतिभिर्महर्षिभिरनुगृहीताः, नाधुनिकैः। वामदक्षिणमार्गौ पुराणेषु सहस्रनामादिषु चोच्येते। अनादिकालमारभ्य आभ्यां क्रमाभ्यां देवीपूजा क्रियते। आधुनिकसंघक्षालनकर्तृभिः (सोशल रिफार्मर) कल्पिते न। तस्मात् प्रामाण्याप्रामाण्यचर्चा न कर्तव्या, मार्गद्वयमप्यङ्गीकार्यमेव। यस्य यन्मार्गं परम्परागतं गुरुवर्यैरुपदिष्टं तथाचरणीयमेव। शास्त्रशैलीमनुसृत्य कारणमन्वेष्टव्यम्। मकारपञ्चकप्रतिपादकतन्त्रेषु विस्तरतो द्रव्यादिविचारानन्तरं तत्त्वविचारः क्रियते। तत्त्वज्ञानस्यावश्यकतां चोद्घोषयन्ति। अधिकारिपुरुषाणां लक्षणं निर्दिशन्ति। अनधिकारिणां सेवायामधोपतनमपि सम्यक् प्रकटीकुर्वन्ति। तस्माद् मार्गद्वयेऽधिकार्यनाधिकारिविचारणापि कर्तव्या स्यात्। देवीसपर्या चिदानन्दनाथानां मते मनननिदिध्यासनरूपा। उपासकाश्च मुख्यतो मुमुक्षवोऽधिगतवेदान्तविचारा निवृत्तिपराः, न प्रवृत्तिपराः; प्रवृत्तिमार्गे वर्तमाना न फलाभिसन्धिं तिरस्कुर्वन्ति। तेषां सम्पूर्णफलप्राप्तये पञ्चमकारा अनुष्ठेया एव। एषा पूजा कर्मकाण्डभागः, मुमुक्षुभिः क्रियमाणपूजा ज्ञानभागरूपा। तस्मात् पञ्चमकाराः प्रत्यक्षतो नानुष्ठेयाः, किन्तु सुधादेवीध्यानावसरे देव्याः करद्वये वर्तमानामृतकलशपिशितानुसन्धाने भोग्यरूपपदार्थसम्बन्धाज्जायमानानन्दं सर्वमपि मनःप्रतिबिम्बितचिदानन्दमिवेति मननं कार्यमिति सूचितम्। प्रतिमानन्तरमर्घ्यमपि ज्ञानमेवेति प्रतिपादितं चिदानन्दनाथैः। एतज्ज्ञानेनानुभूयमानभोग्यपदार्थजनितमानन्दमपि चिदानन्दप्रतिबिम्बमेवेति सूचयितुमिव पञ्चमकार-

द्रव्यशोधनपञ्चमन्त्राः पठ्यन्ते कलाभिमन्त्रणानन्तरम्। एतदेव कार्वेटनगरपुस्तक-सम्प्रदायः। दुर्वासःकल्पे पञ्चमकारप्रस्ताव एव नास्ति। पतञ्जलिकल्पे विशेषार्घ्यमपि नास्ति। पूजाभेदोऽपि विचार्यमाणे परमकारुणिकैर्महर्षिभिरनुग्रहार्थं निर्दिष्ट इति दृश्यते। एषामाहार्यविधौ मत्स्यादिपदार्था न निन्दिताः। देवतार्पणानन्तरमेवाङ्गी-कर्तव्या इति प्रथममुक्त्वा वैराग्यादिसाधनप्राप्त्यनन्तरं तेषां तत्त्वबोधं कुर्वन्ति। यथा श्रुतय आरम्भदशायां कर्मकाण्डचोदनां कृत्वा तदनन्तरं "प्लवा ह्येते अदृढा यज्ञरूपाः" इत्यादिवाक्यैस्तेषु विरतिं सूचयित्वा तत्त्वमस्यादिवाक्यैर्मोक्षप्राप्तिं प्रत्युपदिशन्ति, एवं तन्त्राण्यप्यारम्भदशायां मकारपञ्चकसेवामुक्त्वा पश्चात् तत्त्वबोधेन तेषु विरतिमुत्पादयन्ति। दूर्वासःप्रभृतिकृततन्त्रग्रन्था मधुमत्स्यादीन् ये न सेवन्ते तानुद्दिश्य निर्मिता इति वक्तव्यम्। एवंविधपूजा प्राचीनकाले सर्वत्रानुष्ठि-तेति च दृश्यते। श्रीकालिदासादयोऽपीममेव मार्गमनुसृतवन्त इति दृश्यते। एतच्च "क्षीराज्यमध्वासवैः" इति वर्णचतुष्टयस्य द्रव्यनिर्देशेन सूच्यते, अधुना दक्षिण-देशे विशेषत उपयुज्यते च। अलमेवंविधविचारेण।

पञ्चमकाराणां सेवाविषयेऽन्यदपि कारणमुच्यते। मकारपञ्चकं जीवन्मुक्तैरेवो-पयोक्तव्यमिति प्रामाणिकानामाशयः। जीवन्मुक्तानां विधिनिषेधौ न स्तः। तेषां सर्वासु क्रियास्वात्मदृष्टिरेव वर्तते। तद्विधा निष्ठा सामान्योपासकैः प्रार्थ्यते जपो जल्पमित्यादिवाक्यैः। सामान्योपासका आरुरुक्षवः। जीवन्मुक्ता-स्त्वारूढाः। आरुरुक्षुभिर्विधिनिषेधावनुष्ठेयौ, उल्लङ्घने पातित्यदोषः। तस्माद् आरुरुक्षुभिरुपासकैः पञ्चमकारसेवा न कर्तव्येत्यभिज्ञानां मतम्। तस्माद् गुरूपदिष्टमार्गेण जपपूजादिकं बहुकालं निर्वर्त्य तदनन्तरं पूजाधुरन्धरान् धीर-पुरुषानुपसृत्य यदि तैः परीक्षानन्तरमनुज्ञा दीयते, तदा मकारसेवा कर्तव्येति वामाचारधुरंधरैरप्युच्यते।

वामदक्षिणमार्गयोर्महर्षिभिः प्रणीतत्वान्न तयोरारम्भकालनिर्णयः कार्यः, अनादित्वात्। वामदक्षिणपदयोरर्थविचारो बहुभिर्बहुधा क्रियते, तथाप्येतदुच्यते— श्रीविद्यारत्नसूत्रनिर्मातृभिर्गौडपादाचार्यैरङ्गीकृतमुमुक्षुजनोपयोगिन्येषा मन्त्रविद्या विन्ध्याचलनिवासिभ्यो गोविन्दभगवत्पादेभ्य उपदिष्टा। तेषां शिष्यैः श्रीभगवत्पादा-दिभिर्दक्षिणदेशे विशेषतः प्रचारीकृता। तस्माद् विन्ध्याचलनिवासिनां पूर्वदिङ्-मुखानां दक्षिणे दृश्यमानो मार्गो दक्षिणमार्गः, वामे दृश्यमानो मार्गो वाममार्ग इति साधारणरीत्या तैरुक्तमित्यङ्गीकारे सर्वं समञ्जसमेवेति मन्ये। क्षम्यतां यदि नाङ्गीक्रियते॥



